# ॥ शिशुपालवधम् ॥



## ॥ श्रीमाघकविकृतम् ॥



साधारणविद्यावृद्ध्यर्थकसमाजाधिपतोश्रितम्



श्रीमत्तारानाथतर्कवाचस्पतिभट्टाचार्य्यादिविबुधवरैर्विशोधितम्



श्रीमद्दत्तवंशावतंसश्रीबाबूरसमयदत्तमहाशयानामाज्ञया
कलिकाताराजधान्यां सारसुधानिधिमुद्रायन्त्रे
मुद्रितमभूत्



अङ्काङ्काद्रिशशाङ्कसम्मितशके माघस्य पूर्व्वं दलं
यन्त्रे सारसुधानिधौ सुललितं सर्व्वङ्कषालङ्कृतम् ।
तारानाथधरामरादिविबुधैः श्रीलैः श्रमाच्छोधितं
श्रीमद्दत्तकुलाग्रणीरसमयादेशादभून्मुद्रितम् ॥

# ॥ शिशुपालबधम् ॥



## ॥ श्रीमाघकविकृतम् ॥



साधारणविद्यावृद्ध्यर्थकसमाजाधिपतीक्षितम्



श्रीमत्तारानाथतर्कवाचस्पतिभट्टाचार्य्यादिविबुधवरैर्विशोधितम्



श्रीमद्दत्तवंशावतंसश्रीबाबूरसमयदत्तमहाशयानामाज्ञया
कलिकाताराजधान्यां सारसुधानिधिमुद्रायन्त्रे
मुद्रितमभूत्



अङ्काङ्काद्रिशशाङ्कसम्मितशके माघस्य पूर्व्वं दलं
यन्त्रे सारसुधानिधौ सुललितं सर्व्वाङ्गसालङ्कृतम् ।
तारानाथधरामरादिविबुधैः श्रीलैः श्रमाच्छोधितं
श्रीमद्दत्तकुलाग्रणीरसमयादेशादभून्मुद्रितम् ॥

॥ श्रीगणेशाय नमः ॥



इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥ १ ॥

दन्ताञ्चलेन धरणीतलमुन्नमय्य
पातालकेलिषु धृतादिवराहलीलम् ।
उल्लाघनोत्कणफणाधरगीयमान
क्रीडावदानमिभराजमुखं नमामः ॥ २ ॥

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्व्वदा सर्व्वदास्माकं सन्निधिं सन्निधिं क्रियात् ॥ ३ ॥

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासकी
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥ ४ ॥

मल्लिनाथः सुधीः सोऽयं महोपाध्यायशब्दभाक् ।
विधत्ते माघकाव्यस्य व्याख्यां सर्व्वङ्कषाभिधाम् ॥ ५ ॥

ये शब्दार्थपरीक्षणप्रणयिनो ये वा गुणालङ्क्रिया
शिक्षाकौतुकिनो विहर्त्तुमनसो ये च ध्वनेरध्वगाः ।
क्षुभ्यद्भावतरङ्गिते रससुधापूरे निमङ्क्तुं च ये
तेषामेव कृते करोमि विवृतिं माघस्य सर्व्वङ्कषाम् ॥ ६ ॥

नेतास्मिन्यदुनन्दनः स भगवान्वीरप्रधानोरसः
शृङ्गारादिभिरङ्गवान्विजयते पूर्णा पुनर्वर्णना ।
इन्द्रप्रस्थगमाद्युपायविषयश्चैद्यावसादः फलं
धन्यो माघकविर्वयन्तु कृतिनस्तत्सूक्तिसंसेवनात् ॥ ७ ॥
इहान्वयमुखेनैव सर्व्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥ ८ ॥



॥ श्रीगणेशाय नमः ॥

# ॥ शिशुपालवधम् ॥

## ॥ प्रथमः सर्गः ॥

श्रियः पतिः श्रीमति शासितुं जग
ज्जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शावतरन्तमम्बरा
द्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥ १ ॥

अथ तत्रभवान् माघकविः काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे। इत्यालङ्कारिकवचनप्रामाण्यात् काव्यस्यानेकश्रेयःसाधनताङ्काव्यालापांश्च वर्जयेदिति निषेधस्यासत्काव्यविषयताञ्च पश्यन् शिशुपालबधाख्यं काव्यं चिकीर्षुः चिकीर्षितार्थाविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनत्वात् आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखमित्याशीराद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च काव्यफलं शिशुपालबधबीजभूतं भगवतः श्रीकृष्णस्य नारददर्शनरूपं वस्तु

आदौ श्रीशब्दप्रयोगपूर्व्वकं निर्द्दिशन् कथामुपक्षिपति । श्रियइति । तत्रादौ श्रीशब्दप्रयोगात् वर्णगणादिशुद्धेरभ्युच्चयः । तदुक्तम् । देवतावाचकाः शब्दाये च भद्रादिवाचकाः । ते सर्व्वे नैव निन्द्याः स्युर्लिपितोगणतोऽपि वेति । श्रियः लक्ष्म्याः पतिः अनेन रुक्मिणीरूपया श्रिया समेतइति सूचितम् । राघवत्वे भवेत् सीता रुक्मिणी कृष्णजन्मनीति विष्णुपुराणात् । जगन्निवासो जगतामाधारः कुक्षिस्थाखिलभुवनइति यावत् तथापि जगत् लोकं शासितुं दुष्टनिग्रहशिष्टानुग्रहाभ्यां नियन्तुम् श्रीमति लक्ष्मी युक्ते वसुदेवसद्मनि वसुदेवरूपिणः कश्यपस्य वेश्मनि वसन् कृष्ण रूपेण तिष्ठन् हरिर्विष्णुः अम्बरादवतरन्तमायान्तं इन्द्रसन्देश कथनार्थमिति भावः हिरण्यस्य गर्भोहिरण्यगर्भोब्रह्मा ब्रह्मा ण्डप्रभवत्वात् तस्याङ्गभुवं तनूजं अथवा तस्याङ्गादवयवादुत्सङ्गा ख्याद्भवतीति हिरण्यगर्भाङ्गभूः तं मुनिं नारदमित्यर्थः । उत्सङ्गा न्नारदोजज्ञे दक्षोऽङ्गुष्ठात्स्वयम्भुवइति भागवतात् । ददर्श कदाचि दिति शेषः । अत्रात्यीयसि वसुदेवसद्मनि सकलजगदाश्रयतया महीयसोहरेराधेयत्वकथनादधिकप्रभेदोऽलङ्कारः । तदुक्तम् । आधारा धेययोरानुरूप्याभावोऽधिकोमतइति । जगन्निवासस्य जगदेक देशनिवासित्वमिति विरोधश्च । तथा तकारसकारादेः केवलस्यासकृदा वृत्त्या जगज्जगदिति सकृद्व्यञ्जनद्वयसादृश्याच्च वृत्त्यनुप्रासभेदौ शब्दा लङ्कारौ । एषाञ्चान्योन्यनैरपेक्ष्येणैकत्र समावेशात्तिलतण्डुलवत् संसृष्टिः । सर्गेऽस्मिन् वंशस्थवृत्तम् । जतौ तु वंशस्थमुदीरितं जरा विति लक्षणात् ॥ १ ॥

गतं तिरश्चीनमनूरुसारथेः
प्रसिद्धमूर्द्धज्वलनं हविर्भुजः
पतत्यधोधाम विसारि सर्व्वतः
किमेतदित्याकुलमीक्षितं जनैः ॥ २ ॥

तदानीं जनैर्विस्मयादीक्षितुं प्रवृत्तमित्याह । गतमिति । अविद्यमानावूरू यस्य स अनूरुः स सारथिर्य्यस्य तस्यानूरुसारथेः सूर्य्यस्य गतं गतिः । भावे क्तः । तिरश्चीनं तिर्य्यग्भूतं विभाषाऽञ्चेरदिक् स्त्रियामिति तिर्य्यक्शब्दादञ्चत्यन्तात्प्रातिपदिकात् स्वार्थे खप्रत्ययः । हविर्भुजोऽग्नेरूर्द्धज्वलनं ऊर्द्धस्फुरणं प्रसिद्धं इदन्तु सर्व्वतोविसारि धामाधः पतति किमेतदिति सूर्य्याग्निविलक्षणमदृष्टपूर्व्वमिदं धाम किमात्मकं स्यादित्याकुलं विस्मयात् सम्भ्रान्तं यथा तथा जनैरीक्षितं ईक्षणं कृतम् । सकर्म्मकादप्यविवक्षिते कर्म्मणि क्तः । प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्म्मिका क्रियेति वचनात् । केचित् कर्म्मणि क्तान्तं कृत्वा ईक्षितं मुनिं ददर्शेति पूर्व्वेण योजयन्ति । अत्रोपमेयस्य मुनिधाम्नः सूर्य्याग्निभ्यामुपमानाभ्यामधःप्रसरणधर्म्मेणाधिक्यवर्णनात् व्यतिरेकः । तदुक्तं काव्यप्रकाशे । उपमानाद्यदन्यस्य व्यतिरेकः स एव स इति । धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोरिति हेमचन्द्रः ॥ २ ॥

दिवाकरस्तु वृत्तरत्नाकरटीकायां प्रथमपठितेन

द्विधाकृतात्मा किमयं दिवाकरो
विधूमरोचिः किमयं हुताशनः ।

इति चरणद्वयेन सह इममेव श्लोकं षट्पदच्छन्दस उदाहरण

चयस्त्विषामित्यवधारितं पुरा
ततः शरीरीति विभाविताकृतिम् ।
विभुर्विभक्तावयवं पुमानिति
क्रमादमुं नारद इत्यबोधि सः ॥ ३ ॥

माह तत्राद्यचरणद्वयेन सन्देहाकारोगतमिति तन्निरासस्य बोध्य इत्युपरिष्टात् ॥

अथ भगवान्निरनैषीदित्याह । चयइति । विभुस्तत्त्वावधारण समर्थः स हरिः पुरा प्रथमं त्विषां चय इत्यवधारितं तेजःपुञ्जमात्र त्वेन विनिश्चितं ततः प्रत्यासन्ने विभाविता विस्पष्टा आकृतिः संस्थानं यस्य तं तथोक्तं अतएव शरीरी चेतन इत्यवधारितम् ततोविभक्ताः विविच्य गृहीताः अवयवामुखादयोयस्य तं तथो क्तम् अतएव पुमानित्यवधारितं अमुमागच्छन्तं व्यक्तिविशेषं नारदं वास्तवाभिप्रायेणेति पुंलिङ्गतोनिर्व्वाहः । क्रमात् पूर्व्वोक्त सामान्यविशेषज्ञानक्रमेण । लोकदृष्ट्येदमुक्तम् हरिस्तु सर्व्वं वेदेत्रेति तत्त्वम् । नारदइत्यबोधि नारदं बुद्धवानित्यर्थः । नारदस्य कर्म्मत्वेऽपि निपातशब्देनाभिहितत्वान्न द्वितीया । तिङ्कृत्सुप सङ्ख्यानस्योपलक्षणत्वात् । यथाह वामनः।निपातेनाभिहिते कर्म्मणि न कर्म्मविभक्तिः । परिगणनस्य प्रायिकत्वादिति । बुध्यतेः कर्त्तरि लिङ् दीपजनेत्यादिना चिण् चिणोलुगिति लुक् । अत्र विभाविताकृतिं विभक्तावयवमित्यादिना आकृतिविभावनावयव विभावनयोः पदार्थयोर्व्विशेषणवृत्त्या शरीरित्वपुंस्त्वावधारण हेतुत्वेनोपन्यासात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । हेतोर्व्वाक्य पदार्थत्वे काव्यलिङ्गमुदाहृतमिति लक्षणात् ॥ ३ ॥

नवानधोऽधोबृहतः पयोधरान्
समूढकर्पूरपरागपाण्डरम् ।
क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना
स्फुटोपमं भूतिसितेन शम्भुना ॥ ४ ॥

अथ सप्तभिर्मुनिं विशिनष्टि । नवानित्यादि कीदृशममुं नवान् सद्यःसम्भृतसलिलानिति यावत् बृहतोविपुलान् पयोधरान् मेघान् अधोऽधः मेघानां समीपाधःप्रदेशे स्थितमिति शेषः । उपर्य्यध्यधसः सामीप्ये इति द्विर्भावः तद्योगे द्वितीया उभसर्व्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिष्वित्यादिवचनात् । समूढः पुञ्जीकृतः समूढः पुञ्जिते भुग्ने इति विश्वः। कर्पूरस्य परागश्चूर्णं तद्वत्पाण्डरं अतएव क्षणं मेघस्पर्शावस्थानक्षणे। अत्यन्तसंयोगे द्वितीय । क्षणेषु ताण्डवोत्सवेषु । निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणइत्युभयत्राप्यमरः । भूत्या भस्मना सितेन । भूतिर्भस्मनि सम्पदीत्यमरः । शम्भुना स्फुटा उपमा सादृश्यं यस्य तं स्फुटं शम्भूपममित्यर्थः । सापेक्षत्वेऽपि समासः । सदृशपर्य्यायपयोस्तुलोपमाशब्दयोरतुलोपमाभ्यामिति निषेधात्सादृश्यवाचित्वे तृतीयेत्याहुः । केचिदिमं श्लोकं चयस्त्विषामित्यतः प्राक् लिखित्वा व्याचक्षते तेषां पुंस्त्वावधारणात् प्राक् तेजःपिण्डमात्रस्य शम्भूपमौचित्यञ्चिन्त्यम् ॥ ४ ॥

दधानमिति पुनश्च अम्भोरुहकेसरद्युतीः पद्मकिञ्जल्कप्रभापिशङ्गीरित्यर्थः जटादधानं स्वयन्तु शरच्चन्द्रमरीचिरिव रोचिर्यस्य तं धवलमित्यर्थः अतएव विपाकेन परिणामेन

दधानमम्भोरुहकेसरद्युती
र्जटाः शरच्चन्द्रमरीचिरोचिषम् ।
विपाकपिङ्गास्तुहिनस्थलीरुहो
धराधरेन्द्रं व्रततीततीरिव ॥ ५ ॥

पिशङ्गमौञ्जीयुजमर्ज्जुनच्छविं
वसानमेणाजिनमञ्जनद्युति ।
सुवर्णसूत्राकलिताधराम्बरां
विडम्बयन्तं शितिवाससस्तनुम् ॥ ६ ॥

पिङ्गाः पिङ्गलाः तुहिनस्थल्यां रोहन्तीति तुहिनस्थलीरुहः व्रतती ततीर्लताव्यूहान् । वल्ली तु व्रतती लतेत्यमरः । दधानं धराधरेन्द्रोहिमवान् तुहिनस्थलीतिलिङ्गात् नारदोपमानत्वाच्च तमिव स्थितम् ॥ ५ ॥

पिशङ्गेति । पुनः मुञ्जस्तृणविशेषः तन्मयी मेखला मौञ्जी पिशङ्गा मौञ्ज्यायुज्यतइति पिशङ्गमौञ्जीयुक् तं । सत्सूद्विषेत्यादि नाक्किप् स्त्रियाः पुंवदिति पिशङ्गशब्दस्य पुंवद्भावः । अर्ज्जुनच्छविन्धवलकान्तं । वलचोधवलोऽर्ज्जुनइत्यमरः । अञ्जनद्युति अञ्जनवर्णं एणाजिनं कृष्णमृगचर्म्म वसानं आच्छादयन्तं । वस आच्छादनइति धातोः शानच् । सुवर्णसूत्रेण कनकमेखलया आकलितं बद्धम् अधराम्बरं अन्तरीयकं यस्यास्तां शितिवाससो नीलाम्बरस्य रामस्य तनुं विडम्बयन्तमनुकुर्व्वाणमित्यार्थीयमुपमा ॥ ६ ॥

विहङ्गराजाङ्गरुहैरिवायतै
र्हिरण्मयोर्व्वीरुहवल्लितन्तुभिः ।
कृतोपवीतं हिमशुभ्रमुच्चकै
र्घनं घनान्ते तडितां गुणैरिव ॥ ७ ॥
निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा
लसद्बिसच्छेदसिताङ्गसङ्गिना ।
चकासतं चारुचमूरुचर्म्मणा
कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥ ८ ॥

विहङ्गेति । पुनः विहङ्गराजाङ्गरुहैरिव गरुत्मल्लोमतुल्यैः कैः आयतैर्दीर्घैः हिरण्यस्य विकारो हिरण्मयी । दाण्डिनायनेत्यादिना मयटि यलोपनिपातः । तस्या मुर्व्यां रुहारूढाः । इगुपधालक्षणः कप्रत्ययः। तासां वल्लीनां तन्तुभिस्तन्तुल्यैः सूक्ष्मावयवैः उपादानगुणात् हिरण्मयैः कृतोपवीतं शोभार्थं कल्पित यज्ञसूत्रं स्वयं हिमशुभ्रं अतएव घनान्ते शरदि तडितां गुणै रुपलक्षितं । तडित्सौदामनीविद्युदित्यमरः । उच्चैरेव उच्चकै रुन्नताङ्गं मेघमिव स्थितम् ॥ ७ ॥

निसर्गेति । पुनः निसर्गात् स्वभावादेव चित्राणि शवलानि उज्ज्वलानि भास्वराणि सूक्ष्माणि पक्ष्माणि लोमानि यस्य तेन लसन् यो बिसच्छेदो मृणालखण्डः । छेदः खण्डोऽस्त्रियामिति त्रिकाण्डशेषः । तद्वत्सिते अङ्गे वपुषि सङ्गिना सक्तेन चारुणा, चमूरुचर्म्मणा मृगत्वचा कुथेन पृष्ठास्तरणेन । प्रवेण्या

अजस्रमास्फालितवल्लकीगुण-
क्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ।
पुरः प्रवालैरिव पूरितार्द्धया
विभान्तमच्छस्फटिकाक्षमालया ॥ ९ ॥

क्षारणं वर्णः परिस्तोमः कुथोद्वयोरित्यमरः । इन्द्रवाहनं नागेन्द्रं ऐरावतमिव चकासतं शोभमानम् इन्द्रस्य वाहनमिति स्वस्वामिभावसम्बन्धविवक्षितत्वात् वाहनमाहितादिति न णत्वम् । यथाह वामनः नेन्द्रवाहनशब्दे णत्वमाहितत्वस्याविवक्षितत्वादिति । चकासतेः शतरि नाभ्यस्ताच्छतुरिति नुमभावः । जक्षित्यादयः षडित्यभ्यस्तसंज्ञा ॥ ८ ॥

अजस्रमिति । पुनरजस्रं प्राचुर्य्येणास्फालितास्ताडिताः सौष्ठव परीक्षार्थं न्युब्जाङ्गुष्ठेन तन्त्रीताडनं प्रसिद्धं तेषां वल्लकीगुणानां वीणातन्त्रीणां क्षतेन सङ्घर्षणेन उज्ज्वलैरङ्गुष्ठनखांशुभिर्भिन्नया मिश्रया तद्रागरक्तयेत्यर्थः अतएव पुरः पुरोभागे प्रवालैः र्विद्रुमैः । अथ विद्रुमः पुंसि प्रवालं पुन्नपुंसकमित्यमरः । पूरितार्द्धयेव स्थितया अच्छस्फटिकाक्षमालया स्वच्छस्फटिकानां मालया जपमालयेत्यर्थः । अच्छोभल्लुके स्फटिकेऽमलेऽच्छाभिमुखेऽव्ययमिति हेमचन्द्रः । तथा प्रसिद्धस्फटिकग्रहणात् ऋषे र्मोक्षार्थित्वं व्यज्यते । स्फटिकोमोक्षदः परमिति मोक्षार्थिनां स्फटिकाक्षमालाभिधानात् । विभान्तं भासमानं । भातेः शतृप्रत्ययः अत्र नखांशुभिन्नयेति स्वगुणत्यागेनान्यगुणस्वीकारलक्षणस्तद्गुणालङ्कारउक्तः । तद्गुणः स्वगुणत्यागादिति ॥ ९ ॥

रणद्भिराघट्टनया नभस्वतः
पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।
स्फुटीभवद्ग्रामविशेषमूर्च्छना
मवेक्षमाणं महतीं मुहुर्मुहुः ॥ १० ॥

रणद्भिरिति । पुनर्नभस्वतो वायोराघट्टनया आघातेन पृथग सङ्कीर्णं रणद्भिर्ध्वनद्भिः अनुरणनोत्पद्यमानैरित्यर्थः । श्रुत्यारब्ध मनुरणनं स्वर इति लक्षणात् । तदुक्तं रत्नाकरे । श्रुत्यनन्तर भावी यः स्निग्धोऽनुरणनात्मकः । स्वतो रञ्जयति श्रोतुश्चित्तं स स्वर उच्यत इति । श्रुतिर्नाम स्वरारम्भकावयवः शब्दविशेषः । तदुक्तं । प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः सम्प रिज्ञेया स्वरावयवलक्षणेति । विभिन्नानि प्रतिनियतसङ्ख्यया व्यव स्थितानि श्रुतीनां मण्डलानि समूहा येषां तैर्विभिन्नश्रुतिमण्डलैः श्रुतिसङ्ख्यानियमश्च दर्शितः । चतुश्चतुश्चतुश्चैव षड्जमध्यम पञ्चमाः । द्वे द्वे निषादगान्धारौ त्रिस्त्रिर्ऋषभधैवतौ । स्वराः षड्जा दयः सप्तोक्तलक्षणाः । तदुक्तं श्रुतिभ्यः स्युः स्वराः षड्जर्षभ गान्धारमध्यमाः । पञ्चमो धैवतश्चाथ निषाद इति सप्त ते । तेषां संज्ञाः सरिगमपधनीत्यपरा मता इति । तैः स्वरैः स्फुटीभवन्त्यो ग्रामविशेषाणां षड्जाद्यपरनामकानां स्वरसङ्घातभेदानां त्रया णां मूर्च्छना स्वरारोहावरोहक्रमभेदा यस्यां तां महतीं निज वीणां । विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती । महती नारदस्य स्यात्सरस्वत्यास्तु कच्छपीति वैजयन्ती । मुहुर्मुहुरवेक्षमाणं । तन्त्रीयोजनाभेदलक्षणमहिम्ना पुरुषप्रयत्नमन्तरेणैवाविसंवादं

  

निवर्त्त्य सोऽनुव्रजतः कृतानती
नतीन्द्रियज्ञाननिधिर्नभस्सदः ।
समासदत्सादितदैत्यसम्पदः
पदं महेन्द्रालयचारु चक्रिणः ॥ ११ ॥

ध्वनतीति कौतुकादनुसन्दधानमित्यर्थः । अथ ग्रामलक्षणम् । यथा कुटुम्बिनः सर्व्वेऽप्येकीभूताभवन्ति हि । तथा स्वराणां सन्दोहोग्रामइत्यभिधीयते । षड्जग्रामोभवेदादौ मध्यमग्राम एव च । गान्धारग्रामइत्येतत् ग्रामत्रयमुदाहृतमिति । तथाच नन्द्यावर्त्तोऽथ जीमूतः सुभद्रोग्रामकास्त्रयः । षड्जमध्यमगान्धारास्त्रयाणां जन्महेतवइति । मूर्च्छनालक्षणञ्च । क्रमात्स्वराणां सप्तानामारोहश्चावरोहणं । सा मूर्च्छेत्युच्यते ग्रामस्था एताः सप्त सप्त च । ग्रामत्रयेऽपि प्रत्येकं सप्तसप्तमूर्च्छनाइत्येकविंशतिर्मूर्च्छना भवन्ति । तत्र नामानि तु नानपेक्षितमुच्यतइति प्रतिज्ञा भयान्न लिख्यन्ते इति सर्व्वमवदातम् । अत्र पुंव्यापारमन्तरेण स्वराद्याविर्भावोक्त्या कोऽपि लोकातिक्रान्तोऽयं शिल्पसौष्ठवातिशयो वीणायाः प्रतीयते । तेन सह स्वतःप्रसिद्धातिशयस्याभेदेनाध्यवसितत्वात् । तन्मूलातिशयोक्तिरलङ्कारः । सा च महत्याः पुंव्यापारं विना मूर्च्छाद्यसम्बन्धेऽपि सम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपतया पुंव्यापाराख्यरूपकारणं विनापि मूर्च्छनादिकार्य्योत्पत्तिद्योतनाद्विभावना व्यज्यतइत्यलङ्कारेणालङ्कारध्वनिरिति सङ्क्षेपः ॥ १० ॥

निवर्त्त्येति । अतीन्द्रियादिन्द्रियमतिक्रान्तादेशकालस्वरूपादिप्रकृष्टार्थाः । अत्यादयः क्रान्ताद्यर्थे द्वितीययेतिसमासः । द्विगु

पतत्पतङ्गप्रतिमस्तपोनिधिः
पुरोऽस्य यावन्न भुवि व्यलीयत ।
गिरेस्तडित्वानिव तावदुच्चकै
र्जवेन पीठादुदतिष्ठदच्युतः ॥ १२ ॥

प्राप्तापन्नालंपूर्व्वगतिसमासेषु परलिङ्गताप्रतिषेधो वक्तव्य इति वि शेष्यलिङ्गत्वं । तेषां ज्ञानं तस्य निधिः सर्व्वार्थद्रष्टेत्यर्थः । कृतानतीन् कृतप्रणामान् अनुव्रजतोऽनुगच्छतः नभसि आकाशे सीदन्ति गच्छ न्तीति नभःसदः सुरान् । सत्सूद्विषदित्यादिना क्विप् । निवर्त्य प्रति षिध्य स मुनिः सादितदैत्यसम्पदः सादिताः विध्वस्तीकृताः दैत्यानां सम्पदो येन तस्य चक्रिणः कृष्णस्य पदं स्थानं महेन्द्रालयचारु इन्द्रभवनमिव आस्रमानं समासदत् । समाङ्पूर्व्वात् षद्धातो र्लङ् । अत्र नतीनती पदः पदमिति च द्वयोर्व्यञ्जनयुग्मयोरसकृदा वृत्त्या छेकानुप्रासः अन्यत्र वृत्त्यनुप्रासः इत्यनयोः संसृष्टिः ॥ ११ ॥

पतदिति । पतन् यः पतङ्गः सूर्य्यः स प्रतिमा उपमानं यस्य सः । पतङ्गौ पक्षिसूर्य्यौ चेत्यमरः । तपोनिधिर्मुनिः अस्य हरेः पुरोभुवि पुरः प्रदेशे यावत् न व्यलीयत नातिष्ठत् । लिङ् गताविति धातोर्दैवादिकात्कर्त्तरि लङ् । तावदच्युतो गिरेः शैलात् तडितोऽस्य सन्तीति तडित्वान् मेघ इव । मादुपधायाश्च मतोर्व्वोऽयवादिभ्य इति मतुपो मकारस्य वकारः तसौ मत्वर्थे इति भसंज्ञायामेकसंज्ञाधिकारेणापदत्वान्न जश्त्वं । उच्चकै रुन्नतात्पीठात् आसनात् जवेनोदतिष्ठत् । मुनिचरणस्य भूस्प र्शात्प्रागेव स्वयमुत्थितवान् । ऊर्द्ध्वम्प्राणाह्युत्क्रामन्ति यूनः

अथ प्रयत्नोन्नमितानमत्फणै-
र्धृते कथञ्चित्फणिनां गणैरधः ।
न्यधायिषातामभिदेवकीसुतं
सुतेन धातुश्चरणौ भुवस्तले ॥ १३ ॥

स्थविरश्चायति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते इति शास्त्रमनुस्मरन्निति भावः । ऊर्द्ध्वोऽनूर्द्ध्वकर्म्मणीति नियमादिहोर्द्ध्व कर्म्मणि नात्मनेपदं पतत्पतङ्ग इत्यत्र पतङ्गस्य पतनासम्भवादियमभूतोपमा इत्याचार्य्यदण्डिप्रभृतयोबभणुः । अत एवाप्रसिद्धस्योपमानत्वायोगादुत्प्रेक्षेत्याधुनिकालङ्कारिकाः सर्व्वे वर्णयन्ति ॥ १२ ॥

अथेति । अथाच्युताभ्युत्थानानन्तरम्धातुःसुतेन नारदेन प्रयत्नोन्नमितास्तथापि मुनिपादन्यासभारादानमन्त्यः फणा येषां तेषां फणिनां गणैः अधोऽधःप्रदेशे कथंचिद्धृते स्थापिते भुवस्तले भूपृष्ठे अभिदेवकीसुतं देवकीसुतं अभिलक्ष्यीकृत्येत्यर्थः । लक्षणेनाभिप्रती आभिमुख्ये इत्यव्ययीभावः । चरणौ पदौ । पदङ्घ्रिश्चरणोऽस्त्रियामित्यमरः । न्यधायिषातां निहितौ । दधातेः कर्म्मणि लुङ् । स्यसिचूसीत्यादिना चिण्वदिटि युक् । अत्र फणानां नमनोन्नमनासम्बन्धेऽपि मुनिगौरवाय तत्सम्बन्धाभिधानादतिशयोक्तिभेदः ॥ १३ ॥

तमिति । आदिपूरुषः पुराणपुरुषः । अन्येषामपि दृश्यते इति वा दीर्घः । स कृष्णः अर्घं पूजामर्हतीति अर्घ्यः । दण्डादिभ्योयः । तं नारदं । अर्घार्थं द्रव्यमर्घ्यम् । पदार्घाभ्यां चेति यत्प्रत्ययः । मूल्यपूजाविधावर्घः षट् तु त्रिष्वर्घ्यमर्घार्थमिति चामरः । अर्घ्यमादिर्घ्य

तमर्घ्यमर्घ्यादिकयादिपूरुषः
सपर्य्यया साधु स पर्य्यपूपुजत् ।
गृहानुपैतुं प्रणयादभीप्सवो
भवन्ति नापुण्यकृतां मनीषिणः ॥ १४ ॥

न यावदेतावुदपश्यदुत्थितौ
जनस्तुषाराञ्जनपर्व्वताविव ।
स्वहस्तदत्ते मुनिमासने मुनि
श्चिरन्तनस्तावदभिन्यवीविशत् ॥ १५ ॥

स्यास्तया अर्घ्यादिकया। शेषाद्विभाषेति विकल्पेन कप् प्रत्ययः। सप र्य्यया पूजया। पूजा नमस्यापचितिः सपर्य्यार्च्चार्हणाः समा इत्यमरः। साधु यथा तथा पर्य्यपूपुजत्परिपूजितवान्। णौ चङ्यन्तं कर्त्तव्यं। युक्तं चैतदित्यर्थान्तरं न्यस्यति गृहानिति। मनसईषिणो मनीषिणः सन्तः पृषोदरादित्वात्साधुः। अपुण्यकृतामपुण्यमकृतवतां। सुकर्म्मपाप मन्त्रपुण्येषु कृञ इति भूते क्विप्। गृहान् प्रणयादुपैतुमभीप्सवः प्राप्तु मिच्छवः। आप्नोतेः सनन्तादुप्रत्ययः आपज्ञप्यृधामीदितीकारः। न भवन्ति किन्तु पुण्यकृतामेव। अतः कृच्छ्रलभ्याः सन्तः पूज्या इत्यर्थः ॥ १४ ॥

नयावदिति। उत्थितावेतौ मुनिकृष्णौ जनः तुषाराञ्जनयोः पर्व्वताविव यावन्नोदपश्यन्नोत्प्रेक्षितवान्। तावच्चिरन्तनः पुराणो मुनिः कृष्णः पुरा किल भगवान् वदरिकारण्ये नारायणा वतारेण तपसि स्थितवानिति पुराणात्। सायं चिरमित्यादिना ट्युप्रत्ययः तुडागमश्च। स्वहस्तेन दत्ते आसने मुनिं नारदं अभि

महामहानीलशिलारुचः पुरो
निषेदिवान् कंसकृषः स विष्टरे ।
श्रितोदयाद्रेरभिसायमुच्चकै
रचूचुरच्चन्द्रमसोऽभिरामताम् ॥ १६ ॥

न्यत्रोविशत् स्वाभिमुखेनोपवेशितवान् । अभिनिपूर्व्वात् विशतेर्ण्यन्ता लुङि णिश्रीति चङ् ॥ १५ ॥

महामहेति । महत्यामहानीलशिलायाः सिंहलद्वीपसम्भवे न्द्रनीलोपलस्य रुगिव रुग्यस्य तस्येत्युपमालङ्कारः । सिंहलस्याकरा द्भतामहानीलास्तु ते स्मृताइति भगवानगस्त्यः । कंसकृषोहरेः पुरो ऽग्रे उच्चकैरुन्नते विष्टरे आसने । वृत्तासनयोर्व्विष्टरइति षत्वं । निषे दिवानुपविष्टवान् । भाषायां सदवसश्रुवइति कसुः । स मुनिरभि सायं सायङ्कालाभिमुखं । अव्ययीभावसमासः सायङ्कालस्य कार्ष्ण्यात् कृष्णोपमानत्वम् । श्रितश्राश्रितउदयाद्रिरुदयाचलोयेन तस्य चन्द्र मसोऽभिरामतां शोभामचूचुरत् चोरितवान् प्राप्तवानित्यर्थः । चुरस्तेये णिश्रीति चङ् । अन्यस्यान्यधर्म्मसम्बन्धासम्भवात् चन्द्रमसो भिरामतामिवाभिरामतामित्यौपम्यपर्य्यवसानादसम्भवद्वस्तुसम्बन्ध रूपोनिदर्शनाभेदः सचोक्तोपमया अङ्गाङ्गिभावेन सङ्कीर्य्यते ॥१६॥

विधायेति । यज्वानोविधिनेष्टवन्तः । यज्वा तु विधिनेष्टवा नित्यमरः । सुयजोरिति यजिधातोर्ङ्वनिप् । तेषां प्रियोहरिः प्रसे दुषः प्रसन्नस्य । सदेः क्वसुरित्युक्तं । तस्य मुनेरपचितिं पूजां । पूजा नमस्यापचितिरित्यमरः । विधाय विशेषेण मनोवाक्कायकर्म्मभि स्तत्परतया कृत्वा । प्रकाममत्यर्थमप्रीयत प्रीतोबभूव । प्रीयतेर्द्दैवादि

विधाय तस्यापचितिं प्रसेदुषः
प्रकाममप्रीयत यज्वनां प्रियः ।
ग्रहीतुमार्य्यान् परिचर्य्यया मुहु-
र्म्महानुभावा हि नितान्तमर्थिनः ॥ १७ ॥

अशेषतीर्थोपहृताः कमण्डलो-
र्न्निधाय पाणावृषिणाभ्युदीरिताः ।
अघौघविध्वंसविधौ पटीयसी-
र्न्नतेन मूर्द्ध्ना हरिरग्रहीदपः ॥ १८ ॥

कात्कर्त्तरि लुङ् । मुनिपूजायाः प्रीतिहेतुत्वेऽर्थान्तरं न्यस्यति । महानुभावामहात्मानः आर्य्यान् पूज्यान् परिचर्य्यया मुहुर्ग्रहीतुं वशीकर्त्तुं । ग्रहोऽलिटि दीर्घइतीटोदीर्घः । नितान्तमर्थिनोऽभिलाषवन्तोहि भवन्ति अर्थोऽभिलाषः स एषामस्तीति मत्वर्थइनिः नतु णिनिः कृद्वृत्तेस्तद्धितवृत्तिर्ब्बलीयसीति भाष्यात् ॥ १७ ॥

अशेषेति । अशेषेभ्यस्तीर्थेभ्यउपहृताआहृतास्तया कमण्डलोरुदकपात्रादुद्धृत्येत्यर्थः पाणौनिधाय ऋषिणाभ्युदीरिता आक्षिप्ताः अतएवाघौघानां पापसमूहानां विध्वंसविधौ विनाशकरणे पटीयसीः समर्थतराः । पटुशब्दात् ईयसुनि उगितश्चेति ङीप् । अपोजलानि हरिर्न्नतेन मूर्द्ध्ना अग्रहीत् स्वीकृतवान् ग्रहलुङ् ॥ १८ ॥

स काञ्चनेति । नवाम्बुदश्यामतनुः स हरिर्मुनेरनुज्ञया काञ्चने काञ्चनविकारे वैकारिकोऽण्प्रत्ययः । यत्रासने न्यविक्षत उपविष्ट

स काञ्चने यत्र मुनेरनुज्ञया
नवाम्बुदश्यामवपुर्न्यविक्षत ।
जिगाय जम्बूजनितश्रियःश्रियं
सुमेरुशृङ्गस्य तदा तदासनम् ॥ १९ ॥

स तप्तकार्त्तस्वरभास्वराम्बरः
कठोरताराधिपलाञ्छनच्छविः ।
विदिद्युते वाडवजातवेदसः
शिखाभिराश्लिष्ट इवाम्भसां निधिः ॥ २० ॥

वान् । निपूर्व्वविशोलुङि नेर्विशइत्यात्मनेपदं शलइगुपधादनिट्कः । तदासनं तदा हर्यप्रवेशनसमये जम्बूर्नीलफलविशेषः । जम्बूः सुरभिपत्रा च राजजम्बूर्महाफलेत्यभिधानरत्नमालायां । तया जनिताश्रीर्यस्य तत्तथोक्तस्य । भाषितपुंस्कत्वात् पचे पुंवद्भावानुमभावः । सुमेरुशृङ्गस्य श्रियञ्जिगायाभिभावितवान् इत्यर्थः सन्लिटोर्ज्जेरिति कुत्वं । उपमानानुप्रासयोः संसृष्टिः ॥ १९ ॥

सतप्तेति । तप्तं पुटपाकशोधितं कार्त्तस्वरं सुवर्णं । रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियामित्यमरः । तद्वद्भास्वरं दीप्यमानमम्बरं यस्य सः पीताम्बर इत्यर्थः । कठोरताराधिपस्य पूर्णेन्दोर्लाञ्छनस्य छविरिव छविर्य्यस्य स इत्युपमानपूर्व्वपदोबहुव्रीहिः उत्तरपदलोपश्च । स हरिर्व्वाडवजातवेदसोवाडवाग्नेः शिखाभिर्ज्वालाभिराश्लिष्टोव्याप्तोऽम्भसान्निधिरिव समुद्रइव विदिद्युते बभौ ॥ २० ॥

रथाङ्गपाणेः पटलेन रोचिषा
मृषित्विषः संवलिता विरेजिरे ।
चलत्पलाशान्तरगोचरास्तरो
स्तुषारमूर्त्तेरिव नक्तमंशवः ॥ २१ ॥

प्रफुल्लतापिञ्छनिभैरभीषुभिः
शुभैश्च सप्तच्छदपांशुपाण्डुभिः ।
परस्परेणच्छुरितामलच्छवी
तदैकवर्णाविव तौ बभूवतुः ॥ २२ ॥

रथाङ्गपाणेरिति । रथाङ्गं चक्रं पाणौ यस्य तस्य हरेः । प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतइति पाणेः परनिपातः । रोचिषां छवीनां पटलेन समूहेन संवलिता मिलिता ऋषित्विषो नक्तं रात्रौ । सप्तम्यर्थेऽव्ययम् । तरोश्चलतां पलाशानां पत्राणा मन्तराणि विवराणि गोचरआश्रयोयेषां ते तुषारा मूर्त्तिर्य्यस्य तस्येन्दोरंशवइव विरेजिरे चकाशिरे ॥ २१ ॥

प्रफुल्लेति । प्रफुल्लतोति प्रफुल्लं विकसितम् । फुल्लविकसने इति धातोः पचाद्यजन्तम् । फलेर्निष्ठायां अनुपसर्गात् फुल्लक्षीवकृशोल्लाघाः इति निपातनात् प्रफुल्लमित्येवेति क्षीरस्वामी । तापिञ्छस्य तमालस्य पुष्पं तापिञ्छम् । फले लुगिति तद्धितलुक् । क्लीनं प्रसवे सर्वमिति नपुंसकत्वम् । कालस्कन्धस्तमालः स्यात्तापिञ्छोऽपीत्यमरः । तेन सदृशैः प्रफुल्लतापिञ्छनिभैः । नित्यसमासत्वादस्वपदविग्रहः । अतएव सुरुत्तरपदे त्वमीति । निभसङ्काशनीकाशप्रतीकाशोपमादयइत्यमरः । सप्त सप्तच्छदाः पर्णानि पर्व्वसु यस्येति

युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकाशमासत।
तनौ ममुस्तत्र न कैटभद्विष
स्तपोधनाभ्यागमसम्भवामुदः॥ २३॥

सप्तच्छदो वृक्षभेदः। सप्तपर्णो विशालत्वक् शारदो विषमच्छद इत्य मरः। सङ्ख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवदित्युक्तं भाष्ये। शेषन्तापिच्छवत्। तस्य पुष्पाणि सप्तच्छदानि तेषां पांशु वत्पाण्डुभिः शुभ्रैरभीषुभिः अन्योन्यरश्मिभिः। अभीषुः प्रग्रहे रश्माविति शाश्वतः। परस्परेण छुरिते रूषिते अमले छवी अन्योन्य कान्ती ययोस्तौ। छव्योरभीषूणामवयवावयविभावाद्भेदनिर्देशः। तौ हरिनारदौ तदा एकवर्णाविव बभूवतुः उभयप्रभामेलना दुभयोरपि सर्वाङ्गीनो गङ्गायमुनासङ्गमइव स्फटिकेन्द्रनीलमणि प्रभामेलनप्रायः कश्चिदेको वर्णः प्रादुर्बभूव। तन्निमित्ता चेयं अनयोरेकवर्णत्वोत्प्रेक्षा ॥ २२ ॥

युगान्तेति। युगान्तकाले प्रतिसंहृतात्मनः आत्मन्युप संहृताः आत्मानो जीवा येन तस्य कैटभद्विषो हरेर्यस्यान्तनौ ज गन्ति सविकाशं सविस्तरमासत अतिष्ठन्। आस उपवेशने लङ्। तत्र तनौ देहे तपोधनाभ्यागमेन सम्भवन्तीति सम्भवाः सम्भूताः। पचाद्यच्। मुदः सन्तोषाः न ममुः अतिरिच्यन्ते स्मेत्यर्थः। चतुर्दश भुवनभरणपर्य्याप्ते वपुषि अन्तर्न मान्तीति कविप्रौढोक्तिसिद्धाति शयेन स्वतःसिद्धस्याभेदेनाध्यवसितातिशयोक्तिः सा च मुदामन्तः सम्बन्धेऽप्यसम्बन्धोक्त्या सम्बन्धासम्बन्धरूपा॥ २३॥

निदाघधामानमिवाधिदीधितिं
मुदा विकाशं मुनिमभ्युपेयुषी ।
विलोचने बिभ्रदधिश्रितश्रिणी
स पुण्डरीकाक्ष इति स्फुटोऽभवत् ॥ २४ ॥

निदाघेति । निदाघमुष्णं धाम किरणोयस्य तथोक्तं । निदाघोग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपीति विश्वः । अर्कमिवाधिदीधितिं अधिकतेजसं मुनिमभिलक्ष्य । अभिरभागे इति लक्षणे कर्मप्रवचनीयसंज्ञा कर्म्मप्रवचनीययुक्ते द्वितीया । मुदा विकाशमुपेयुषी उपगते । क्वसुप्रत्ययान्तो निपातः । अतएवाधिश्रिता प्राप्ता श्रीर्याभ्यां ते तथोक्ते । इकोऽचिविभक्ताविति नुमागमः । विलोचने बिभ्रत् । नाभ्यस्ताच्छतुरिति नुमभावः । स हरिः पुण्डरीकाक्षः इत्येवं स्फुटोऽभवत् सूर्य्यसन्निधाने श्रीविकाशभावादक्ष्णां पुण्डरीकसाधर्म्यात् । पुण्डरीकइवाक्षिणी यस्येत्यवयवार्थलाभे पुण्डरीकाक्षइति व्यक्तमन्वर्थसंज्ञोऽभूदित्यर्थः । बिभ्रत् स्फुटोऽभवदिति पदार्थहेतुकस्य काव्यलिङ्गस्य निदाघधामानमिवेत्युपमासापेक्षत्वादनयोरङ्गाङ्गिभावेन सङ्करः ॥ २४ ॥

सितमिति । अथोभयोरुपवेशनानन्तरं अच्युतोहेतुकर्त्ता विसारिभिरभीक्ष्णं प्रसरद्भिः । बहुलमाभीक्ष्णइति णिनिः । द्विजावलिर्दन्तपङ्क्तिः । दन्तविप्राण्डजाद्विजाइत्यमरः । सैव व्याजः कपटं यस्य सः तद्रूपइत्यर्थः सचासौ निशाकरस्य तस्यांशुभिः किरणैः सितं स्वभावशुभ्रं मुनेर्वपुः सौधं प्रासादमिव सुतरामत्यन्तं । अव्ययादाम् प्रत्ययः । सितिम्ना धावल्येन प्रयोज्यकर्त्ता लम्भयन्

सितं सितिम्ना सुतरां मुनेर्वपु
र्विसारिभिः सौधमिवाऽथ लम्भयन् ।
द्विजावलिव्याजनिशाकरांशुभिः
शुचिस्मितां वाचमवोचदच्युतः ॥ २५ ॥
हरत्यघं सम्प्रति हेतुरेष्यतः
शुभस्य पूर्व्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं
व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥२६॥

व्यापारयन् अतिधवलयन्नित्यर्थः । लभेरत्र गत्युपसर्ज्जनप्राप्त्यर्थत्वेनागत्यर्थत्वात् । गतिबुद्धीत्यादिना अणि कर्त्तुर्न कर्म्मत्वं । तथाह वामनः लभेर्गत्यर्थत्वात् णिच्यणौ कर्त्तुः कर्म्मत्वाकर्मत्वे इति प्राप्त्युपसर्ज्जनगत्यर्थत्वे तु न कर्म्मत्वमेवेति रहस्यम् । लभेश्चेति मुमागमः । शुचिस्मितां वाचमवोचत् उक्तवान् ब्रुवोवच्यादेशः लुङ् वचि उम् इत्युमागमे गुणः । अत्र सौधमिवेत्युपमायाः सितिम्ना लम्भयन्नित्यसम्बन्धरूपातिशयोक्तेः द्विजावलिव्याजनिशाकरेति कलादिशब्दैरसत्यत्वप्रतिपादनरूपापह्नवस्य च मिथोनैरपेक्ष्यात्संसृष्टिः ॥ २५ ॥

हरतीति । भवदीयदर्शनं शरीरभाजां द्रष्टृणां इत्यर्थः । भजो ण्विः । कालत्रितये भूतादिकालत्रितयेऽपि योग्यतां पवित्रतां व्यनक्ति गमयति कुतः सम्प्रति दर्शनकाले अघं पापं हरति एष्यतो

जगत्यपर्य्याप्तसहस्रभानुना
न यन्नियन्तुं समभावि भानुना ।
प्रसह्य तेजोभिरसङ्ख्यताङ्गतै
रदस्त्वया नुन्नमनुत्तमं तमः ॥ २७ ॥

भाविनः शुभस्य श्रेयसो हेतुः तथा पूर्व्वाचरितैः प्रागनुष्ठितैः शुभैः सुकृतैः कृतं एवं त्रैकाल्येऽपि कार्य्यत्वेन कारणत्वेन च पुंसि सुहृत समवायमवगमयते । अतएतादृशं दर्शनं कस्य न प्रार्थ्यमिति भावः। अत्र हरतीत्यादिवाक्यत्रयस्यार्थस्य शरीरेत्यादिवाक्यत्रयेोक्त्या वा क्यार्थहेतुकं काव्यलिङ्गमलङ्कारः॥ २६ ॥

जगतीति । जगत्यपर्य्याप्ताःअपरिच्छिन्नाः सहस्रं भानवः अंशवो यस्य तेन भानुना अर्केण भानवोऽर्कहरांशवइति वैजयन्ती । यत्तमो नियन्तुं निवारयितुन्न समभावि न शेके । भावे लुङ् । अविद्य मानमुत्तमं यस्मात् तदनुत्तमं सर्व्वाधिकं अदस्तमोमोहात्मकं असङ्ख्यताङ्गतैस्तेजोभिः प्रसह्य बलात् त्वया नुन्नं छिन्नं अतः श्लाघ्य दर्शनोभवानिति भावः । नुदविदेत्यादिना विकल्पान्निष्ठानत्व भावः । अत्रोपमानाद्भानोर्मुनेराधिक्यप्रतिपादनात् व्यतिरेका लङ्कारः ॥ २७ ॥

कृतइति । प्रजानाञ्जनानां अपत्यानां च क्षेमकृता कुशलकारिणा। प्रजा स्यात्सन्ततौ जने इत्यमरः। सुपात्रे योग्यपुरुषे कटाहादि दृढभाजने च निक्षेपेण निधानेन च निराकुलात्मना स्वस्थचित्तेन। योग्यभाजनयोः पात्रमित्यमरः। प्रजासृजा ब्रह्मणा पुत्रिणा च त्वं धनसम्पदामिव श्रुतीनां वेदानां सदोपयोगे दानभोगाभ्यां व्ययेऽपि

कृतः प्रजाक्षेमकृता प्रजासृजा
सुपात्रनिःक्षेपनिराकुलात्मना ।
सदोपयोगेऽपि गुरुस्त्वमक्षयो
निधिः श्रुतीनां धनसम्पदामिव ॥ २८ ॥
विलोकनेनैव तवामुना मुने
कृतः कृतार्थोऽस्मि निवर्हितांहसा ।
तथापि शुश्रूषुरहं गरीयसी
र्गिरोऽथवा श्रेयसि केन तृप्यते ॥ २९ ॥

अक्षयः एकत्राम्नानादन्यत्रानन्त्याच्चेति भावः। गुरुरुपदेष्टा सम्प्रदाय प्रवर्त्तकइति यावत् । अन्यत्र महान् । निधीयतइति निधिःनिक्षेपः कृतः । उपसर्गे घोः किः । श्रुतिसम्प्रदायद्वारा धर्म्माधर्म्मव्यवस्थापक तया जगत्प्रतिष्ठाहेतूनां भवादृशां दर्शनं कस्य न श्लाघ्यमिति भावः । अत्र शब्दमात्रसाधर्म्यात् श्लेषोऽयं प्रकृतविषयइत्याहुः ॥ २८ ॥

विलोकनेनेति । हे मुने निवर्हितांहसा अपहृतपाप्मना अत एवामुना तव विलोकनेनैव कृतार्थः कृतोऽस्मि । तथाप्यहं गरीयसी र्र्थवत्तराः । द्विवचनेत्यादिना ईयसुन्प्रत्ययः उगितश्चेति ङीप् प्रियस्थिरेत्यादिना गुरोर्गरादेशः । गिरस्तव वाचोऽपि शुश्रूषुः श्रोतुमिच्छुरस्मि । शृणोतेः सन्नन्तादुप्रत्ययः । नचैतद्वृथे त्याह । अथवा तथाहीत्यर्थः । अथवेति पक्षान्तरप्रसिद्धोरिति गणव्याख्यानात् । श्रेयसि विषये केन तृप्यते न केनापीत्यर्थः । कृतार्थ तायाद्दयत्ताभावादिति भावः । भावे लिट् ॥ २९ ॥

6264.

गतस्पृहोऽप्यागमनप्रयोजनं
वदेति वक्तुं व्यवसीयते यया ।
तनोति नस्तामुदितात्मगौरवो
गुरुस्तवैवागम एष धृष्टताम् ॥ ३० ॥

इति ब्रुवन्तं तमुवाच स व्रती
न वाच्यमित्थं पुरुषोत्तम त्वया ।
त्वमेव साक्षात्करणीय इत्यतः
किमस्ति कार्य्यं गुरु योगिनामपि ॥ ३१ ॥

एवं प्रियमुक्त्वा सम्प्रत्यागमनप्रयोजनं विनयेन पृच्छति । गतस्पृहोऽपीति । गतस्पृहो विरक्तोऽपि त्वमागमनप्रयोजनं वदेति वक्तुं यया धृष्टतया व्यवसीयते उद्यम्यते । स्यतेर्भावे लट् । उदित मुत्पन्नं उक्तं वा आत्मनो मम गौरवं येन सः गुरुः श्लाघ्यः एष तवागम आगमनमेव नोऽस्माकं धृष्टतान्तनोति विस्तारयति । तनुविस्तारे लट् । भवतो निस्पृहत्वेऽपि प्रेक्षावत्प्रवृत्तेः प्रयोजन व्याप्त्या सावकाशः प्रश्न इति भावः ॥ ३० ॥

इति ब्रुवन्तमिति । इति ब्रुवन्तन्तं हरिं स व्रती मुनिरुवाच । किमिति हे पुरुषोत्तम पुरुषेषु श्रेष्ठ । न निर्द्धारण इति षष्ठीसमासप्रतिषेधः । त्वया इत्यङ्गतस्पृहोऽपीति न वाच्यं निस्पृहस्याप्यत्र प्रयोजनसम्भवादिति भावः । तदेवाह योगिनामपि त्वमेव साक्षात्करणीयः प्रत्यक्षीकर्त्तव्य इत्यतोऽस्मादन्यत् गरु कार्य्यं किमस्ति न किञ्चिदित्यर्थः । तस्मान्न प्रयोजनान्तरप्रश्नावकाश इति भावः ॥ ३१ ॥

उदीर्णरागप्रतिरोधकं जनै
रभीक्ष्णमक्षुण्णतयातिदुर्गमम ।
उपेयुषो मोक्षपथं मनस्विन
स्त्वमग्रभूमिर्निरपायसंश्रया ॥ ३२ ॥

यदुक्तं योगिनामपि त्वमेव साक्षात्करणीय इति तदेव द्रढयति । उदीर्णरागेति । उदीर्ण उद्रिक्तो रागो विषयाभिलाषः स एव प्रतिरोधकः प्रतिबन्धकः पाटच्चरश्च यस्मिन् । प्रतिरोधिपरास्कन्दि पाटच्चरमलिम्लुचा इत्यमरः । अभीक्ष्णमक्षुण्णतया अनभ्यस्तत्वेनाप्रतिहतत्वेन च जनैरतिदुर्गमं मोक्षपथमपवर्गमार्गं कान्तारञ्चोपेयुषः प्राप्तवतः । उपेयिवानित्यादिना क्वसन्तो निपातः । मनस्विनः सुमनसः धीरस्य च । प्रशंसायां विनिः । त्वमेव निरपायः पुनरावृत्तिरहितः संश्रयः प्राप्तिर्यस्याः सा तथोक्ता । न स पुनरावर्त्तत इति श्रुतेः । अग्रभूमिः प्राप्यस्थानं । अग्रमालम्बने प्राप्य इति विश्वः । सोऽहमित्यादिश्रुतेस्तत्प्राप्तेरेव मोक्षत्वादिति भावः । तस्मान्मुमुक्षूणामपि त्वमेव साक्षात्करणीय इति सिद्धम् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति श्रुतेः । यथा कस्यचित् कुतश्चित्सङ्कटात् निर्गतस्य केनचित् कान्तारेणागतस्य किञ्चिन्निर्बाधस्थानप्राप्तिरभयाय कल्पते तथा त्वमपि मुमुक्षोरिति ध्वनिः ॥ ३२ ॥

ननु प्रकृतिविविक्तपुरुषसाक्षात्कारान्मोक्षो नास्मत्साक्षात्कारादित्याशङ्क्य सोऽपि त्वमेवेत्याह । उदासितारमिति । पुराविदः पूर्वज्ञाः कपिलादयः त्वां निगृहीतमानसैरन्तर्निबद्धचित्तैर्योगिभिः

उदासितारं निगृहीतमानसै
र्गृहीतमध्यात्मदृशा कथञ्चन ।
बहिर्विकारं प्रकृतेः पृथग्विदुः
पुरातनं त्वां पुरुषं पुराविदः ॥ ३३ ॥

आत्मनि अधि इत्यध्यात्मं । विभक्त्यर्थेऽव्ययीभावः । अनश्चेति समासान्तष्टच् । अध्यात्मं या दृक् ज्ञानं तया अध्यात्मदृशा प्रत्यग्दृष्ट्या कथञ्चन गृहीतं साक्षात्कृतं । केन रूपेण गृहीतमित्यत आह । उदासितारं उदासीनं प्रकृतौ स्वार्थप्रवृत्तायामपि स्वयमप्राकृतत्वादस्पृष्टमित्यर्थः । आसेस्तृच् । विकारेभ्यो बहिः बहिर्विकारं महदादिभ्यः पृथग्भूतमित्यर्थः । अपपरिबहिरञ्चवः पञ्चम्येत्यव्ययीभावः । किञ्च प्रकृतेस्त्रैगुण्यात्मनो मूलकारणात् पृथक् भिन्नं । प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणइति यादवः । पुरातनमनादिं । सायंचिरमित्यादिना ट्युप्रत्ययः । पुरुषं पुरुषपदवाच्यं विज्ञानघनं विदुर्विदन्ति । विदोलटोवेति झेरुसादेशः । यथाहुः । मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषइति । अजामेकां लोहितशुक्लकृष्णामित्यादिश्रुतिश्च । सोऽपि त्वमेव तत्त्वमसीत्यादिवाक्यैरैक्यश्रवणात् । तस्मात्त्वमेव साक्षात्करणीयइति सुष्ठूक्तमिति भावः ॥ ३३ ॥

एवं भगवतो निर्गुणस्वरूपमुक्त्वा सम्प्रति प्रस्तुतोपयोगितया सगुणमाश्रित्य षड्भिः स्तौति । निवेशयामासिथेति । जगत्त्रयस्य एकस्य पतिरेकाधिपतिः एकशिल्पी च । स्थपतिरधिपतौ तक्षिण बृहस्पतिसचिवयोरिति वैजयन्ती । त्वं हेलयोद्धृतं वराहावतारे

निवेशयामासिथ हेलयोद्धृतं
फणाभृताच्छादनमेकमोकसः ।
जगत्त्रयैकस्थपतिस्त्वमुच्चकै
रहीश्वरस्तम्भशिरःसु भूतलम् ॥ ३४ ॥

अनन्यगुर्व्यास्तव केन केवलः
पुराणमूर्त्तेर्महिमावगम्यते ।
मनुष्यजन्मापि सुरासुरान् गुणै
र्भवान् भवच्छेदकरैः करोत्यधः ॥ ३५ ॥

इति भावः । फणाभृतामोकसः आश्रयस्य सद्मनश्च । ओकः सद्मनि चाश्रये इति विश्वः । एकं छादनमावरणं भूतलं उच्चकैः उन्नतेषु अहीश्वरः शेषएव स्तम्भः तस्य शिरःसु मूर्द्धसु अग्रेषु च फणासहस्रेष्विति भावः निवेशयामासिथ निवेशितवानसि । विशतेर्ण्यन्तात् लिटि थल् कृञ्चानु प्रयुज्यते लिटीति अस्तेरनुप्रयोगः । अत्र श्लिष्टाश्लिष्टरूपकयोर्हेतुहेतुमद्भावात् श्लिष्टं परम्परितरूपकम् ॥ ३४ ॥

अनन्येति । न विद्यतेऽन्योगुरुर्यस्यास्तस्याः अनन्यगुर्व्याः इत्यनीकारान्तः पाठः समासात्प्राङ्ङीशि नद्यृतश्चेति कप्प्रसङ्गः स्यात् पश्चात्त्वनुपसर्ज्जनाधिकारात् वोतोगुणवचनादिति न प्राप्नोति ङिति ह्रस्वश्चेति वा नदीसंज्ञात्वादाण्नद्याइत्याडागमः केचित्तु समासान्तविधिरनित्यइति कपं वारयन्ति । तस्याः सर्व्वोत्तमायास्तव पुराणमूर्त्तेरमानुषस्वरूपस्य केवलः कृत्स्नः । केवलः कृत्स्नएकः स्यात्केवल

लघूकरिष्यन्नतिभारभङ्गुरा
ममूं किल त्वं त्रिदिवादवातरः ।
उद्दूढलोकत्रितयेन साम्प्रतं
गुरुर्द्धरित्री क्रियतेतरां त्वया ॥ २६ ॥

स्वावधारणे इति विश्वः । महिमा केनावगम्यते न केनापीत्यर्थः कुतः मनुष्याज्जन्म यस्य स मनुष्यजन्मा भवान् । अवर्ज्यो हि बहुव्रीहि र्व्यधिकरणोजन्माद्युत्तरपदइति वामनः । भवच्छेदकरैः संसार निवर्त्तकैर्गुणैर्ज्ञानादिभिः सुरासुरान् । सुरासुरविरोधस्य कार्य्यो पाधिकत्वेनाशाश्वतिकत्वाद्येषाञ्च विरोधः शाश्वतिकइति न द्वन्द्वै कवद्भावइत्याहुः । अधः करोति । शेषे प्रथमइति प्रथमपुरुषः भव च्छब्दस्य युष्मदस्मदन्यत्वेन शेषत्वादिति । मानुषएव ते महिमा दुरवगाहः अमानुषस्तु किमिति तात्पर्य्यार्थः । द्वितीयार्द्धेऽस कृद्व्यञ्जनावृत्त्या छेकानुप्रासः ॥ २५ ॥

लघूकरिष्यन्निति । त्वमतिभारेण ऊर्ज्जेन स्वरूपेण भङ्गुरां स्वयं भज्यमानां । भञ्जभासमिदोघुरच् भङ्गुरः कर्म्मकर्त्तरीति वामनः । अमूम्भुवमित्यर्थ. । लघूकरिष्यन् निर्भारां करिष्यन् किल । कृभ्वस्तीत्यादिना अभूततद्भावे च्विः च्वौ चेति दीर्घः । तृतीया द्यौस्त्रिदिवः स्वर्गस्तस्मात् । घञर्थे कविधानं वृत्तिविषये सङ्ख्या शब्दस्य पूरणार्थत्वं त्रिभागादिवत् । अवातरः अवतीर्णोऽसि साम्प्रतं सम्प्रति उद्दूढलोकत्रितयेन कुक्षाविति शेषः त्वया धरित्री गुरुः पूज्या भारवती च क्रियतेतरां अतिशयेन क्रियते । तिङ श्चेति तरप् किमेत्तिङव्ययादित्यादिना आमुप्रत्ययः । लघकर्त्ता

निजौजसोज्जासयितुं जगद्द्रुहा-
मुपाजिहीथान महीतलं यदि ।
समाहितैरप्यनिरूपितस्ततः
पदं दृशः स्याः कथमीश मादृशाम् ॥ ३७॥

गुरुकर्त्तेति विरोधाभासोऽलङ्कारः। आभासत्वे विरोधस्य विरोधाभासउच्यतइति लक्षणात् ॥ ३६ ॥

निजेति । निजौजसा स्वतेजसा जगद्भ्योद्रुह्यन्तीति जगद्द्रुहः कंसादयः। सत्सूद्विषेत्यादिना क्विप् । तेषां उज्जासयितुन्तान् हिंसितुमित्यर्थः । जासिनिप्रहणेत्यादिना कर्मणि शेषे षष्ठी जसु हिंसायामिति चुरादिः । महीतलं नोपाजिहीथाः यदि नावतरेश्चेत्। ओहाङ्गतौ लङि थासि रूपं ततस्तर्हि समाहितैः समाधिनिष्ठैरपि। सकर्मकादप्याश्रितादिवदविवक्षिते कर्मणि कर्त्तरि क्तः। अथवा समाहितैः समाहितचित्तैरित्यर्थः । विभक्तधनेषु विभक्ता भ्रातरइतिवदुत्तरपदलोपोद्रष्टव्यः गम्यमानार्थस्याप्रयोग एव लोप इति कैयटः। अनिरूपितोऽगृहीतस्त्वमीश मादृशाञ्चर्मचक्षुषामिति भावः। विनयोक्तिरियं दृशोदृष्टेः पदं गोचरः कथं स्याः न कथञ्चिदित्यर्थः । तस्मात्त्वत्साक्षात्कार एवागमनप्रयोजनमिति भावः॥३७॥

ननु कोऽयं नियमोयन्मसैवायं दुष्टनिग्रहाधिकारइत्याशङ्क्यानन्यसाध्यत्वमेवाह । उपप्लुतमिति । विश्वं बिभर्त्तीति विश्वम्भर स्तत्सम्बुद्धौ हे विश्वम्भर विश्वत्रातः । संज्ञायां भृतॄवृजीत्यादिना खच्प्रत्यये मुमागमः । मदोद्धतैः कंसादिभिः उपप्लुतं पीडितमखिलं विश्वं पातुन्त्वमेव ईशिषे शक्तोऽसि विश्वम्भरत्वादिति भावः।

उपप्लुतं पातुमदो मदोद्धतै-
स्त्वमेव विश्वम्भर विश्वमीशिषे ।
ऋते रवेः क्षालयितुं क्षमेत कः
क्षपातमस्काण्डमलीमसं नभः ॥ ३८ ॥

करोति कंसादिमहीभृतां वधा-
ज्जनो मृगाणामिव यत्तव स्तवम् ।
हरे हिरण्याक्षपुरःसरासुर-
द्विपद्विषः प्रत्युत सा तिरस्क्रिया ॥ ३९ ॥

ईश ऐश्वर्य्ये लिटि थासि रूपं । अत्र वैधर्म्येण दृष्टान्तमाह । क्षपायास्तमस्काण्डैस्तमोवर्गैः। काण्डोऽस्त्री दण्डवाणार्ववर्गावसर वारिष्वित्यमरः । कस्कादिषु चेति विसर्जनीयस्य सत्वं । मलीमसं मलिनं। मलीमसन्तु मलिनं कच्चरं मलदूषितमित्यमरः। ज्योत्स्नातमिस्रेत्यादिना मत्वर्थीयो निपातः । नभः क्षालयितुं रवेः ऋते रविं विना । अन्यारादितरर्त्ते इति पञ्चमी । कः क्षमेत शक्नुयात् न कोऽपीत्यर्थः । अत्र वाक्यद्वये समानधर्म्मस्यैकस्येशिषे क्षमेतेति शब्दद्वयेन वस्तुभावेन निर्देशात्तत्रापि व्यतिरेकमुखत्वा द्वैधर्म्येण प्रतिवस्तूपमालङ्कारः । तदुक्तं सर्व्वस्य वाक्यार्थगतत्वेन सामान्यस्य वाक्यद्वये पृथङ्निर्देशे प्रतिवस्तूपमा ॥ ३८ ॥

करोतीति। किञ्च जनो मृगाणामिव कंसादिमहीभृतां वधाद्धेतोः स्तवं स्तोत्रं । स्तवः स्तोत्रं नुतिः स्तुतिरित्यमरः । करोतीति यत् हे हरे हे कृष्ण हे सिंहेति च गम्यते सा स्तुतिक्रिया हिरण्याक्ष

प्रवृत्तएव स्वयमुज्झितश्रमः
क्रमेण पेष्टुम्भुवनद्विषामसि ।
तथापि वाचालतया युनक्ति मां
मिथस्त्वदाभाषणलोलुपं मनः ॥ ४० ॥

पुरःसराः हिरण्याक्षप्रभृतयोये असुरास्तएव द्विपास्तेषां द्विषः हन्तुरित्यर्थः । तस्य नव प्रत्युत वैपरीत्येन प्रत्युतेत्युक्तवैपरीत्ये इति गणव्याख्यानात् । तिरस्क्रिया अवमानः । यदिति सामान्ये नपुंसकं । सेति विधेयलिङ्गं । गजघातिनः सिंहस्य मृगवधवर्णन मिव महासुरहन्तुस्तव कंसादिक्षुद्रनृपवधवर्णनं तिरस्कार एवेत्यर्थः । अत्रासुरद्विपानामिति हरिवद्धरिरिति श्लिष्टपरम्परित रूपकं मृगाणामिवेत्युपमयाऽङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ ३९ ॥

एवं स्तुत्या देवमभिमुखीकृत्यागमनप्रयोजनं वक्तुमुपोद्घातयति । प्रवृत्तइति । त्वमुज्झितश्रमस्त्यक्तश्रमः सन् क्रमेण भुवनानि द्विषन्तीति भुवनद्विषः दुष्टाः तेषां पेष्टुं तान् हिंसितुमित्यर्थः । जासिनिप्रहणेत्यादिना कर्म्मणि शेषे षष्ठी । स्वयमपरप्रेरितएव प्रवृत्तोसि एवं तर्हि पिष्टपेषणं किमिति चेत्तत्राह । तथापि स्वतः प्रवृत्तेऽपि मिथोरहसि त्वदाभाषणे त्वया सह संलापे लोलुपं लुब्धं । लुब्धोऽभिलाषुकस्तृष्णक्समौ लोलुपलोलुभावित्यमरः । मनोमां वाचालतया सह युनक्ति वाचालं करोतीत्यर्थः । वाचो बह्व्योऽस्य सन्तीति वाचालः । आलजाटचौ बहुभाषिणीत्यालच् । स्यात्जल्पकस्तु वाचालोवाचाटोबहुभाषिणीत्यमरः ॥ ४० ॥

तदिन्द्रसन्दिष्टमुपेन्द्र यद्वचः
क्षणं मया विश्वजनीनमुच्यते ।
समस्तकार्य्येषु गतेन धुर्य्यता
महिद्विषस्तद्भवता निशम्यताम् ॥ ४१ ॥

अथ स्ववाक्यश्रवणं सहेतुकम्प्रार्थयते । तदिति । तत्तस्मा दिन्द्रमुपगतः उपेन्द्रः इन्द्रावरजः अतएवेन्द्रसन्दिष्टं श्रोतव्यमिति भावः। किञ्च विश्वस्मै जनाय हितं विश्वजनीनं । आत्मन्विश्वजन भोगोत्तरपदात् खः। यद्वचः क्षणन्न तु चिरं मयोच्यते । तद्वचो ऽहिद्विषोवृत्रघ्नः । सर्प्पे वृत्रासुरेऽप्यहिरिति वैजयन्ती। समस्त कार्य्येषु धुर्य्यतां धुरन्धरत्वं गतेन अतोऽपि भवता निशम्यतां। प्रार्थनायां लोट् । धुरं वहतीति धुर्य्यः । धुरोयड्ढकाविति यत्प्रत्ययः । स्फुटमत्र पदार्थहेतुकङ्काव्यलिङ्गमलङ्कारः ॥ ४१ ॥

अथ शिशुपालोहन्तव्यइति वक्तुन्तस्यावश्यबध्यत्वेऽनन्यबध्यत्व ज्ञापनौपयिकतया औद्धत्यप्रकटनार्थं जन्मान्तरवृत्तान्तं ताव दुद्घाटयति । अभूदिति । प्रतिपक्षाच्छत्रोः जन्म यासान्तासा म्भियामभूमिरविषयः निर्भीकइत्यर्थः । तपनद्युतिः सूर्य्यतापो दितेस्तनूजोदैत्योऽभूत्। कोऽसावतआह। हरेरिन्द्रस्य इन्द्रशब्दा र्थनिसूदनं इन्दतीति इन्द्रः । इदि परमैश्वर्य्ये ऋज्रेन्द्रेत्यादिना रन्प्रत्ययान्तः औणादिकनिपातः । तस्य इन्द्रइति शब्दस्येन्द्रइति संज्ञापदस्य योऽर्थः परमैश्वर्य्यलक्षणः तस्य निसूदनं निवर्त्तकं । कर्त्तरि ल्युट् । हरेरैश्वर्य्यनिहन्तारमित्यर्थः । यं दैत्यं हिरण्य पूर्व्वं कशिपुम्प्रचक्षते हिरण्यकशिपुमाहुरित्यर्थः। अत्र हिरण्यशब्द

अभूदभूमिः प्रतिपक्षजन्मनां
श्रियां तनूजस्तपनद्युतिर्दितेः ।
यमिन्द्रशब्दार्थनिषूदनं हरे
र्हिरण्यपूर्व्वं कशिपुं प्रचक्षते ॥ ४२ ॥

समत्सरेणासुर इत्युपेयुषा
चिराय नाम्नः प्रथमाभिधेयताम् ।
भयस्य पूर्व्वावतरस्तरस्विना
मनस्सु येन द्युसदां न्यधीयत ॥ ४३ ॥

पूर्व्वकत्वं कशिपुशब्दस्यैव न तु संज्ञिनस्तदर्थस्येति शब्दपरस्य कशिपु शब्दस्यार्थगतत्वेनाप्रयोज्यस्य प्रयोगादवाच्यवचनाख्यार्थदोषभाक्‌ । यदेवावाच्यवचनमवाच्यवचनं हि तदिति समाधानं एवंविध विषये शब्दपरेणार्थलक्षणेति कथञ्चित्स्यादयमित्युक्तमस्माभिर्देव पूर्व्वं गिरिन्तेइति धनुरुपपदमस्मै वेदमभ्यादिदेशेत्येतद्व्याख्यानाव सरे सञ्जीविन्याङ्कष्टापथे च विशेषस्थानाय दैत्यमपदिश्य हिरण्य पूर्व्वं कशिपुम्प्रचक्षते संज्ञात्वेन प्रयुङ्क्ते ॥ ४२ ॥

समत्सरेणेति । समत्सरेण अन्यशुभद्वेषसहितेन । मत्सरो ऽन्यशुभद्वेष इत्यमरः । असतीत्यसुरः । असेरुरन् । असुर इति नाम्नः चिराय चिरकालेन । चिराय चिररात्राय चिरस्याद्या श्चिरार्थकाइत्यमरः । प्रथमाभिधेयतामुपेयुषा अन्वर्थतया मुख्या र्थतां गतेन तरस्विना बलवता । तरसी बलरंहसी इति विश्वः । येन हिरण्यकशिपुना दिवि सीदन्तीति द्युसदान्देवानां मनस्स

दिशामधीशांश्चतुरो यतः सुरा
नपास्य तं रागहृताः सिषेविरे ।
अवापुरारभ्य ततश्चलाइति
प्रवादमुच्चैरयशस्करं श्रियः ॥ ४४ ॥

भयस्य पूर्व्वावतरः प्रथमप्रवेशः । ऋदोरप् । न्यधीयत निहितः । धाञः कर्म्मणि लङ् । अस्मादेव देवानां प्रथमं भयस्योत्पत्ति रभूदित्यर्थः ॥ ४३ ॥

दिशामिति । श्रियः सम्पदः यतोयदेत्यर्थः दिशामधीशान् दिक्पतीनपि चतुरः सुरान् इन्द्रवरुणयमकुवेरान् अपास्य त्यक्त्वा तं हिरण्यकशिपुं रागहृताः रागकृष्टाः सत्यः न तु वलादिति भावः । सिषेविरे यतोवीरप्रियाः श्रियइति भावः । ततआरभ्य तदा प्रभृति अयशः करोतीत्ययशस्करं दुष्कीर्त्तिहेतुमित्यर्थः । कृञोहेतुताच्छील्यानुलोम्येष्विति टप्रत्ययः । अतः कृकमीत्यादिना विसर्ज्जनीयस्य सत्वं । उच्चैः प्रचुरं चलाअस्थिराइति प्रवादञ्जनापवादमापुः दिगीशानामपि सर्व्वस्वहारित्वात्तदौद्धत्यस्य प्राकट्यमिति भावः ॥ ४४ ॥

पुराणीति । किञ्च नाकिनां सुराणां गणैः यं हिरण्यकशिपुं आशङ्क्य बाधकत्वेनोत्प्रेक्ष्य स कालः आदिर्यस्मिन् तत्तदादि तदा प्रभृति स्वरूपशोभैवैकं फलं मुख्यं प्रयोजनं येषां तेषां सुरादीनां तानि तथोक्तानि प्रागीदृगसाध्यशत्रोरभावादिति भावः । नपुंसकमनपुंसकेनेत्यादिना नपुंसकैकशेषः । पुराणि दुर्गाणि प्राकारपरिखादिना अगम्यानि चक्रिरे । सुदुरोरधिकरणे इति

पुराणि दुर्गाणि निशातमायुधं
बलानि शूराणि घनाश्च कञ्चुकाः ।
स्वरूपशोभैकफलानि नाकिनां
गणैर्यमाशङ्क्य तदादि चक्रिरे ॥ ४५ ॥

स सञ्चरिष्णुर्भुवनान्तरेषु यां
यदृच्छयाशिश्रियदाश्रयः श्रियः ।
अकारि तस्यै मुकुटोपलस्खल
त्करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः ॥ ४६ ॥

गमेर्डः । आयधं निशातं निशितञ्चक्रे इति विभक्तिविपरिणामेना न्वयः । शो तनूकरणे इति धातोः क्तः शाछोरन्यतरस्यामितील विकल्पात्पचे आलम् । बलानि सैन्यानि शूराणि शौर्यवन्ति चक्रिरे सम्पादितानि कञ्चुकावारवाणाः लोहवर्माणीत्यर्थः । कञ्चुकोवार वाणोऽस्त्रीत्यमरः । घनाद्भेदाश्चक्रिरे इत्थं नित्यसन्नद्धा जाग्रति स्मेत्यर्थः ॥ ४५ ॥

स इति । अन्येषु भुवनेषु भुवनान्तरेषु । सुप्सुपेति समासः । सञ्चरिष्णुः सञ्चरणशीलः। अलङ्कृञित्यादिना चरेरिष्णुच् । श्रियो लक्ष्म्याः आश्रयः स हिरण्यकशिपुः । यदृच्छया स्वैरवृत्त्या । यदृच्छा स्वैरवृत्तिरित्यमरः। यां दिशमशिश्रियत् अगमत् । श्रियतेर्लुङ् णिश्रीत्यादिना चङि द्विर्भावः इयङादेशः । मुकुटोपलेषु मौलिरत्नेषु स्खलन्तः कराग्रेषान्तैः शिरसि बद्धाञ्जलिभिरित्यर्थः। उपलः प्रस्तरे रत्ने इति विश्वः। तिस्रोदशावाल्यकौमारयौवनानि जन्मसत्त्वावृद्धयोवा येषान्तैस्त्रिदशैर्देवैः । तिस्रः सन्ध्याः समा

सटाच्छटाभिन्नघनेन बिभ्रता
नृसिंह सैंहीमतनुं तनुं त्वया ।
स मुग्धकान्तास्तनसङ्गभङ्गुरै
रुरोविदारं प्रतिचस्करे नखैः ॥ ४७ ॥

त्ताखिसन्ध्यम् । तद्धितार्थोत्तरपदेत्यादिना समाहारे द्विगुः द्विगुरेकवचनं वा टाबन्तइति पक्षे नपुंसकत्वं अत्यन्तसंयोगे द्वितीया। तस्यै दिशे करैर्हस्तैः । नमः स्वस्तीत्यादिना चतुर्थी। नमः नमस्कारोऽकारि कृतम्। कृञः कर्म्मणि लुङ् चिण् भाव कर्म्मणोरिति चिण् । सन्ध्यावन्दनेऽपि दिग्नियमं परित्यज्य तदागमनभयात्तस्यै दिशे नमस्कारः कृतइति भावः ॥ ४६ ॥

अथ सोऽपि त्वयैव हतइत्याह। सटाच्छटेति । हे नृसिंह नरः सिंहइवेत्युपमितसमासः ना चासौ सिंहश्चेत्यपि प्रस्तावात्। सिंहस्ये मां सैंहीं तनुङ्कायं बिभ्रता नृसिंहावतारभाजेत्यर्थः। किम्भूतां अतनुं विस्तीर्णां अतएव सटाच्छटाभिः केशरसमूहैः भिन्नाघना मेघायेन अभ्रङ्कषविग्रहत्वादिति भावः। सटा जटाकेशरयोरिति तनुः काये कृशेऽल्पे चेति च विश्वः। त्वया स दैत्यः मुग्धौ नवौ। मुग्धः सौम्ये नवे मूढे इति वैजयन्ती । यौ कान्तास्तनौ तयोः सङ्गेनापि भङ्गुरैः कुटिलैर्नखैरुरोविदारं उरोविदार्य्य । परि क्लिश्यमाने चे ति णमुल्प्रत्ययः। प्रतिचस्करे हतः। किरतेः कर्म्मणि लिट् ऋच्छत्यृतामिति गुणः हिंसायां प्रतेश्चेति सुडागमः । वज्र कठिनोऽपि नखैर्विदारितइति वाङ्मनसयोरगोचरमहिम्नस्ते किं मसाध्यमिति भावः ॥ ४७ ॥

विनोदमिच्छन्नथ दर्प्पजन्मनो
रणेन कण्ड्वास्त्रिदशैः समं पुनः ।
स रावणोनाम निकामभीषणं
बभूव रक्षः क्षतरक्षणं दिवः ॥ ४८ ॥

अथास्य जन्मान्तरचेष्टितान्याचष्टे । विनोदमिति । अथ स हिरण्यकशिपुः पुनः भूयोऽपि त्रिदशैः समं सह । साकं सार्द्धं समं सहेत्यमरः। रणेन दर्प्पादन्तस्मात्राज्जन्म यस्यास्तस्याः कण्ड्वाः भुजकण्डूतेर्विनोदमपनोदमिच्छन् प्राग्भवनखक्षतैस्तदपनोदाभावादित्यर्थः । दिवः स्वर्गस्य क्षतं नष्टं रक्षणं रक्षा येन तत् क्षतद्युरक्षणमित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । अनेन देवसर्व्वस्वापहारित्वमुक्तं। भीषयतइति भीषणः नन्द्यादित्वात् ल्युः भियो हेतुभये षुगिति षुक्। निकामं भीषणः। सुप्सुपेति समासः । रावणोनाम रावणइति प्रसिद्धं रक्षोबभूव राक्षसयोनौ जातइत्यर्थः। विश्रवसोपत्यं पुमान् रावणइति विग्रहः । तस्यापत्यमित्यणि कृते विश्रवसोविश्रवणरवणाविति प्रकृतेरवणादेशः । पौराणिकास्तु रावयतीति व्युत्पादयन्ति तदुक्तमुत्तरकाण्डे यस्माल्लोकत्रयं चैतद्रावितं भयमागतं। तस्मात्त्वं रावणोनाम नाम्ना वीरोभविष्यसीति। रौतेर्ण्यन्तात्कर्त्तरि ल्युट् । रावणरक्षसोर्नियतलिङ्गत्वाद्विशेषणविशेष्यभावेऽपि स्वलिङ्गता॥ ४८ ॥

अथास्यौद्धत्यमष्टादशश्लोक्याचष्टे । प्रभुरिति । योरावणः भुवनत्रयस्य प्रभुः स्वामी बुभूषुः भवितुमिच्छुः। भुवः सन्नन्तादुप्रत्ययः। अतिरागादुत्साहान्न तु फलविलम्बननिर्वेदादिति भावः । दशमं

प्रभुर्बुभूषुर्भुवनत्रयस्य यः
शिरोऽतिरागाद्दशमं चिकर्त्तिषुः।
अतर्कयद्विघ्नमिवेष्टसाहसः
प्रसादमिच्छासदृशं पिनाकिनः ॥ ४९ ॥

समुत्क्षिपन् यः पृथिवीभृतां वरं
वरप्रदानस्य चकार शूलिनः।
त्रसत्तुषाराद्रिसुताससम्भ्रम
स्वयङ्ग्रहाश्लेषसुखेन निष्क्रयम् ॥ ५० ॥

शिरः चिकर्त्तिषुः कर्त्तितुं छेत्तुमिच्छुः। कृती छेदे इति धातोः सन्नन्तादुप्रत्ययः। इष्टसाहसः प्रियसाहसः अतएवेच्छासदृश मिच्छानुरूपं पिनाकिनः प्रसादं वरं विघ्नमिवातर्कयत् उत्प्रेक्षितवान् इति परमसाहसिकत्वोक्तिः इतआरभ्य श्लोकषट्केऽपि यच्छब्दस्य स रावणोनाम रक्षोबभूवेति पूर्व्वेणान्वयः। रङ्गराजस्तु न चक्रमस्याक्रमताधिकन्धरमिति उपरिष्टादन्वयइत्याह तदसत् गुणानां च परार्थत्वादिति न्यायादारुण्यादिवत्प्रत्येकं प्रधानान्वयिनां मिथःसम्बन्धायोगादित्यलम् शाखाचङ्क्रमणेन। पुरा किल रावणः काम्ये कर्म्मणि पशुपतिप्रीणनाय नव शिरांसि अग्नौ हुत्वा दशमारम्भे सन्तुष्टात्तस्मात् त्रैलोक्याधिपत्यं वव्रे इति पौराणिकी कथात्रानुसन्धेया ॥ ४९ ॥

अथ कैलासोत्क्षेपणवृत्तान्तमाह। समुत्क्षिपन्निति। योरावणः पृथिवीभृतां पर्व्वतानां वरं श्रेष्ठं कैलासं समुत्क्षिपन् दर्पादिति शेषः। शूलिनोवरप्रदानस्य पूर्व्वोक्तस्य त्रसन्त्याः शैलचलनेन बिभ्यत्या

पुरीमवस्कन्द लुनीहि नन्दनं
मुषाण रत्नानि हरामराङ्गनाः।
विगृह्य चक्रे नमुचिद्विषा बली
य इत्थमस्वास्थ्यमहर्दिवं दिवः ॥ ५१ ॥

तुषाराद्रिसुतायाः पार्व्वत्याः ससम्भ्रमोयः स्वयङ्ग्रहः प्रियप्रार्थनां विना कण्ठग्रहणं। सुप्सुपेति समासः। तेन आश्लेषः सम्मेलनं तेन यत्सुखं। तेन त्रैलोक्याधिपत्यसुखादुत्कृष्टेनेति भावः। निष्क्रयं प्रत्युपकारनिर्गतिं चकार। निष्क्रयोबुद्धियोगे स्यात्सामर्थ्ये निर्गतावपीति वैजयन्ती। यद्वा निष्क्रयं चकार क्रयेण व्यवहारेण याञ्चादोषदैन्यं ममार्ज्जेत्यर्थः। अत्र सुखवरदानयोर्विनिमयात् परिवृत्तिरलङ्कारः॥ ५० ॥

पुरीमिति। योबली बलवान् रावणः नमुचिद्विषा इन्द्रेण विगृह्य विरुध्य पुरीममरावतीमवस्कन्द अवरोध नन्दनं इन्द्रवनं। नन्दनं वनमित्यमरः। लुनीहि चिच्छेद। ई हल्यघोरितीकारः। रत्नानि श्रेष्ठवस्तूनि मणीन्वा। रत्नं श्रेष्ठे मणावपीति विश्वः। मुषाण मुमोष। मुष स्तेये हलः श्नः शानज्झाविति श्नः शानजादेशः। अमराङ्गनाः हर जहार। सर्वत्र पौनःपुन्येनेत्यर्थः इत्थमनेन प्रकारेण अहनि च दिवा चाहर्दिवं अहन्यहनीत्यर्थः। अचतुरेत्यादिना सप्तम्यर्थवृत्तौ द्वन्द्वे समासान्तोनिपातः। दिवः स्वर्गस्या स्वास्थ्यमुपद्रवं चक्रे। अत्रावस्कन्देत्यादौ क्रियासमभिहारे लोट् लोटोहिस्वौ च वा तध्वमोरित्यनुवृत्तौ समुच्चयेऽन्यतरस्यामिति विकल्पेन कालसामान्ये लोट्। तस्य यथोपग्रहं सर्वतिङादेशो हिस्वौ च प्रकरणादिना लर्थविशेषावसानं अतोहेरिति यथायोग्यं

सलीलयातानि न भर्तुरभ्रमो
र्न चित्रमुच्चैःश्रवसः पदक्रमम् ।
अनुद्रुतः संयति येन केवलं
बलस्य शत्रुः प्रशशंस शीघ्रताम् ॥ ५२ ॥
अशक्नुवन् सोढुमधीरलोचनः
सहस्ररश्मेरिव यस्य दर्शनम् ।
प्रविश्य हेमाद्रिगुहागृहान्तरं
निनाय बिभ्यद्दिवसानि कौशिकः ॥ ५३ ॥

हिलुक् पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः अवस्कन्दनादि क्रियाविशेषाणां समुच्चयः क्रियासमभिहारः तत्सामान्यस्य करोतेः। समुच्चये सामान्यवचनस्येत्यनुप्रयोगस्सक्रे इति । अत्र तिङ् वैचित्र्यात्सौशब्द्याख्योगुणः । सुपां तिङां परावृत्तिः सौशब्द्यमिति लक्षणात् समुच्चयस्यालङ्कारः॥ ५१ ॥

सलीलेति । संयति युद्धे । समुदायः स्त्रियां संयत्समित्याजि समिद्युध इत्यमरः । येन रावणेन अनुद्रुतोऽनुधावित. बलस्य शत्रु रिन्द्रः अभ्रमोर्भर्तुरैरावतस्य सलीलयातानि सभङ्गीकगमनानि न प्रशशंस तथा उच्चैःश्रवसः स्वाश्वस्य चित्रं नानाविधं पदक्रमं पादविक्षेपं अर्द्धपुलायितादिगतिविशेषमित्यर्थः न प्रशशंस किन्तु केवलं शीघ्रतां शीघ्रगामित्वमेव प्रशशंस अन्यथा शीघ्रं म.मास्कन्द्य ग्रहीष्यतीति भयादिति भावः॥ ५२ ॥

अशक्नुवन्निति । अधीरलोचनः अस्थिरदृष्टिः कौशिको महेन्द्रः उलूकश्च । महेन्द्रगुग्गुलूलूकव्यालग्राहेषु कौशिक इत्य

बृहच्छिलानिष्ठुरकण्ठघट्टना
द्विकीर्णलोलाग्निकणं सुरद्विषः ।
जगत्प्रभोरप्रसहिष्णु वैष्णवं
न चक्रमस्याक्रमताधिकन्धरम् ॥ ५४ ॥

मरः । सहस्ररश्मेः सूर्य्यस्येव यस्य रावणस्य विक्रमकर्म्मणो दर्शनं सोढुमशक्नुवन् । हेमाद्रेर्गुहेव गृहन्तस्यान्तरं प्रविश्य बिभ्यत्तत्रापि वेपमानएव । बिभीतेः शतरि नाभ्यस्ताच्छतुरिति नुमभावः । दिवसानि वासराणि निनाय । वा तु क्लीवे दिवसवासरौ इत्यमरः । यथा पेचकः सूर्य्योदये भीतः सन् तिष्ठति तथा सोऽपीति भावः । कौशिकइत्यभिधायाः प्रस्तुतैकगोचरत्वेनोभयश्लेषेऽपि विशिष्यश्लेषासम्भवात् उलूकविषयशब्दशक्तिमूलोध्वनिः सहस्ररश्मेरिवेत्युपमाननिर्व्वाहकत्वात् वाच्यसिद्ध्यङ्गम् ॥ ५३ ॥

बृहच्छिलेति । बृहति शिलेव निष्ठुरे कण्ठे घट्टनादभिघाताद्विकीर्णाविक्षिप्ताः लोलाश्चाग्निकणाः स्फुलिङ्गाः यस्य तत् अतएवाप्रसहिष्णु अनभिभावकं । प्रसहनमभिभवइतिवृत्तिकारः । अलङ्कृञित्यादिना इष्णुच् । वैष्णवं चक्रं सुदर्शनं जगत्प्रभोः सकललोकैकस्वामिनः अस्य सुरद्विषोरावणस्य कन्धरायामधि अधिकन्धरं अधिग्रीवं । विभक्त्यर्थेऽव्ययीभावः अव्ययीभावश्चेति नपुंसकत्वात् ह्रस्वोनपुंसके प्रातिपदिकस्येति ह्रस्वत्वम् । कण्ठोगलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपीत्यमरः । नाक्रमताप्रतिहतं न क्रमते स्म न प्रवर्त्तते स्म किन्तु प्रतिहतमेवेत्यर्थः । वृत्तिसर्गतायनेषु क्रमइति वृत्तावात्मनेपदं वृत्तिरप्रतिबन्धः ॥ ५४ ॥

स इन्द्रनीलस्थलनीलमूर्त्ती
रराज कर्च्चूरपिशङ्गवासाः ।
विस्त्वरैरम्बुरुहां रजोभि
र्य्यमस्वसुश्चित्र इवोदभारः ॥ ११ ॥

प्रसाधितस्यास्य मधुद्विषोऽभू
दन्यैव लक्ष्मीरिति युक्तमेतत् ।
वपुष्यशेषेऽखिललोककान्ता
सानन्यकान्ता ह्युरसीतरा तु ॥ १२ ॥

सइति । इन्द्रनीलस्थलमिव नीलमूर्त्तिः श्यामाङ्गः । संहितायां रोरीति रेफलोपः ढ्रलोपे पूर्व्वस्येति दीर्घः । कर्च्चूरं हरितालमिव पिशङ्गं वासोयस्य सः पीताम्बरोहरिः । हरितालन्तु कर्च्चूरमिति वैजयन्ती । स हरिर्विस्त्वरैः विसमरैः । इण्नशजिसर्त्तिभ्यः क्वरप् । अम्बुरुहां अम्बुजानां । रुहेः क्विप् । रजोभिः परागैश्चित्रश्चित्रवर्णः यमस्वसुर्यमुनायाः उदकस्य भारः पूरः उदभारः स इव रराज । मन्थौदनेत्यादिना उदकस्योदादेशः ॥ ११ ॥

प्रसाधितस्येति । प्रसाधितस्यालङ्कृतस्यास्य मधुद्विषः हरेः अन्यैवा सदृशी विभिन्ना च । अन्यौ विभिन्नासदृशाविति वैजयन्ती । लक्ष्मीः शोभा पद्मा च । शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरपि गद्यत इति विश्वः । अभूदित्येतद्युक्तं । कुतः हि यस्मात् सा प्रसाधनरूपा लक्ष्मीरशेषे वपुषि वसतीति शेषः । किञ्चाखिललोकस्य

कपाटविस्तीर्णमनोरमोरः
स्थलस्थितश्रीललनस्य तस्य।
आनन्दिताशेषजना बभूव
सर्व्वाङ्गसङ्गिन्यपरैव लक्ष्मीः ॥ १३ ॥

कान्ता प्रिया इतरा नित्या तु अन्यस्य कान्ता प्रिया न भवतीत्यनन्यकान्ता किन्तु तस्यैवेत्यर्थः । उरसि उरस्येव वसतीत्यर्थः अत्र हरेः प्रसाधनादसाधारणी शोभा जातेति पारमार्थिको वाक्यार्थः । अत्र लक्ष्मीशब्देन श्लेषमहिम्ना वाच्यायाः शोभायाः प्रतीयमानायाः श्रीदेव्या सहाभेदाध्यवसायादियमन्यैव लक्ष्मीरित्यभेदे भेदरूपातिशयोक्तिरलङ्कारः॥ १२ ॥

अथैनमेवार्थम्भङ्ग्यन्तरेणाह । कपाटेति । कपाटवद्विस्तीर्णे मनोरमे चोरःस्थले स्थिता श्रीरिति ललना कान्ता यस्य तस्य हरेरानन्दिताशेषजना सर्वाङ्गसङ्गिनी अत एवापरैवासाधारण्येव श्रीदेव्या अन्यैव लक्ष्मीः शोभा रमा च बभूव । स एवालङ्कारः । प्रायेणैकार्थमप्यनेकं श्लोकमुक्तिविशेषलाभाल्लिखन्ति कवयः । यथाह नैषधे आदावेव निपीयेत्यादि श्लोकद्वयं तथा खकेलिलेशेत्यादि श्लोकद्वयञ्चेति ॥ १३ ॥

अथ देवीसहचरस्यैवास्य याचेति सूचयन् प्रसाधनविधेः फलमाह । प्राणेति । भूषणतामुपेयुषां न तु प्रहरणतामिति भावः । दैत्यपतेः हिरण्यकशिपोः प्राणच्छिदां प्राणमुषां प्राणापहारिणां वज्रादपि कठोराणामित्यर्थः नखानां चतेन व्रणेन प्रकाशव्यक्तः कार्कश्यमेव गुणो ययोस्तौ स्तनौ स्तनानित्यर्थः ।

प्राणच्छिदां दैत्यपतेर्नखाना
मुपेयुषां भूषणतां क्षतेन ।
प्रकाशकार्कश्यगुणौ दधानाः
स्तनौ तरुण्यः परिवव्रुरेनम् ॥ १४ ॥

आकर्षतेवोर्द्ध्वमतिक्रशीया
नत्युन्नतत्वात्कुचमण्डलेन ।
ननाम मध्योऽतिगुरुत्वभाजा
नितान्तमाक्रान्तइवाङ्गनानाम् ॥ १५ ॥

जातावेकवचने प्राप्ते जातिभूयस्त्वे स्तनादिषु जातेर्द्वित्वविशिष्टत्वात् द्विवचनं । यथाह वामनः स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेणेति । दधानास्तरुण्योयुवतयः । वयसि प्रथमे इति ङीप् । एनं हरिं परिवव्रुः । अत्र हरिनखानां नरहरिनखभेदेऽप्य भेदोक्त्या स्तनयोश्च तादृक्काठिन्यासम्बन्धेऽपि तत् सम्बन्धोक्त्याति शयोक्ती तयोश्च सापेक्षत्वात्सङ्करः ॥ १४ ॥

आकर्षतेति । अत्युन्नतत्वाद्धेतोः ऊर्द्ध्वमाकर्षतेव नमन्तं मध्य मुन्नमयतेव स्थितेनेत्युत्प्रेक्षा । अतिगुरुत्वमतिभारत्वं अतिप्रवृद्धत्वञ्च भजतीति भाक् । भजो ण्विः । तेनाङ्गनानां कुचमण्डलेनाति क्रशीयान् अत्यन्तकृशतरः तनीयान् क्षीणश्च । रऋतोहलादे र्लघोरिति रेफादेशः । मध्योनितान्तमाक्रान्तः पीडितइव ननाम नतः प्रणतश्च । अत्र मध्यकुचमण्डलयोर्विशेषणसाम्यादरिविजिगीषु राजप्रतीतेः समासोक्तिः तथा वाच्ययोः प्रतीयमाना भेदेना

यां यां प्रियः प्रैक्षत कातराक्षीं
सा सा ह्रिया नम्रमुखी बभूव।
निःशङ्कमन्याः सममाहितेर्ष्या
स्तत्रान्तरे जघ्नुरमुं कटाक्षैः ॥ १६ ॥

क्रमणक्रियाकर्मकर्तृभावसम्भावितेयं नमनस्याक्रमणहेतुकत्वोत्प्रेक्षा इत्यनयोः सङ्करः उत्प्रेक्षयोस्तु नैरपेक्ष्यादसंसृष्टिरेवेति विवेकः ॥ १५ ॥

यां यामिति। प्रियोहरिर्यां यामङ्गनां। नित्यवीप्सयोरिति वीप्सायां द्विर्भावः एकपदं। प्रैक्षतालोकयत सासा। पूर्ववत् द्विर्भावः। कातराक्षी साध्वसाचकितलोचना सती ह्रिया नम्रमुखी बभूव। एतेन कार्य्यद्वारा लज्जासाध्वसभावोदयउक्तः। अन्यासा मीर्ष्याभावोदयमाह। अन्याः अप्रेक्षिताङ्गनाः आहितेर्ष्याः कृता क्षमाः सत्यः। परोत्कर्षाक्षमेर्ष्या स्यादिति लक्षणात्। तत्रान्तरे तस्मिन्ननीक्षणावसरे। क्लीवेऽन्तरञ्चावकाशे तादर्थ्येऽवसरेऽवधा विति वैजयन्ती। निःशङ्कं तदनीक्षणादेव विस्रब्धं यथा तथा समं युगपत् कटाक्षैरमुं हरिं जघ्नुः प्रजह्रुः सरोषमद्राक्षुः ॥ १६ ॥

अथास्य पञ्चभिर्दिव्यास्त्रसन्निधानमाह। तस्येत्यादि। अत सीसूनेन क्षुमाकुसुमेन समानभासः तुल्यकान्तेः स्निग्धश्याम स्येत्यर्थः। अतसी स्यादुमा क्षुमेत्यमरः। तस्य हरेरेकबाहुः भ्राम्यदावर्त्तमानं मयूखावलीनां मण्डलं चक्रवालं यस्य तेन चक्रेण सुदर्शनेन स्फुरन्महानावर्त्तोभ्रमोयस्य सः। स्यादावर्त्तो

तस्यातसीसूनसमानभासो
भ्राम्यन्मयूखावलिमण्डलेन ।
चक्रेण रेजे यमुनाजलौघः
स्फुरन्महावर्त्त इवैकबाहुः ॥ १७ ॥
विरोधिनां विग्रहभेददक्षा
मूर्त्तेव शक्तिः क्वचिदस्खलन्ती ।
नित्यं हरेः सन्निहिता निकामं
कौमोदकी मोदयति स्म चेतः ॥ १८ ॥

ऽन्सा क्षुमद्रत्यमरः । यमुनाजलानामोघः पूर इव रेजे चक्रन्दधा वित्यर्थः ॥ १७ ॥

विरोधिनामिति । विरोधिनां वैरिणां विग्रहभेदे शरीर विदारणे दक्षाः । शरीरं वर्ष्म विग्रह इत्यमरः । क्वचित् क्वापि अस्खलन्ती सर्व्वत्राप्रतिहतवृत्तिरित्यर्थः नित्यं सन्निहिता अन पायिनी अतएव मूर्त्ता मूर्त्तिमती शक्तिः सामर्थ्यमिव स्थितेत्युत्प्रेक्षा कौमोदकी गदा हरेश्चेतो निकामं मोदयति स्म सन्निधानेनेति भावः ॥ १८ ॥

न केवलमिति । अन्यस्य साधारणोन भवतीत्यनन्यसाधारण स्तस्य भावस्तत्ता तान्दधानः तथापि योनन्दकः स्वतया केवलं गजाश्वादिवत् स्वत्वेनैव मुरारेर्नन्दकोन किन्तु परेषां शत्रूणां ऽत्यर्थमुद्वेजयिता भीषयिता सन् अतएव नाम्नापि चन्द्रादिव न्नन्दयतीति नन्दक इत्यन्वर्थसंज्ञावत्वेनापि नन्दयितृत्वेनापीति

न केवलं यः स्वतया मुरारे
रनन्यसाधारणतान्दधानः ।
अर्थमुद्वेजयिता परेषां
नाम्नापि तस्यैव स नन्दकोऽभूत् ॥ १९ ॥

न नीतमन्येन नतिङ्कदाचित्
कर्णान्तिकप्राप्तगुणं क्रियासु ।
विधेयमस्याभवदन्तिकस्थं
शार्ङ्गन्धनुर्मित्रमिव द्रढीयः ॥ २० ॥

यावत् । तस्यैव तदीयएव योऽनन्यसाधारणत्वात्परोद्वेजकत्वाच्च तस्यैव नन्दकोनन्दयिता चेत्यर्थः । स नन्दकोनन्दकाख्यः खड्गो ऽभूत् सन्निहितोभूदित्यर्थः । सम्बन्धानुवादेन सन्निधानमेवात्र विधेयं प्रकरणात् अत्रानन्यसाधारणत्वपरोद्वेजकत्वपदार्थाभ्यां विशेषणगत्या नन्दकस्य तदीयतासमर्थनात् पदार्थहेतुकं काव्य लिङ्गमलङ्कारः ॥ १९ ॥

न नीतमिति । अन्येन पुरुषान्तरेण नतिमाकर्षणं भेदेन स्वानुकूल्यं च न नीतं न प्रापितं क्रियासु रणकर्मसु हिताहित कृत्येषु च कर्णान्तिकं कर्णगोचरं प्राप्तोगुणोमौर्वी आप्तताधर्मश्च यस्य तद्विधेयं क्रियासु वश्यं द्रढीयः दृढतरं पीडासहतर मिति यावत् शृङ्गस्य विकारः शार्ङ्गन्नाम धनुः मित्रमिवास्य हरे रन्तिकस्थं सन्निहितमभवत् ॥ २० ॥

प्रवृद्धेति । धियं रातीति धीरोमनोहरः मन्द्रोगम्भीरोऽम्बुदस्य मेघस्येव धीरस्य नादः प्रवृद्धोयेन सः प्रवृद्धमन्द्राम्बुदधीरनाद

प्रवृद्धमन्द्राम्बुदधीरनादः
कृष्णार्णवाभ्यर्णचरैकहंसः ।
मन्दानिलापूरकृतन्द्धानो
निध्वानमश्रूयत पाञ्चजन्यः ॥ २१ ॥
रराज सम्पादकमिष्टसिद्धे
स्सर्व्वासु दिक्ष्वप्रतिषिद्धमार्गम् ।
महारथः पुष्यरथं रथाङ्गी
क्षिप्रं क्षपानाथइवाधिरूढः ॥ २२ ॥

इत्युपमा । कृष्णएवार्णवः समुद्रस्तस्याभ्यर्णचरोऽन्तिकचरः । उपकण्ठान्तिकाभ्यर्णइत्यमरः । स चासावेकहंसश्चेति श्लिष्टपरम्परितरूपकं । मन्दानिलस्यापूरआपूरणन्तेन कृतं जनितं निध्वानन्दधानः अनाध्मातोऽपि मन्दमारुतप्रवेशादेव ध्वनतीति पाटवादतिशयोक्तिः ध्वन्यसम्बन्धेऽपि सम्बन्धकथनात् । पञ्चजनोनाम कश्चिदसुरस्तत्र भवः पाञ्चजन्योऽयं शङ्खः । वहिर्देवपञ्चजनेभ्यश्च वक्तव्यमिति ञ्यप्रत्ययः। अश्रूयत श्रूयते स्म पाञ्चजन्योऽपि सन्निहितोभूदित्यर्थः। वीणा श्रूयते पुष्पाण्याघ्रायन्ते इत्यादिवद्धर्म्मधर्म्मिणोरभेदोपचारात् पाञ्चजन्यस्य श्रवणोक्तिः ॥ २१ ॥

रराजेति । महान् रथोयस्य स महारथोरथिकविशेषः । आत्मानं सारथिं चाश्वान् रक्षन् युध्येत योनरः । स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाइति । रथाङ्गञ्चक्रमस्यास्तीति रथाङ्गी हरिः इष्टसिद्धेः सम्पादकं लक्षणवत्त्वात् । पुष्यः सर्व्वार्थसाधक इति शास्त्रादिति भावः । सर्व्वासु दिक्ष्वप्रतिषिद्धमार्गं अनिषिद्ध

ध्वजाग्रधामा ददृशेऽथ शौरे
स्संक्रान्तमूर्त्तिर्मणिमेदिनीषु ।
फणावतस्त्रासयितुं रसाया
स्तलं विविक्षन्निव पन्नगारिः ॥ २३ ॥

गमनमित्यर्थः अधिष्ठानशक्तेर्निरङ्कुशत्वात् । पुष्योहस्तोमैत्रमथा श्विनस्त्र चत्वार्य्याङ्कः सर्व्वदिग्द्वारकाणीति शास्त्रादिति भावः । चिप्रं चिप्रगामिनं अन्यत्र चिप्रनामकं । चिप्रं चाश्विदिनेश पुष्यमिति शास्त्रात् । पुष्यरथं क्रीडारथं । असौ पुष्यरथः क्रीडा यानं न समराय यदित्यमरः । अधिरूढः सन् पुष्योरथइव तं पुष्यरथमधिरूढः पुष्यनक्षत्रगतः चपानाथश्चन्द्रइव रराज ॥ २२ ॥

ध्वजेति । अथ रथारोहणानन्तरं शौरेः कृष्णस्य ध्वजाग्रं धाम स्थानं यस्य सः मणिमेदिनीषु मणिमयकुट्टिमेषु सङ्क्रान्तमूर्त्तिः प्रतिविम्बिताङ्गः सन् पन्नगारिर्गरुत्मान् फणावतः सर्प्पान् त्रासयितुं द्रावयितुं रसायास्तलं पातालं विविक्षन् प्रवेष्टुमिच्छन्निवेत्युत्प्रेक्षा । विशतेः सन्नन्ताल्लटः शत्रादेशः । ददृशे दृष्टः । सोऽपि सन्निहितो ऽभूदित्यर्थः ॥ २३ ॥

यियासतइति । यातुमिच्छतोयियासतः । यातेः सन्नन्ताल्लटः शत्रादेशः । तस्य हरेः सम्बन्धी महीं धरन्तीति महीध्राः पर्व्वताः । मूलविभुजादित्वात्कइति वामनः । महीध्रादयोमूलविभुजादि दर्शनादिति । तेषां रन्ध्राणि विलानि तेषां भिदा भेदनं । षिद्भिदा दिभ्योऽङ् । तस्यां पटीयान् समर्थतरः पटहप्रणादआनकघोषः महार्णवस्यौघः समुद्रस्य प्रवाहः अन्यानि जलानि जलान्तराणीव ।

यियासतस्तस्य महीध्ररन्ध्र
भिदापटीयान् पटहप्रणादः ।
जलान्तराणीव महार्णवौघः
शब्दान्तराण्यन्तरयाञ्चकार ॥ २४ ॥
यतः स भर्त्ता जगतां जगाम
धर्त्ता धरित्र्याः फणिना ततोऽधः ।
महाभराभुग्नशिरःसहस्र
साहायकव्यग्रभुजं प्रसस्रे ॥ २५ ॥

सुप्सुपेति समासः । अन्यान् शब्दान् शब्दान्तराणि । पूर्व्ववत्समासः । अन्तरयाञ्चकार अन्तर्हितानि चकार छादयामासेत्यर्थः । अन्तरशब्दादन्तर्द्धानार्थात्करोतिर्ण्यन्ताल्लिट् । अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्यइत्युभयत्राप्यमरः ॥ २४ ॥

यतइति । जगताम्भर्त्ता धारयिता कुक्षिस्थाखिललोकइत्यर्थः । कर्त्तृकर्म्मणोः कृतीति कर्म्मणि षष्ठी । स हरिर्यतोयेन भूमार्गेण जगाम ततस्तस्मिन्भूभागे अधः पाताले धरित्र्याः धरण्याः धर्त्ता धारयिता । पूर्व्ववत् षष्ठी । फणिना शेषेण महता भरेण आसमन्ताद्भुग्नस्य कुब्जीभूतस्य शिरःसहस्रस्य साहायके सहायकर्म्मणि । योपधाद्गुरूपोत्तमाद्वुञ् । व्यग्राः त्वरमाणाः भुजायस्मिन् तद्यथा तथा प्रसस्रे प्रसृतम् । भावे लिट् । हरिश्चचालेत्यर्थः । अत्र शेषस्य विशिष्टप्रसरणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ २५ ॥

अथोच्चकैस्तोरणसङ्गभङ्ग
भयावनम्रीकृतकेतनानि ।
क्रियाफलानीव सुनीतिभाजं
सैन्यानि सोमान्वयमन्वयुस्तम् ॥ २६ ॥
श्यामारुणैर्वारणदानतोयै
रालोडिताः काञ्चनभूपरागाः ।
आनेमिमग्नैः शितिकण्ठपक्ष
क्षोदद्युतश्चुक्षुदिरे रथौघैः ॥ २७ ॥

अथेति । अथ हरिचलनानन्तरं उच्चकैरुन्नते तोरणे द्वार दारुणि सङ्गेन भङ्गस्तस्माद्भयेनावनम्रीकृतानि केतनानि यैस्तानि सैन्यानि सोमस्यान्वयः सन्तानः तं सोमान्वयं हरिं सुनीतिभाजं सुष्ठुनीतिमन्तं क्रियाः सामाद्युपायप्रयोगास्तासां फलानि हिरण्य भूमित्रादिलाभादूवान्वयुः अन्वगच्छन् । यातेर्लङ् लङः शाकटायनस्येति सेर्जुस् ॥ २६ ॥

श्यामेति । श्यामानि चारुणानि च तैः श्यामारुणैः कृष्णलो हितैः । वर्णोवर्णेनेति समासः । वारणदानतोयैर्गजमदोदकै रालोडिताः सम्मिलिताअतएव शितिकण्ठपिच्छक्षोदाः मयूरवर्हचूर्णा इव द्योतन्तइति तथोक्ताः । क्विप् । उपमालङ्कारः । काञ्चनस्य भूः काञ्चनभूस्तस्याः परागाः पांशवः आनेमि नेमिमभिव्याप्य । तस्यान्ते नेमिः स्त्रीत्यमरः । आङ् मर्य्यादाभिविध्योरित्यभिविधा वव्ययीभावः । मग्नै रथौघः चुक्षुदिरे पिष्टा इत्यर्थः । परागाणां

न लङ्घयामास महाजनानां
शिरांसि नैवोद्धतिमाजगाम।
अचेष्टताष्टापदभूमिरेणुः
पदाहतोयत्सदृशं गरिम्णः ॥ २८ ॥
निरुध्यमानायदुभिः कथञ्चि
न्मुहुर्यदुच्चिक्षिपुरग्रपादान्।
ध्रुवं गुरून्मार्गरुधः करीन्द्रा
नुलङ्घ्य गन्तुं तुरगास्तदीषुः ॥ २९ ॥

विशिष्टपेषणासम्बन्धेऽपि तत् सम्बोक्तेरतिशयोक्तिः। तथा च महती गजरथसम्पत्तिर्व्यज्यतइत्यलङ्कारेण वस्तुध्वनिः ॥ २७ ॥

नेति । अष्टसु धातुषु पदं प्रतिष्ठा अस्येति अष्टापदं सुवर्णं । रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियामिति सुवर्णपर्यायेष्वमरः । तस्य भूमिस्तस्याः रेणुः काञ्चनभूरजः पदाहतोरथाश्वादिचरणताडितोऽपि हन्तियर्थः महाजनानां बहुजनानां पूज्यानाञ्च शिरांसि न लङ्घयामास नाक्रामति स्म किं बहुना उद्धतिमुत्पवनन्दर्पञ्च नैवाजगाम कुतः यद्यस्मात् गरिम्णोगुरुत्वगुणस्य माहात्म्यस्य च । प्रियस्थिरेत्यादिना गुरोर्गरादेशः । सदृशमनुरूपं यथा तथा अचेष्टत अलङ्घनव्यवहारे गुरुत्वस्यौद्धत्यप्रतिबन्धकत्वादिति भावः । अत्रानौद्धत्यादिप्रस्तुतसुवर्णपरागविशेषणसाम्यादप्रस्तुतसुजनप्रतीतेः समासोक्तिरलङ्कारः ॥२८॥

निरुध्यमानादिति। तुरगाः यदुभिरारूढैरिति भावः कथञ्चिदति प्रयत्नेन निरुध्यमानावल्गाकर्षणेन वार्य्यमाणाअपि यद्यस्मादग्रा

अवेक्षितानायतवल्गमग्रे
तुरङ्गिभिर्यत्ननिरुद्धवाहैः ।
प्रक्रीडितान्रेणुभिरेत्य तूर्णं
निन्युर्जनन्यः पृथुकान्पथिभ्यः ॥ ३० ॥

श्च ते पादाश्च तानग्रपादान्। हस्ताग्राग्रहस्तादयो गुणगुणिनो रभेदभेदयोगादिति वामनः सामानाधिकरण्येन समासः। मुक्तरुचिचिपुरुत्क्षिप्तवन्तः तत्तस्मान्मार्गं रुन्धन्तीति मार्गरुधः मन्दगमनेन मार्गरोधिनः । किम् । गुरून् महतः पूज्यांश्चाल ङ्घ्यानपीति भावः । करीन्द्रानुलङ्घ्य गन्तुमीषुरिच्छन्ति स्म। ध्रुव मित्युत्प्रेक्षायां । गुरवोऽपि सन्मार्गरोधकाः परैरुल्लङ्घ्यन्तइति अलङ्कारेण वस्तुध्वनिः ॥ २९ ॥

अवेक्षितानिति । आयता आकृष्टा वल्गा मुखरज्जुर्यस्मिन् कर्मणि तद्यथा तथा यत्नेन दुर्वारवेगत्वात् अतिप्रयत्नेन निरुद्धा वाहावाजिनोयैस्तैः । वाजिवाहार्वगन्धर्वहयइत्यमरः । तुरङ्गिभिः रश्वसादिभिरग्रे पुरोदेशेऽवेक्षितानालोकितान् रेणुभिः प्रक्रीड न्तीति प्रक्रीडितान् पांशुक्रीडाकरान्। कर्त्तरि क्तः। पृथुकान् शिशून् । पृथुकः शावकः शिशुरित्यमरः । जनन्यस्तूर्णं मेत्य पथिभ्योनिन्युः अपसारयाञ्चक्रुरिति स्वभावोक्तिः ॥ ३० ॥

दिदृक्षमाणाइति । अनघमकलङ्कं मुरारिं दिदृक्षमाणाः द्रष्टु मिच्छन्तः । दृशेः सन्नन्ताल्लटः शानजादेशः ज्ञाश्रुस्मृदृशां सन इत्यात्मनेपदं । जनौघारथ्यायां रथ्यायां प्रतिरथ्यं याथार्थ्ये

दिदृक्षमाणाः प्रतिरथ्यमीयु
र्मुरारिमारादनघं जनौघाः ।
अनेकशस्संस्तुतमप्यनल्पा
नवन्नवं प्रीतिरहो करोति ॥ ३१ ॥

उपेयुषो वर्त्म निरन्तराभि
रसौ निरुच्छ्रासमनीकिनीभिः ।
रथस्य तस्यां पुरि दत्तचक्षु
र्विद्वान् विदामास शनैर्न्नयतम् ॥ ३२ ॥

ऽव्ययीभावः । आरात्समीपं । आराद्दूरसमीपयोरित्यमरः । ईयुर्जग्मुः । इणोलिट् दीर्घइणः कितीत्यभ्यासदीर्घः । ननु नित्यपरिचिते का दिदृक्षेत्यत्राह । अनेकशइति । अनेकशोबहुवारमित्यर्थः । बह्वल्पार्थाच्छस्कारकादन्यतरस्यामिति शस्प्रत्ययः । संस्तुतं परिचितमपि वस्तु जनेनेति शेषः । संस्तवः स्यात्परिचयइत्यमरः । अनल्पा अधिका प्रीतिः प्रेम कर्त्री नवंनवं । आभीक्ष्णेन नवं करोति । नित्यवीप्सयोरिति द्विर्भावः । अहोशब्दः पुराणस्यापि नूतनत्वमित्याश्चर्य्यं यथा परप्रेमास्पदं वस्तु नित्यदृष्टमपि अदृष्टचरमिव प्रतिक्षणं दिदृक्ष्यते भगवानपि तथैवेति भावः सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३१ ॥

उपेयुषइति । विद्वानभिज्ञः अतएव तस्यां पुरि नगर्य्यां दत्तचक्षुः निसृष्टदृष्टिरसौ हरिर्निरन्तराभिर्नीरन्ध्राभि

मध्येसमुद्रं ककुभः पिशङ्गी
र्या कुर्वती काञ्चनवप्रभासा।
तुरङ्गकान्तामुखहव्यवाह
ज्वालेव भित्त्वा जलमुल्ललास ॥ ३३ ॥

रनीकिनीभिः सेनाभिर्निरुच्छ्वासं अतिसङ्कटं वर्त्म उपेयुषः प्राप्तस्य रथस्य शनैर्यातं सम्बन्धनिबन्धनं मन्दगमनं न विदामास न विवेद। उषविदजागृभ्योऽन्यतरस्यामिति आम्प्रत्ययः। व्यासङ्गा दसंवेदनं न तु तत्त्वाज्ञानादिति भावः। व्यासङ्गस्य पदार्थत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ ३२ ॥

अथैकत्रिंशत् श्लोकैर्द्वारकां वर्णयति। मध्यइति ॥ समुद्रस्य मध्ये मध्येसमुद्रं। पारे मध्ये षष्ठ्या चेति विकल्पादव्ययीभावः मध्यशब्दस्य तत्सन्नियोगादेकारान्तत्वं। काञ्चनवप्रभासा हेम प्राकारप्रभया ककुभो दिशः पिशङ्गीः पिङ्गलवर्णाः। गौरादित्वात् ङीष्। कुर्व्वती या पूः जलं समुद्रोदकं भित्त्वा उत्थितेति शेषः। तुरङ्गकान्तायाः वडवाया मुखे हव्यं वहतीति हव्यवाहो ऽग्निः। कर्मण्यण्प्रत्ययः। तस्य वाडवाग्नेः ज्वालेव उल्ललास उद्बभासे। अत्र समुद्रान्तर्लीनायां वडवानलज्वालायां कदाचि त्सम्भाव्यमानस्य मध्योल्लसनस्य पुरि दर्शनाभेदाध्यवसाये नास्याज्वालात्वमुत्प्रेक्ष्यते इवशब्दोऽयमुत्प्रेक्षाया एव व्यञ्जको नोपमाया ईदृग्ज्वालाया अप्रसिद्धत्वेनोपमानत्वायोगात्। मन्ये शङ्के ध्रुवं नूनं प्रायइत्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृश इत्याचार्य्यदण्डी ॥ ३३ ॥

कृतास्पदा भूमिभृतां सहस्रै
रुदन्वदम्भःपरिवीतमूर्त्तिः ।
अनिर्विदा या विदधे विधात्रा
पृथ्वी पृथिव्याः प्रतियातनेव ॥ ३४ ॥
त्वष्टुः सदाभ्यासगृहीतशिल्प
विज्ञानसम्पत्प्रसरस्य सीमा ।
अदृश्यतादर्शतलामलेषु
छायेव या स्वर्जलधेर्जलेषु ॥ ३५ ॥

कृतास्पदेति । भूमिभृतां राज्ञां गिरीणां च सहस्रैः कृतास्पदा कृताधिष्ठाना । आस्पदं प्रतिष्ठायामिति निपातः । उदकमस्यास्तीत्युदन्वानुदधिः । उदन्वानुदधिः सिन्धुरित्यमरः । उदन्वानुदकाचेति निपातनात्साधुः। तस्याम्भोभिः परिवीता परिवेष्टिता मूर्त्तिः स्वरूपं यस्याः सा पृथ्वी पृथुः । वोतो गुणवचनादिति ङीप्। एवम्भूता या पूः न निर्विद्यते न खिद्यते इत्यनिर्वित् । विदेर्ज्ञानार्थत्वान्निःपूर्व्वात्सत्सू द्विषेत्यादिना क्विप् । तेनानिर्विदा अखिन्नेन अन्यथा शिल्पसौष्ठवासिद्धेरिति भावः विधात्रा प्रयत्नइति पृथिवी भूः । प्रथेरौणादिकः षिवन् षिद्गौरादिभ्यश्चेति ङीष् । तस्याः प्रतियातना प्रतिकृतिरिव विदधे विहिता । प्रतियातना प्रतिच्छाया प्रतिकृतिरित्यमरः । भूप्रतिनिर्धित्वोत्प्रेक्षया पुरो वैचित्र्यविस्तारादि वस्तु व्यज्यते ॥ ३४ ॥

त्वष्टुरिति । त्वष्टुर्विश्वकर्म्मणः सदाभ्यासेन गृहीतोलब्धोयः शिल्पविज्ञानसम्पदः प्रसरः प्रकर्षः तस्य सीमा अवधिरप्रतिमेतिः

रथाङ्गभर्त्रेऽभिनवं वराय
यस्याः पितेव प्रतिपादितायाः ।
प्रेम्णोपकण्ठं मुहुरङ्कभाजो
रत्नावलीरम्बुधिराबबन्ध ॥ ३६ ॥
यस्यास्चलद्वारिधिवारिवीचि
च्छटोच्छलच्छङ्खकुलाकुलेन ।
वप्रेण पर्य्यन्तचरोडुचक्रः
सुमेरुवप्रोऽन्वहमन्वकारि ॥ ३७ ॥

यावत् या पूरादर्शतलामलेषु दर्पणपृष्ठस्वच्छेषु । दर्पणे मुकुरादर्शावित्यमरः । जलधेर्जलेषु स्वः स्वर्गस्य । स्वरव्ययं स्वर्ग नाकइत्यमरः । छाया प्रतिविम्बमिवादृश्यतइत्युत्प्रेक्षा । छायात्वना तपे कान्तौ प्रतिविम्बार्कजाययोरिति वैजयन्ती ॥ ३५ ॥

रथाङ्गेति । अम्बुधिः पितेव वराय श्रेष्ठाय जामात्रे च । वरो जामातरि श्रेष्ठइति विश्वः। रथाङ्गभर्त्रे चक्रधराय हरये अभिनवं यथा तथा प्रतिपादितायाः अङ्कः समीपउत्सङ्गस्य तद्भाजः । अङ्कः समीपउत्सङ्गे चिह्ने स्थानापराधयोरिति केशवः । यस्याः पुरउपकण्ठमन्तिके । अत्यन्तसंयोगे द्वितीया । अन्यत्र कण्ठे । विभक्त्यर्थेऽव्ययीभावः । मुहुः प्रेम्णा रत्नावलीराबबन्ध आसमन्ताद्बबन्ध । श्लेषानुप्राणितेयमुपमेति सङ्करः ॥ ३६ ॥

यस्यादति । चलन्तीनां वारिधिवारिवीचीनाञ्छटासु परम्परासु उच्छलद्भिरुत्पतद्भिः शङ्खानाङ्कुलैराकुलेन सङ्कीर्णेन यस्याः पुरोवप्रेण प्राकारेण पर्य्यन्ते चरतीति तत् तादृशं उडुचक्रं

वणिक्पथे पूगकृतानि यत्र
भ्रमागतैरम्बुभिरम्बुराशिः ।
लोलैरलोलद्युतिभाञ्जि मुष्णन्
रत्नानि रत्नाकरतामवाप ॥ ३८ ॥

जघनमण्डलं यस्य सः सुमेरोर्वप्रः सानुः । सानुप्रकारयोर्वप्रमित्यु भयत्रापि सज्जनः । अहन्यहनीत्यन्वहं । अव्ययं । विभक्तीत्यादिना याथार्थ्येऽव्ययीभावः अनश्च नपुंसकादन्यतरस्यामिति समासान्तो ऽच् । अन्वकारि अनुकृतः तत्साम्यं प्रापितइत्यर्थः । मेरूप मानादग्रस्य तत्तुल्यमौन्नत्यं व्यज्यते ॥ २७ ॥

वणिक्पथइति । यत्र यस्यां पुरि वणिजां पथि वणिक्पथे आपणे अपूगाः पूगाः सम्पद्यमानानि कृतानि पूगकृतानि पुञ्जी कृतानि । श्रेण्यादयः कृतादिभिरिति समासः । श्रेण्यादिषुच्व्यर्थ वचनमिति च्व्यर्थता । अलोलद्युतिभाञ्जि स्थिरप्रभावन्ति रत्नानि लोलैश्चलैः अतएव भ्रमागतैः जलनिर्गममार्गादागतैः । भ्रमास्तु जलनिर्गमादित्यमरः । अम्बुभिर्मुष्णन् अपहरन् अम्बुराशिरर्णवः जलमात्रसारोऽपीति भावः रत्नाकरतामवाप प्राप न तु प्रागिति भावः । अम्बुराशेः प्राक् रत्नसम्बन्धेप्यसम्बन्धोक्तेरति शयोक्तिः तथा च पुर्य्याः समुद्रातिशायिनी रत्नसमृद्धिर्वस्तु व्यज्यते ॥ ३८ ॥

अभ्रंदूति । यत्र पुरि अपांनिधिः समुद्रः अभ्रंश्च्योतन्ति चरन्तीत्यभ्रंश्च्युतोजलस्राविणः अतएव फेनैः पिनद्धभासः पिहित कान्तीन् । अपिपूर्व्वान्नह्यतेः कर्म्मणि क्तः वष्टि भागुरिरल्लोप

अभ्रंलिहः कोमलरत्नराशी
न्पयांनिधिः फेनपिनद्धभासः ।
यत्रातपे दातुमिवाधितल्पं
विस्तारयामास तरङ्गहस्तैः ॥ ३९ ॥

यच्छालमुत्तुङ्गतया विजेतुं
दूरादुदस्थीयत सागरस्य ।
महोर्म्मिभिर्व्याहतवाञ्छितार्थैं
र्व्रीडादिवाभ्यासगतैर्विलिल्ये ॥ ४० ॥

अवाप्योरुपसर्गयोरित्यपेरकारलोपः । कोमलानुत्कृष्टान् रत्न राशीनातपे दातुं शोषणार्थं निधातुमिवेति फलोत्प्रेक्षा तल्पे ष्वट्टेषु अधितल्पं । तल्पं शय्याट्टदारेष्वित्यमरः । विभक्त्यर्थेऽव्ययी भावः । तरङ्गैरेव हस्तैर्व्विस्तारयामास प्रसारितवान् । अत्रातपदानस्य तरङ्गहस्तसाध्यत्वेनोत्प्रेक्षारूपकयोः सङ्करः ॥ ३९ ॥

यच्छालमिति । सागरस्य महोर्म्मिभिः कर्तृभिर्यच्छालं यस्याः प्राकारं । प्राकारोवरणः शालइत्यमरः । उत्तुङ्गतया औन्नत्यगुणेन जेतुमिवेत्यर्थः । फलोत्प्रेक्षेयं व्यञ्जकाप्रयोगाद्गम्या । दूरादुद स्थीयत उत्थितम् । भावे लङ् । अभ्यासगतैः समीपगतैः । समीप निकटाभ्यासमन्निकृष्टसनीडवदित्यमरः । व्याहतोवाञ्छितार्थः शालविजयरूपोयेषां तैर्विजयाक्षमैरित्यर्थः । अतएव व्रीडादिवेति हेतूत्प्रेक्षा ऊर्म्मिभिर्विलिल्ये विलीनं । लीयतेर्भावे लिट् । अत्र शक्त स्यापि अविजिगीषोर्व्रीडामुदयात्सापेक्षत्वेनोत्प्रेक्षयोः सङ्करः ॥ ४० ॥

कुतूहलेनेव जवादुपेत्य
प्राकारभित्त्या सहसा निषिद्धः ।
रसन्नरोदीद्भृशमम्बुवर्ष
व्याजेन यस्याबहिरम्बुवाहः ॥ ४१ ॥

यदङ्गनारूपसरूपतायाः
कञ्चिद्गुणं भेदकमिच्छतीभिः ।
आराधितोऽद्धा मनुरप्सरोभि
श्चक्रे प्रजाः स्वाः सनिमेषचिह्नाः ॥ ४२ ॥

कुतूहलेनेति । अम्बु वहतीत्यम्बुवाहोमेघः । कर्मण्यण् । कुतूहले नान्तःप्रवेशकौतुकेनेवेति हेतूत्प्रेचा जवात् उपेत्य यस्याःप्राकार भित्त्या सहसा निषिद्धोनिवारितः अतएव बहिरेव रसन् गर्ज्जन् दुःखात् क्रन्दंश्चेति श्लेषः अम्बुवर्षव्याजेन भृशमरोदीत् अश्रूणि मुक्तवान् । रुदिरश्रुविमोचने लङ् रुदश्च पञ्चभ्यइतीडागमः । अत्राम्बुवर्षव्याजेनोत्पादकस्योक्तश्लेषोत्प्रेक्षासापेक्षत्वात्सङ्करः ॥४१॥

यदङ्गनेति । यस्यां पुर्य्यामङ्गनानां रूपं सौन्दर्य्यमाकारोवा। रूपं स्वभावे सौन्दर्य्ये आकारश्लेषयोरपीति विश्वः । तस्य सरूप तायाः सारूप्याद्भेदकं व्यावर्त्तकं कञ्चिद्गुणं धर्म्ममिच्छतीभि रपेक्षमाणाभिः । आच्छीनद्योर्नुमिति विकल्पान्नुमभावः । अप्सरोभि राराधितः प्रार्थितोमनुर्मानुषसृष्टिकर्त्ता स्वाः स्वकीयाः प्रजाः निमेषः पक्ष्मपातएव चिह्नं व्यावर्त्तकं तेन सह वर्त्तन्तइति सनिमेष चिह्नाः । तेन सहेति तुल्ययोगइति बहुब्रीहिः । चक्रे अद्धा

स्फुरत्तुषारांशुमरीचिजालै-
र्विनिह्नुताः स्फाटिकसौधपङ्क्तीः ।
आरुह्य नार्य्यः क्षणदासु यत्र
नभोगता देव्य इव व्यराजन् ॥४३॥

तत्त्वमित्युत्प्रेक्षा । तत्त्वे त्वद्धाञ्जसा द्वयोरित्यमरः। अत्र स्वाभाविक निमेषस्याप्सरसः प्रार्थनाहेतुकत्वोत्प्रेक्षया द्वारकाङ्गनानां निमेष मात्रभिन्नममानुषं सौन्दर्य्यं वस्तु व्यज्यते ॥ ४२ ॥

स्फुरदिति । यस्यां पुरि क्षणदासु रात्रिषु नार्य्यः स्फुरद्भि स्तुषारांशोश्चन्द्रस्य मरीचिजालैश्चन्द्रिकाभिः विनिह्नुताः अप ह्नुताः तदेकरूपतापत्तेरगृह्यमाणा इत्यर्थः । अत एव सामान्या लङ्कारः । सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणात् । स्फाटिकानां स्फटिकविकाराणां सौधानां पङ्क्तीरारुह्य नभोगता देव्यो देवाङ्गना इव । देवशब्दस्य पचादिषु देवडिति पाठात् टिड्ढाणञित्यादिना ङीप् । व्यराजन् सौधानामग्रहणादभ्र ङ्कषत्वाच्च तत्र लक्ष्यमाणाः स्त्रियः खेचर्य्य इव रेजुरित्यर्थः । अत्र नभोगतत्वोत्प्रेक्षायाः पूर्व्वोक्तसामान्यसापेक्षत्वात् सङ्करः ॥ ४३ ॥

कान्तेति । यत्र पुरि क्षपासु रात्रिषु प्रतिक्षपं । विभक्त्यर्थे ऽव्ययीभावः । कान्तानि रम्याणि इन्दुकान्तोपलानां चन्द्रकान्त मणीनां कुट्टिमानि बद्धभूमयो येषु तेषु । कुट्टिमं बद्धभूमिः स्यादिति हलायुधः । हर्म्यतलेषु उच्चैरुन्नताः प्रणाल्यो जलमार्गाः। द्वयोः प्रणाली पयसः पदव्यामित्यमरः । अधः पातिनो ऽध स्वराः पयामुचो मेघाः यासान्ताः अधःकृतमेघमण्डलत्वात्

कान्तेन्दुकान्तोपलकुट्टिमेषु
प्रतिक्षपं हर्म्यतलेषु यत्र।
उच्चैरधःपातिपयोमुचोऽपि
समूहमूहुः पयसां प्रणाल्यः॥ ४४॥
रतौ ह्रिया यत्र निशाम्य दीपान्
जालागताभ्योऽधिगृहं गृहिण्यः।
बिभ्युर्विडालेक्षणभीषणाभ्यो
वैदूर्य्यकुड्येषु शशिद्युतिभ्यः॥ ४५॥

अजातवृष्टिपाताअपीत्यर्थः। विरोधालङ्कारः। पयसां समूहं पयःपूरमूहुर्वहन्ति स्म चन्द्रकान्तनिष्यन्दैरिति भावः। वहे लिंट् वचिस्वपीत्यादिना सम्प्रसारणं। अत्र सौधानां प्रणालीनां च तादृगौन्नत्यपयःपूरासम्बन्धेऽपि तत्सम्बन्धोक्त्यातिशयोक्तिः ॥ ४४॥

रताविति। यत्र पुरि गृहेष्वधिगृहं। विभक्त्यर्थेऽव्ययीभावः। गृहिण्यः कुलाङ्गनाः अतएव रतौ रतिकाले ह्रिया दीपान्निशाम्य निर्वाप्य। शमेर्मित्त्वाद्ध्रस्वादेशाभावश्चिन्त्यः। जालागताभ्योगवाक्षमार्गप्रविष्टाभ्यः। जालं गवाक्षआनायइति विश्वः। विदूरात्प्रभवन्तीति वैदूर्य्याणि बालवायजानि मणयः। वैदूर्य्यं बालवायजमिति विश्वः। विदूरात् ञ्यइति ञ्यप्रत्ययः। अत्र विदूरशब्दोबालवायस्यादेशः पर्य्यायोवा तत्रोपचरितोवा तेन बालवायाद्रिरेरसौ प्रभवति न विदूरान्नगरात् तत्र तु संस्क्रियतइत्याक्षेपः प्रयुक्तः। यदुक्तं। बालवायोविदूरं च प्रकृत्यन्तरमेव वा। न वै तत्रेति

यस्यामतिश्लक्ष्णतया गृहेषु
विधातुमालेख्यमशक्नुवन्तः।
चक्रुर्युवानः प्रतिबिम्बिताङ्गाः
सजीवचित्रा इव रत्नभित्तीः॥ ४६॥

सावर्ण्यभाजां प्रतिमागतानां
लक्ष्यैः स्मरापाण्डुतयाङ्गनानाम्।
यस्यां कपोलैः कलधौतधाम
स्तम्भेषु भेजे मणिदर्पणश्रीः॥ ४७॥

चेद्भूयाज्जित्वरोवदुपाचरेदिति। तेषां कुड्येषु भित्तिषु सङ्क्रान्ताभ्य इति शेषः अतएव तच्छायापत्त्या पैङ्गल्यात् बिडालेक्षणवत् भीषयन्त इति भीषणाभ्योभयङ्कराभ्यः। नन्द्यादित्वात्कर्त्तरि ल्युप्रत्यये टाप्। शशिद्युतिभ्योबिभ्युः भीताः मौग्ध्यादिति भावः। बिभेतेर्लिट्। अत्र लज्जावारणाय दीपनिर्व्वापणे न केवलन्तदसिद्धिः प्रत्युत भयञ्चोत्पन्नमित्यनर्थोत्पत्तिरूपोविषमभेदः। विरुद्धकार्य्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत्। विरूपघटना या स्याद्विषमालङ्कृतिर्मतेति लक्षणात्॥ ४५॥

यस्यामिति। यस्यां पुरि गृहेष्वतिश्लक्ष्णतया रत्नभित्तीनामतिस्निग्धतया आलेख्यञ्चित्रं विधातुन्निर्मातुमशक्नुवन्तोयुवानः प्रतिबिम्बिताङ्गाः स्वयन्तासु सङ्क्रान्तमूर्त्तयः सन्तोरत्नभित्तीः सजीवचित्राः सचेतनचित्रवतीरिव चक्रुरित्युत्प्रेक्षा॥ ४६॥

सावर्ण्येति। यस्यां पुरि कलधौतधामस्तम्भेषु हेमागारस्तम्भेषु। कलधौतं रौप्यहेम्नोरिति विश्वः। प्रतिमागतानां सावर्ण्यभाजां

शुकाङ्गनीलोपलनिर्म्मितानां
लिप्तेषु भासा गृहदेहलीनाम्।
यस्यामलिन्देषु न चक्रुरेव
मुग्धाङ्गनागोमयगोमुखानि ॥ ४८॥

तत्सावर्ण्यादगृहीतभेदानामित्यर्थः अतएव सामान्यालङ्कारः। सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणात्। अङ्गनानां स्मरापाण्डुतया लक्ष्यैर्विभिन्नवर्णलाञ्छेदेन गृह्यमाणैरित्यर्थः कपोलैर्मणिदर्पणानां स्फटिकमुकुराणां श्रीरिव श्रीर्भेजे प्राप्ता इति निदर्शना। सा चोक्तसामान्यप्रसादलब्धेति तेनास्याः सङ्करः ॥ ४७ ॥

शुकाङ्गेति। यस्यां पुरि मुग्धाङ्गनाः शुकाङ्गवन्नीलोपलाः नीलमणयोमकरतानीत्यर्थः। उपलः प्रस्तरे मणाविति विश्वः। तैर्निर्म्मितानां गृहाणां देहल्योगृहद्वारशाखाधारदारूणि। गृहावग्रहणी देहलीत्यमरः। तासाम्भासा लिप्तेषु अलिन्देषु द्वारवहिर्भागेषु। प्रघाणप्रघणालिन्दावहिर्द्वारप्रकोष्ठकइत्यमरः। गोः पुरीषं गोमयम्। गोश्च पुरीषे इति मयट्। तस्य गोमुखानि विलेपनानि। गोमुखं कुटिलाकारे वाद्यभाण्डे विलेपने इति विश्वः। न चक्रुरेव। मरकतप्रभायां विलेपनभ्रान्त्येति भावः। अतएव भ्रान्तिमदलङ्कारः कविसम्मतसादृश्यादस्वन्तरमतिर्हि यत्। स भ्रान्तिमानित्यलङ्कारसर्व्वस्वकारलक्षणात्॥ ४८ ॥

गोपानसीष्विति। यत्र पुरि गृहाणि गोपानसीषु वलभीच्छादनाधारेषु वंशपञ्जरेष्वित्यर्थः। अतएव गोपानसी तु वलभी

गोपानसीषु क्षणमास्थितानां
मालम्बिभिश्चन्द्रकिणां कलापैः।
हरिन्मणिश्यामतृणाभिरामै
र्गृहाणि नीध्रैरिव यत्र रेजुः ॥ ४९॥
बृहत्तुलैरप्यतुलैर्वितान
मालापिनद्धैरपि चावितानैः।
रेजे विचित्रैरपि या सचित्रै
र्गृहैर्विशालैरपि भूरिशालैः ॥ ५०॥

च्छादने वक्रदारुणीत्यत्र पटलाधारवंशपञ्जरे इत्याह स्वामी। क्षणमीषत्कालम्। अत्यन्तसंयोगे द्वितीया। आस्थितानामासीनानां चन्द्रकाः मेचकाः। समौ चन्द्रकमेचकावित्यमरः। तद्वतां चन्द्रकिणां मयूराणां आलम्बिभिर्लम्बमानैः कलापैः बर्हैः। कलापो भूषणे बर्हेइत्यमरः। हरिन्मणयो मरकतानि। गारुत्मतं मरकतमश्मगर्भं हरिन्मणिरित्यमरः। तद्वत् श्यामैस्तृणैरभिरामाणि हरिततृणमयानीत्यर्थः। तैर्नीध्रैः पटलप्रान्तैरिव रेजुः। वलीकनीध्रे पटलप्रान्तेऽथ पटलं छदिरित्यमरः। छादनपर्य्यायौ पटलच्छदी छद्यञ्चलवाचिनो (वलीकनीध्रे छदेराधारो वंशपञ्जरो गोपानसीति विवेकः। अतएव हरितलालम्बनादिगुणक्रियानिमित्तत्वान्नीध्रैरिवेति जातिस्वरूपोत्प्रेक्षा॥ ४९ ॥

बृहदिति। या पूः बृहत्यस्तुला उपरिस्थाप्यदार्वाधारभूतानि स्तम्भाग्रपीठानि येषु तैः बृहत्तुलैः तथाप्यतुलः तद्रहितैरिति

चिक्रंसया कृत्रिमपत्त्रिपङ्क्तेः
कपोतपालीषु निकेतनानाम् ।
मार्जारमप्यायतनिश्चलाङ्गं
यस्यां जनः कृत्रिममेव मेने ॥ ५१ ॥

विरोधः अनुपमैरित्यविरोधः। तुला माने पलशते सादृश्ये राशि भाण्डयोः। गृहाणान्दारुबन्धाय पीठ्यामिति हेमः । वितानाना मुल्लोचानां मालाभिः पङ्क्तिभिः पिनद्धैराच्छादितैः तथाप्य वितानैस्तद्रहितैरिति विरोधः अशून्यैरित्यविरोधः समस्तवस्तु सम्वद्धैरित्यर्थः। अस्त्री वितानमुल्लोचोवितानन्त्रिषु तुच्छकमित्यु भयत्राप्यमरः । विचित्रैरालेख्यरहितैरपि सचित्रैः तत्सहितै रिति विरोधः । विचित्रैरद्भुतैरिति परिहारः । आलेख्या श्चर्ययोश्चित्रमित्यमरः। विगताः शाला गृहैकदेशायेषां तानि। शाला गृहे तरुस्कन्धे शाखागारैकदेशयोरिति विश्वः। तैः विशालै रपि भूरिशालैः प्रचुरगृहैकदेशविशिष्टैरिति विरोधः विशालैः पृथुलैरित्यविरोधः । विशालं पृथुलं महदित्यमरः। वेः शाल च्छङ्कटचाविति शालच् प्रत्ययः। गृहैः रेजे । अपिरयं सर्व्वत्र विरोधे विरुद्धवदाभासाद्विरोधालङ्कारः। विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचइति काव्यप्रकाशलक्षणात् ॥ ५० ॥

चिक्रंसयेति । यस्यां पुरि निकेतनानां वेश्मनां । वेश्म सद्म निकेतनमित्यमरः । कपोतान्पक्षिणः पालयन्तीति कपोतपाल्यो विटङ्कापरनामानः स्तम्भाग्रप्रसारिताः दारुविशेषाः । कपोत पालिकायान्तु विटङ्कं पुन्नपुंसकमित्यमरः । कर्म्मण्यणि ङीप्।

क्षितिप्रतिष्ठोऽपि मुखारविन्दै
र्वधूजनश्चन्द्रमधश्चकार।
अतीतनक्षत्रपथानि यत्र
प्रासादशृङ्गाणि वृथाध्यरुक्षत् ॥ ५२ ॥

तासु कृत्रिमपत्त्रिणां दारुमयपक्षिणां पङ्क्तेः। कर्मणि षष्ठी॥ चिक्रंसया क्रमितुमिच्छया जिघृक्षयेत्यर्थः। क्रमेः सन्नन्तादप्रत्यया दित्यकारप्रत्यये टाप् स्नुक्रमोरनात्मनेपदनिमित्ते इतीडागमोऽत्र भवति। अत्र क्रमेर्वृत्त्यादिव्यतिरिक्तार्थेऽप्यनुपसर्गाद्वेति वैकल्पिक स्यात्मनेपदनिमित्तस्यानुपसर्गत्वस्य वैवक्षिकस्य सम्भवात्। आयत मानतं वा निश्चलमङ्गं यस्य तं मार्जारं विडालमपि। (ओतु र्विडालो मार्जार इत्यमरः। जनः कृत्रिमं क्रियानिर्वृत्तमेव मेने न तु वास्तवमित्यर्थः। ड्वितः क्त्रिः क्त्रेर्मन्नित्यमिति मप्प्रत्ययः। अनेन कृत्रिमाकृत्रिमभेदादुर्ग्रहइति शिल्पज्ञानातिशयोक्तिः अत्र कविकल्पितसादृश्यान्मार्जारजनयोः कृत्रिमाकृत्रिमेषु विपरीत मतिवर्णनाद्भ्रान्तिमदलङ्कारः॥ ५१ ॥

क्षितीति। यस्यां पुरि वधूजनः क्षितौ प्रतिष्ठा यस्य सः भूमि स्थितोऽपि चन्द्रं दिवि स्थितमिति भावः। तत्रापि मुखैरेवा रविन्दैरधश्चकारेति विरोधः स्वलावण्यमहिम्ना अधरीचकारेति परिहाराद्विरोधालङ्कारः। अतीतानि नक्षत्रपथमतीतनक्षत्र पथानि। अत्यादयः क्रान्ताद्यर्थे द्वितीयेति समासः द्विगु प्राप्तापन्नेत्यादिना परवल्लिङ्गताप्रतिषेधः। प्रासादशृङ्गाणि वृथा अध्यरुक्षत् अधिरोहति स्म अनधिरुह्यैवाधःकरणादिति भावः॥

रम्याइति प्राप्तवतीः पताका
रागं विविक्ताइति वर्द्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकाः
समं वधूभिर्वलभीर्युवानः ॥ ५२ ॥

रोहतेर्लुङ् शलइगुपधादनिटः क्सइति च्लेः क्सादेशः। अत्राधःकरण वाक्यार्थस्य श्लेषविरोधोपजीव्यवैयर्थ्यै हेतुत्वात्सङ्कीर्णः काव्यलिङ्ग भेदः ॥ ५२ ॥

रम्याइति । यस्यां पुरि युवानोरम्यारमणीयाइति हेतोः पताकाः प्राप्तवतीः उत्क्षिप्तध्वजाइत्यर्थः । अन्यत्र रम्याइत्येवं पताकाः प्राप्तवतीः प्रसिद्धिङ्गताइत्यर्थः । पताका वैजयन्त्याञ्च सौभाग्ये ऽर्कध्वजेऽपि च । इति हेतौ प्रकरणे प्रकारादिसमाप्तिष्वितु भयत्रापि विश्वः। विविक्ता विजना विमलाश्च इति हेतोः. रागं वर्द्धयन्तीः । विविक्तौ पूतविजनावित्यमरः । नमद्वलीकाः नम्र नीध्राः। वलीकनीध्रे पटलप्रान्तइत्यमरः । अन्यत्र नमन्त्योवल्य स्त्रिवल्याख्यामध्यरेखायासान्तानमद्वलीकाः । नद्यृतश्चेति क प्रत्ययः। वली मध्यमरेखोर्म्मिजीर्णलग्नहदारुष्विति वैजयन्ती। वलभीः कूटागाराणि। कूटागारं तु वलभीत्यमरः । वधूभिः सममसेवन्त वधूसहिताश्चसेवन्तेत्यर्थः। अत्र वधूनां वलभीनां च प्रकृतानामेव धर्म्मसाधर्म्येणौपम्यावगमात्केवलप्रकृतगोचरा तुल्य योगिता न श्लेषः तत्र विशेष्यस्यापि श्लिष्टत्वनियमात् । यथाऽऽहुः। प्रस्तुतानान्तथान्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगितेति ॥ ५२ ॥

सुगन्धितामप्रतियत्नपूर्व्वां
बिभ्रन्ति यत्र प्रमदाय पुंसां ।
मधूनि वक्त्राणि च कामिनीना
मामोदकर्म्मव्यतिहारमीयुः ॥ ५४ ॥
रतान्तरे यत्र गृहान्तरेषु
वितर्द्दिनिर्य्यूहविटङ्कनीडः ।
रुतानि शृण्वन् वयसाङ्गणोऽन्ते
वासित्वमाप स्फुटमङ्गनानाम् ॥ ५५ ॥

सुगन्धितामिति । यत्र पुरि न प्रतियत्नः संस्कारः पूर्व्वा यस्या स्तामप्रतियत्नपूर्व्वामकृत्रिमां स्वाभाविकीमित्यर्थः । प्रतियत्नस्तु संस्कारइति वैजयन्ती । शोभनोगन्धोयेषां तेषां भावस्तत्ता तां सुगन्धितां सौरभ्यं विभ्रन्ति बिभ्राणानि । वा नपुंसकस्येति नुमागमः । मधूनि मद्यानि कामिनीनां वक्त्राणि च यूनां प्रमदाय प्रीत्यै आमोदकर्म्मणोवासनाधानस्य व्यतिहारं परस्परकरणमीयुः अन्योन्य गन्धेन अन्योन्यं वासयामासुरित्यर्थः । इणो लिट् । अत्रापि मधूनां वक्त्राणां च प्रकृतत्वात्तत्पूर्व्वकएव तुल्ययोगितामेदः तेन यूनां मधु वासितवधूवदनपानं वदनवासितगण्डूषपानञ्च वस्तु व्यज्यते तेन च निरातङ्कभोगाः पौराइति गम्यते ॥ ५४ ॥

रतान्तरइति । यत्र पुरि गृहान्तरेषु वितर्दयोविहारवेदिकाः । स्याद्वितर्दिस्तु वेदिकेत्यमरः । तासां निर्य्यूहामत्तवारणाख्या उपाश्रयाः । निर्य्यूहोमत्तवारणइति वैजयन्ती । तेषां विटङ्काः उपरितन्यः कपोतपालिकाः तएव नीडाः कुलायाः यस्य सः ।

छन्नेष्वपि स्पष्टतरेषु यत्र
स्वच्छानि नारीकुचमण्डलेषु ।
आकाशसाम्यं दधुरम्बराणि
न नामतः केवलमर्थतोऽपि ॥ ५६ ॥

कुलायो नीडमस्त्रियामित्यमरः । वयसां शुकसारिकादिपक्षिणां गणः । वयः पक्षिणि बाल्यादाविति विश्वः । अङ्गनानां वितर्दिषु रमसाणानामिति भावः । रतान्तरे रतानि रतिकूजितानि शृण्वन् अन्ते समीपे वसन्तीत्यन्तेवासिनः शिष्याः । छात्रान्तेवासिनौ शिष्य इत्यमरः । शयवासवासिष्वकालादित्यलुक् । तेषां भावस्तत्त्वमाप । समीपे प्रतिशब्दं यथाश्रुतमुच्चारणादेवमुत्प्रेक्ष्यते । अतएव स्फुटमिति व्यञ्जकप्रयोगः ॥ ५५ ॥

छन्नेष्विति । यत्र पुरि छन्नेषु आच्छादितेषु । वा दान्तेत्यादिना वैकल्पिको निपातः । स्पष्टतरेषु स्फुटतरं लक्ष्यमाणेष्वित्यर्थः । नारीकुचमण्डलेषु स्वच्छानि स्फटिकादिवदतिरोधायकानि अम्बराणि वस्त्राणि केवलं नामतोऽम्बरमिति नाम्नैवाकाशसाम्यं न दधुः । अम्बरं व्योम्नि वाससीति विश्वः । किन्तु अर्थतोऽपि अर्थक्रिययापि तत्साम्यं दधुः । स्वयमतिसूक्ष्मत्वादव्यवधायकत्वं दृष्ट्यादेर्मूर्त्तान्तरगत्यविघातित्वञ्चेत्यादिनापि साम्यं दधुरित्यर्थः । उपमालङ्कारः ॥ ५६ ॥

यस्यामिति । यस्यां पुरि अजिह्माः अवक्राः अन्यत्राकपटाः दम्भादिरहिता इत्यर्थः । आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथेति स्मरणादिति भावः । जिह्मः कपटवक्रयोरिति विश्वः ।

न

यस्यामजिह्मामहतीमपङ्काः
सीमानमत्यायतयोऽत्यजन्तः ।
जनैरजातस्खलनैर्न जातु
द्वयेऽप्यमुच्यन्त विनीतमार्गाः ॥ ५७ ॥

अपङ्काः कर्द्दमरहितानिष्पापाश्च । पङ्कोऽघे कर्द्दम इति हेमः । महतीं सीमानं राजकल्पितक्षेत्रमानं मर्य्यादां कुलागतानुष्ठानस्थितिञ्च अत्यजन्तः अत्यक्तमहामर्य्यादा इत्यर्थः । अतिमात्रा आयतिरायामः उत्तरकालश्च येषां ते अत्यायतयः । आयतिस्तूत्तरे काले संयमायामयोरपीति विश्वः । द्वये द्विरूपा अपि । प्रथमचरमतयेत्यादिना जसि विभाषया सर्व्वनामसंज्ञा । विनीतमार्गाः सुरचितपुरवीथयः सुशिक्षिताचारपद्धतयश्च न जातं स्खलनं पाषाणादिप्रतिघातो विरुद्धाचरणं च येषां तैर्जनैः जातु कदाचिदपि नामुच्यन्त न त्यक्ताः न कदाचित् खिलीकृता इत्यर्थः । अत्र मार्ग्गशब्दस्य साधर्म्यादेकवृन्तावलम्बिफलद्वयवदेकशब्देनार्थद्वयप्रतीतेः द्वयानामपि मार्ग्गाणां प्रकृतत्वाच्च केवलप्रकृतविषयोऽर्थश्लेषः । विशेष्यस्यापि श्लिष्टत्वान्न तुल्ययोगिता ॥ ५७ ॥

परस्परेति । यत्र पुरि परस्परस्पर्द्धीन्यहमहमिकयान्योन्यसामर्षाणि परार्द्ध्यानि श्रेष्ठानि रूपाणि सौन्दर्य्याणि यासान्ताः । रूपं स्वरूपे सौन्दर्य्य इति विश्वः । पुरे भवाः पौराः ताः स्त्रियः पौरस्त्रियः । स्त्रियाः पुंवदित्यादिना पुंवद्भावः । विधाय निर्माय वेधाः स्रष्टा श्रियो लक्ष्मीदेव्याः निर्मित्या निर्माणेन प्राप्तं यत् घुणेन वज्रकीटेन क्षतस्योत्कीर्णस्यैकवर्णस्य उपमया साम्येन वाच्य

परस्परस्पर्द्धिपरार्द्ध्यरूपाः
पौरस्त्रियो यत्र विधाय वेधाः ।
श्रीनिर्म्मितिप्राप्तघुणाक्षरैक-
वर्णोपमावाच्यमलं ममार्ज्ज ॥ ५८ ॥

क्षुण्णं यदन्तःकरणेन वृक्षाः
फलन्ति कल्पोपपदास्तदेव ।
अध्यूषुषो यामभवन् जनस्य
याः सम्पदस्ता मनसोऽप्यगम्याः ॥ ५९ ॥

मपवादः तदलमत्यन्तं तदेव मलमिति केचित् ममार्ज घुणाक्षर वत् याहच्छिकमिदं श्रीदेवतासौन्दर्य्यशिल्पं न कौशलमित्ययशः क्षालितवानित्यर्थः । अनया चातिशयोक्त्या पौरस्त्रीणां रमासमान सौन्दर्य्यं वस्तु व्यज्यते ॥ ५८ ॥

क्षुण्णमिति । यदन्तःकरणेन क्षुण्णमभ्यस्तं ममेदम्भूयादिति भूयोभूयः सङ्कल्पितमित्यर्थः कल्पयन्ति सङ्कल्पितार्थानिति कल्पाः कल्पाइत्युपपदं व्यावर्त्तकं येषां ते कल्पोपपदाः वृक्षाः कल्पवृक्षाः तदेव फलन्ति निष्पादयन्ति । फलनिष्पत्ताविति धातोर्लट् । किन्तु यां पुरमध्यूषुषो यस्यामुषितवन्तः । उपान्वध्याङ्वसइति कर्म्मत्वं भाषायां सदवसश्रुवइति क्वसुप्रत्ययः । जनस्य याः सम्पदो ऽभवन् ता मनसोऽप्यगम्याः वाचामभूमयइति किमु वक्तव्यमिति भावः । गृहे गृहे कल्पवृक्षसम्बन्धातिशयोक्त्या पौराणां देवेन्द्रभोगो व्यज्यते । इह कल्पइत्युपपदं स्वसंज्ञैकदेशो येषामिति व्याख्याने हिरण्यपूर्व्वं कशिपुमित्यादिवदवाच्यवचनदोषावकाशः ॥ ५९ ॥

कलादधानः सकलाः स्वभाभि
रुद्भासयन् सौधसिताभिराशाः ।
यां रेवतीजानिरियेष हातुं
न रौहिणेयेन च रोहिणीशः ॥ ६० ॥

बाणाहवव्याहतशम्भुशक्ते
रासत्तिमासाद्य जनार्दनस्य ।
शरीरिणा जैत्रशरेण यत्र
निःशङ्कमूषे मकरध्वजेन ॥ ६१ ॥

कलादिति । सकलाः समग्राः कलाश्चतुःषष्टिविद्याः षोडश भागांश्च दधानः । कला शिल्पे कालभेदइति । कला तु षोडशोभाग इति चामरः । सुधयावलिप्तं सौधन्तद्वत्सिताभिः स्वभाभि राशादिशउद्भासयन् रेवती ककुद्मिकन्या पूर्वकं अस्य जाया यस्य स रेवतीजानिः । जायया निङिति समासान्तोनिङादेशः लोपोव्योर्वलीति यलोपः । रोहिण्याअपत्यं पुमान् रौहिणेयः बलभद्रः । स्त्रीभ्योढक् । यां पुरीं हातुन्त्यक्तुं न इयेष नेच्छति स्म । लिट् । रोहिणीशश्चन्द्रश्च हातुं न इयेष । अत्र रौहिणेयरोहिणी शयोः परोत्कर्षावहत्वेन द्वयोः प्रकृतत्वाद्दिश्येष्वश्लिष्टत्वाच्च केवलप्रकृतविषया तुल्ययोगिता । गतमन्यत् ॥ ६० ॥

बाणेति । यत्र पुरि बाणाहवे बाणासुरयुद्धे व्याहता क्षयं नीता शम्भुशक्तिर्येन तस्य हरविजयिनोजनार्दनस्य कृष्णस्यासत्ति मत्यासत्तिमासाद्य पुत्रत्वं प्राप्येत्यर्थः शरीरिणा विग्रहवता न त्वनङ्गेनेति भावः । जेतारएव जैत्राः जयशीलाः । तृन्नन्तात्प्रज्ञादित्वा

निषेव्यमाणेन शिवैर्मरुद्भि-
रध्यास्यमाना हरिणा चिराय।
उद्रश्मिरत्नाङ्कुरधाम्नि सिन्धा-
वाह्वास्त मेरावमरावतीं या ॥ ६२ ॥

इण् प्रत्ययः। ते शरायस्य तेन मकरध्वजेन कामेन प्रद्युम्नरूपे णेति भावः। निःशङ्कं निर्भीकमूषे उषितं। वस निवासे भावे लिट् वचिस्वपीत्यादिना सम्प्रसारणम्। शङ्का वितर्कभययोरिति विश्वः। अत्र शम्भुशक्तिव्याघातपदार्थस्य विशेषणगत्या निःशङ्क निवासहेतुत्वोक्तेः काव्यलिङ्गभेदः। पुरा किल भगवान् भक्तवत्सलो धूर्जटिर्बाणप्रेम्णा बाणाभियोधिनं हरिमभियुज्य निर्जितइति पौराणिकाः कथयन्ति ॥ ६१ ॥

निषेव्यमाणेनेति। शिवैर्मरुद्भिर्मन्दमारुतैः अन्यत्र शिवैरुद्रै र्मरुद्भिर्मरुद्गणैश्च चिराय निषेव्यमाणेन हरिणा श्रीकृष्णेन शक्रेण चाध्यास्यमाना अधिष्ठीयमाना उद्रश्मीनां रत्नाङ्कुराणां धाम्नि स्थाने एकत्र रत्नाकरत्वादन्यत्र रत्नसानुत्वाचेति भावः सिन्धौ स्थितेति शेषः या पूर्म्मेरौ स्थितामम रायस्यां सन्तीत्यमरावती मिन्द्रनगरीं। मतौ बह्वचोनाजिरेति दीर्घः संज्ञायां मादुपधायाश्चेति वत्वं। आह्वास्त स्पर्द्धया आहूतवती अमरावती मनुचकारेत्यर्थः। ह्वयतेर्लुङ् स्पर्द्धायामाङः इत्यात्मनेपदं लिपिसिचिह्वश्चेति आत्मनेपदेष्वन्यतरस्यामिति च्लेरङभावपक्षे सिजादेशः। अत्र प्रथमार्थे श्लेषेऽपि सिन्धौ मेरौ स्थितेति प्रतिविम्बाभावेन साधर्म्योक्तिः श्लेषानुप्राणितोपमेति सङ्क्षेपः।

स्निग्धाञ्जनश्यामरुचिः सुवृत्तो
बध्वाइवाध्वंसितवर्णकान्तेः ।
विशेषकोवा विशिशेष यस्याः
श्रियं त्रिलोकीतिलकः स एव ॥ ६३ ॥

आङ्गास्तेति सादृश्यप्रतिपादकः शब्दः स्पर्द्धते कयते दैष्टीत्यनुशासनात् ॥ ६२ ॥

स्निग्धेति । स्निग्धं यदञ्जनं तद्वत्तेन च श्यामरुचिः सुवृत्तः सद्वृत्तिः सुष्ठु वर्त्तुलश्च । त्रयाणां लोकानां समाहारस्त्रिलोकी । तद्धितार्थेत्यादिना समासः सङ्ख्यापूर्व्वोद्विगुरिति द्विगुसंज्ञा अकारान्तोत्तरपदोद्विगुः स्त्रियामिष्यतइति स्त्रीत्वं द्विगोरिति ङीप् । तस्यास्तिलकोभूषणभूतः स हरिरेव विशेषकोवा तिलक इवेत्यर्थः । इववद्वा यथाशब्दाइत्यनुशासनात् । तमालपत्रतिलकचित्रकाणि विशेषकम् द्वितीयञ्च तुरीयञ्च न स्त्रियामित्यमरः । अध्वंसिता वर्णानां ब्राह्मणादीनां कान्तिरौज्ज्वल्यं यस्याः तस्याः पुरः अन्यत्राध्वंसितोवर्णो गौरादिः कान्तिर्लावण्यं च यस्यास्तस्याः । वर्णोद्विजादौ शुक्लादावित्युभयत्राप्यमरः । बध्वाइव श्रियं विशिशेष विशेषितवान् । अनेकशब्देयमुपमेत्येके । शब्दमात्रसादृश्यात् श्लेषइत्यन्ये । श्लेषोपमेत्याह दण्डी ॥ ६३ ॥

तामिति । अतुलप्रतापः स हरिः तां पूर्व्वोक्तां पुरमोचमाणः पुरस्तात् पूर्व्वस्यान्दिशि । सप्तम्यर्थे तसिल् प्रत्ययः । प्रतोलीं रथ्यां । रथ्या प्रतोली विशिखेत्यमरः । प्रापत् प्राप्तवान् । लुङि पूषादित्यादिना च्लेरङादेशः । वज्राणां तोरणप्रासादादिगतहीरकादि

तामीक्षमाणः स पुरं पुरस्ता
त्प्रापत्प्रतोलीमतुलप्रतापः ।
वज्रप्रभोद्भासिसुरायुधश्री
र्या देवसेनेव परैरलङ्घ्या ॥ ६४ ॥
प्रजा इवाङ्गादरविन्दनाभेः
शम्भोर्जटाजूटतटादिवापः ।
मुखादिवाथ श्रुतयोविधातुः
पुरान्निरीयुर्मुरजिद्ध्वजिन्यः ॥ ६५ ॥

मणीनां प्रभाभिरुद्भासिनी सुरायुधश्रीरिन्द्रचापलक्ष्मीर्यस्यां सा । इह वज्रग्रहणं मणिमात्रोपलक्षणं अन्यथेन्द्रायुधासाम्यादिति भावः । अन्यत्र वज्रस्य कुलिशस्य प्रभाभिरुद्भासिनी सुरायुधानामितर देवतायुधानां श्रीर्यस्याः सा । वज्रोऽस्त्री हीरके पवावित्यमरः । या प्रतोली देवसेना सुरचमूरिव परैः शत्रुभिरलङ्घ्या दुष्प्रधर्ष्या ॥ ६४ ॥

प्रजाइति । अरविन्दनाभेर्विष्णोरङ्गात् प्रजाइव । यतोवा इमानि भूतानि जायन्तइति श्रुतेरिति भावः । शम्भोर्जटाजूट तटादापइव गङ्गाजलानीव विधातुर्मुखात् श्रुतयइव मुरजितोहरेः ध्वजिन्यः सेनाः पुरान्निरीयुः निर्गताः । मालोपमेयं ॥ ६५ ॥

स्निग्यद्भिरिति । अन्योन्येषां मुखाग्रेषु सङ्गेन स्खलन्तः खलीनाः कविकायस्मिन्कर्म्मणि तद्यथा तथा । कविका तु खलीनोऽस्त्री त्यमरः । स्निग्यद्भिः संघृष्यद्भिः विलोलैः मुहुरुच्चलद्भिर्हरिभि स्तुरङ्गैः करणैरश्वान् वारयन्ति ये तेऽश्ववाराः अश्वारोहाः परस्परेण

स्निग्धद्भिरन्योन्यमुखाग्रसङ्ग
स्खलत्खलीनं हरिभिर्विलोलैः ।
परस्परोत्पीडितजानुभागा
दुःखेन निश्चक्रमुरश्ववाराः ॥ ६६ ॥

निरन्तरालेऽपि विमुच्यमाने
दूरं पथि प्राणभृतां गणेन ।
तेजोमहद्भिस्तमसेव दीपै
र्द्विपैरसम्बाधमयाम्बभूवे ॥ ६७ ॥

त्पीडितजानुभागाः सन्तोदुःखेन निश्चक्रमुः निर्जग्मुः । अत्र स्वभावोक्त्यातिशयोक्तेः सङ्करः ॥ ६६ ॥

निरन्तरालइति । तमसा तिमिरेणेव प्राणभृताङ्गणेन प्राणिवर्गेण कर्त्रा निरन्तरालेऽपि पूर्व्वं स्खेनैवातिसङ्कटेऽपि पथि सम्प्रति दूरं दूरतएव विमुच्यमाने सति एकत्र दीपभयादन्यत्र द्विपभयाच्चेत्यर्थः । तेजोमहद्भिर्बलाधिकैः प्रभासम्पन्नैश्च । तेजोबलप्रभातेजइति विश्वः । द्विपैर्दीपैरिवासम्बाधमसङ्कीर्णमयाम्बभूवे जग्मे । न लग्वैरिव कृच्छ्रादिति भावः । अय गतौ भावे लिट् दयायासश्चेत्याम्प्रत्ययः । स्वतेजसैव दूरोत्सारिततमस्के दीपाइव तथोत्सारितप्राणिके पथि निरर्गलं द्विपाः प्रययुरित्यर्थः । तमसीति सप्तम्यन्तपाठे तु तमसः पथ्युपमानत्वे द्विपागमनात्पथइव तमसो दीपागमनात्प्राक्तनप्राणिवर्गेण निरन्तरालत्वं पश्चान्मुच्यमानत्वं च न सम्भवतीत्युपमानोपमेययोर्वैरूप्यं स्यात् । तृतीयान्त

शनैरनीयन्त रयात्पतन्तो
रथाः क्षितिं हस्तिनखादखेदैः ।
सयत्नसूतायतरश्मिभुग्न
ग्रीवाग्रसंसक्तयुगैस्तुरङ्गैः ॥ ६८ ॥

बलोर्मिभिस्तत्क्षणहीयमान
रथ्याभुजायावलयैरिवास्याः ।
प्रायेण निष्क्रामति चक्रपाणौ
नेष्टं पुरो द्वारवतीत्वमासीत् ॥ ६९ ॥

पाठे तमसः आखिवर्गोपमानत्वे तस्माल्लघसाकल्यात्स एव बाधीयो नित्यालङ्कारिकाणां पन्थाः ॥ ६७ ॥

शनैरिति। रयात्पतन्तोधावन्तोरथाः सयत्नैः सूतैः सारथिभिः। सूतः क्षत्ता च सारथिरित्यमरः । आयताआकृष्टाये रश्मयः प्रग्रहाः । किरणप्रग्रहौ रश्मी इत्यमरः । तैर्भुग्नेषु प्रक्रेषु ग्रीवाणा मग्रेषु संसक्ताः युगाः युग्याः स्कन्धवाह्याः दारुविशेषाः येषां तैरत एवाखेदैरश्रमैः तुरङ्गैः हस्तिनखात् हस्तिनखः पूर्द्वारि मृत्कूटः। कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्नित्यमरः । तस्माच्छनैः क्षिति मनीयन्त नीता इति स्वभावोक्तिः यथावद्वस्तुवर्णनात् ॥ ६८ ॥

बलोर्मिभिरिति । बलान्यूर्मयइव तैर्बलोर्मिभिः वलयैः कङ्कणैरिव तत्क्षणे हरिनिष्क्रमणक्षणएव हीयमाना अपरिच्छ माना रथ्या भुजेव यस्याः अतएवास्याः पुरोद्वारावत्याश्चक्र पाणौ कृष्णे निष्क्रामति निर्गच्छति सति प्रायेण भूम्ना द्वारवतीत्वं

पारेजलं नीरनिधेरपश्य
न्मुरारिरानीलपलाशराशीः ।
वनावलीरुत्कलिकासहस्र
प्रतिक्षणोत्कूलितशैवलाभाः ॥ ७० ॥

द्वारकायां स्वस्वरूपमिति यावत् दृष्टं नासीत् हरिविरहे तद्वैफल्या दिति भावः । द्वारवतीशब्दस्य संज्ञात्वात् त्वतलोर्गुणवचनस्येति न पुंवद्भावः । अन्यच्च द्वारवतीत्वं द्वारवत्त्वं नेष्टं तस्य हरि निष्क्रमणहेतुत्वादित्युभयथाप्युपमितभुजवलयगलनहेतुत्वादुपमा सङ्कीर्णेयमनिष्टत्वोत्प्रेक्षा प्रायेणेत्यनेन व्यज्यते ॥ ६९ ॥

अथासर्गसमाप्तेः समुद्रं वर्णयति । पारइति । मुरारिर्नीरनिधेः समुद्रस्य जलानां पारे परतीरे पारेजलं । पारावारे परार्वाची तीरइत्यमरः । पारे मध्ये षष्ठ्या वेत्यव्ययीभावः । तत्संयोगादे कारान्तत्वं च पारेशब्दस्य । आसमन्तान्नीलाः पलाशानां पत्राणां राशयोयासान्ताः हरितपर्णपूर्णाइत्यर्थः । पत्रं पलाशं छदनमित्य मरः । अतएवोत्कलिकाऊर्म्मयः । ऊर्म्मिरुत्कलिकोल्लोलकल्लोल लहरिस्त्वथेति हलायुधः । तासां सहस्रैः प्रतिक्षणमुत्कूलिताः कूलमुद्गताः कूलं प्रापिताइत्यर्थः । उत्कूलशब्दात्तत्करोतीति ण्यन्तात्कर्म्मणि क्तः । तेषां शैवलानां आभेवाभा यासान्ताः तत्सदृशीरित्यर्थः वनावलीरपश्यत् । अत्रोत्कूलितशैवलस्य स्वतः सिद्धसन्देहादुपमोत्प्रेक्षयोः सन्देहसङ्करः ॥ ७० ॥

लक्ष्मीभृतइति । असौ हरिर्लक्ष्मीं शोभां श्रीदेवीं च बिभ्र तीति लक्ष्मीभृतस्तान् अम्भोधितटे अधिवासोयेषां तान् नीरदव

लक्ष्मीभृतोऽम्भोधितटाधिवासान्
द्रुमानसौ नीरदनीलभासः ।
लतावधूसम्प्रयुजोऽधिवेलं
बहुत्वतान् स्वानिव पश्यति स्म ॥ ७१ ॥

आश्लिष्टभूमिं रसितारमुच्चै-
र्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगाना-
मसावपस्मारिणमाशशङ्के ॥ ७२ ॥

नीलभासः नीलवर्णान् लतावध्व इवेत्युपमितसमासः अन्यत्र लता इव वध्व इति शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । ताभिः सम्प्रयुज्यन्त इति सम्प्रयुजः सङ्गतान् । क्विप् । अधिवेलं वेलायां । विभक्त्यर्थेऽव्ययीभावः । द्रुमान् बहुत्वताननेकीकृतान् स्वान् स्वकीय विग्रहानिवेत्यर्थः । एवञ्च पुंलिङ्गतानिर्वाहः । आत्मपरत्वे नपुंसकत्वापातः । स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धनइत्यमरः । पश्यति स्म श्लेषसङ्कीर्णेयमुत्प्रेक्षा ॥ ७१ ॥

आश्लिष्टेति । आश्लिष्टभूमिमालिङ्गितभूतलं उच्चैस्तारं रसितारं क्रन्दितारं लोलतां चञ्चलतामितस्ततः पततां भुजानां आकारइव आकारो येषां ते बृहत्तरङ्गा यस्य तन्तथोक्तं फेनायमानं फेनमुद्वमन्तं । फेनाच्चेति वक्तव्यमिति क्यङ् । अपां समूह आपं । तस्य समूह इत्यण् । तेन गच्छन्तीत्यापगाः तासां पतिं समुद्रं असौ हरिरपस्मारिणमपस्माररोगिण

पीत्वा जलानां निधिनातिगार्द्ध्या
द्वृद्धिङ्गतेऽप्यात्मनि नैव मान्तीः।
क्षिप्ताः इवेन्दोः स रुचोऽधिवेलं
मुक्तावलीराकलयाञ्चकार ॥ ७३ ॥

माशङ्के। तत्कर्म्मयोगात्तथा उत्प्रेक्षते इत्यर्थः। यथाहु
र्नैदानिकाः। क्रुद्धैर्धातुभिरावृतेऽथ मनसि प्राणी मनः सन्दिश
न्दन्तान् खादति फेनमुद्गिरति दोःपादौ क्षिपन्मूढधीः। पश्यन्
रूपमसत्स्थितौ निपतति व्यर्थाङ्करोति क्रियां विभ्यत्स स्वयमेव
शाम्यति गते वेगे त्वपस्माररुक् ॥ ७२ ॥

पीत्वेति। जलानां निधिना समुद्रेण गर्द्ध एव गार्द्ध्यं। औपम्या
दिवचातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्। तदतिशाय्यतिगार्द्ध्यं तस्मात्तृष्णा
भरादित्यर्थः। गृधेः पुनरोर्गुणः वान्तोयिप्रत्यये इति गार्द्ध्य
मिति स्यात्। पीत्वा क्षेपणक्रियापेक्षया पूर्व्वकालता अथ वृद्धिं गते
आत्मनि देहे। चन्द्रोदये समुद्रस्य वृद्धिरित्यागमः। नैव मान्ती
रमान्तीः अतिरिच्यमाना इत्यर्थः। मातेः शतरि ङीप्
आच्छीनद्योर्नुम्। क्षिप्ता उद्गीर्णा अतितृष्णयोत्कटं पीत्वा अन्त
रमानाद्बहिरुद्वान्ता इत्यर्थः। इन्दोस्तोमरीचीरिवेत्युत्प्रेक्षा स
द्विरधिवेलमधितीरं। वेला कूलविकारयोरिति विश्वः। मुक्ता
वलीराकलयाञ्चकार आकलयामास कलतिः कामधेनुः ॥ ७३ ॥

साटोपमिति। अमी मेघाः साटोपं ससम्भ्रमं। सम्भ्रमाटोप
संरम्भा इति यादवः। अनिशं नदन्तो गर्ज्जन्तो यैस्तोयैरम्भोभिरुर्वीं
समन्ततः सावयिष्यन्ति तान्यम्भांसि पयोधेरेकदेशादेककोणा

साटोपमुर्वीमनिशं नदन्तो
यैः प्लावयिष्यन्ति समन्ततोऽमी ।
तान्येकदेशान्निभृतं पयोधेः
सोऽम्भांसि मेघान् पिबतो ददर्श ॥ ७४ ॥

उद्धृत्य मेघैस्तत एव तोय-
मर्थं मुनीन्द्रैरिव संप्रणीताः ।
आलोकयामास हरिः पतन्ती-
र्नदीः स्मृतीर्वेदमिवाम्बुराशिम् ॥ ७५ ॥

निभृतं निश्चलं यथा तथा पिबतो मेघान् स हरिर्ददर्श । एतेन समुद्रस्यापरिच्छिन्नरूपत्वं व्यज्यते ॥ ७४ ॥

उद्धृत्येति । मुनीन्द्रैस्ततो वेदात् वेदार्थमिव मेघैस्ततोऽम्बुराशे रेव तोयमुद्धृत्य संप्रणीताः कृताः अम्बुराशिं पतन्तीः प्रविशन्ती र्नदीर्वेदं पतन्तीः स्मृतीर्मन्वादिसंहिता इव हरिरालोकयामास । श्रुतिमूलत्वेनैव प्रामाण्यात् स्मृतीनां तत्सम्वाद एव तत्वाश्रयः । अनेकैवेयमुपमा ॥ ७५ ॥

विक्रीयेति । दिक्षु भवानि दिश्यानि दिगन्तरानीतानीत्यर्थः । दिगादिभ्यो यत् । उरूणि महान्ति धनानि नानाद्रव्याणि विक्रीय मूल्येन दत्त्वा उत्तमलाभं द्वैगुण्यादिकं भजन्तीति तानुत्तमलाभ भाजः तत्रत्यं द्वैप्यमित्यर्थः । अव्ययात्यप् । अफल्गु सारवत् । फल्गु तुच्छमसारं चेति यादवः । भाण्डं मूलधनं पण्यद्रव्यमित्यर्थः । वणिङ्मूलधने पात्रे भाण्डं भूषाश्वभूषयोरिति वैजयन्ती । तरीषु नौषु । स्त्रियां नौस्तरणिस्तरिरित्यमरः । अविस्तरिः त्रिरित्यौ

विक्रीय दिश्यानि धनान्युरूणि
द्वैप्यानसावुत्तमलाभभाजः ।
तरीषु तत्रत्यमफल्गुभाण्डं
सांयात्रिकानावपतोऽभ्यनन्दत् ॥ ७६ ॥
उत्पित्सवोऽन्तर्नदभर्त्तुरुच्चै
र्गरीयसा निःश्वसितानिलेन ।
पयांसि भक्त्या गरुडध्वजस्य
ध्वजानिवोच्चिक्षिपिरे फणीन्द्राः ॥ ७७ ॥

ण्यादिकः इकारप्रत्ययः । आवपत आदधतः । वपतेः शतृप्रत्ययः । द्वैप्यान् समुद्रद्वीपवासिनः । द्वीपादनुसमुद्रं यञिति यञ्प्रत्ययः । संयात्रा सम्भूय यात्रा सा प्रयोजनमेषान्तान् सांयात्रिकान् पोतवणिजः । सांयात्रिकः पोतवणिगित्यमरः । प्रयोजनमिति ठक् । असौ हरिरभ्यनन्दत् ॥ ७६ ॥

उत्पित्सवइति । नदभर्त्तुः समुद्रस्यान्तरभ्यन्तरात् उत्पित्सवः उत्पतितुमिच्छवः । पततेः सन्नन्तादुप्रत्ययः सनि मीमेत्यादिना इसादेशः अत्र लोपोऽभ्यासस्येति अभ्यासलोपः । फणीन्द्राभक्त्या गरुडध्वजस्य हरेर्ध्वजानिव गरीयसातिमहता निःश्वसितानिलेन पयांस्युच्चैरुच्चिक्षिपिरे उत्क्षिप्तवन्तः । उत्प्रेक्षा । स्वरितत्वादात्मनेपदम् ॥ ७७ ॥

तमिति । अम्बुराशिः युगान्तबन्धुमापद्बन्धुमित्यर्थः उत्सङ्गएव शय्या तस्यां शेतइति तथोक्तं । अधिकरणे शेते इत्यच्प्रत्ययः । आगतमभ्यागतन्तं हरिं वीक्ष्य गुरुणा प्रमोदेन प्रसारिता

तमागतं वीक्ष्य युगान्तबन्धु-
मुत्सङ्गशय्याशयमम्बुराशिः ।
प्रत्युज्जगामेव गुरुप्रमोद-
प्रसारितोत्तुङ्गतरङ्गबाहुः ॥ ७८ ॥

उत्सङ्गिताम्भःकणको नभस्वा-
नुदन्वतः स्वेदलवान्ममार्ज ।
तस्यानुवेलं व्रजतोऽधिवेल-
मेलालतास्फालनलब्धगन्धः ॥ ७९ ॥

उत्तुङ्गास्तरङ्गा एव बाहवो यस्य सः सन् प्रत्युज्जगाम सम्मिलनार्थमागतवानिवेति क्रियास्वरूपोत्प्रेक्षा ॥ ७८ ॥

उत्सङ्गेति । उत्सङ्गिनः संसर्गिणः कृताः उत्सङ्गिताः । तत्करोतीति ण्यन्तात् कर्मणि क्तः । उत्सङ्गिताः अम्भःकणा येनेति शेषाद्विभाषेति कप् । एलालतानां आस्फालनेन सङ्घर्षणेन लब्धगन्धः एवं शिशिरसुरभिरुदन्वतो नभस्वान्समुद्रस्य वायुः अधिवेलं वेलायां । विभक्त्यर्थेऽव्ययीभावः । व्रजतस्तस्य हरेः स्वेदलवाननुवेलं प्रतिक्षणं । याथार्थ्येऽव्ययीभावः । ममार्ज जहार । वेला कूले च जलधेर्वेला तीरविकारयोरिति विश्वः । काव्यलिङ्गम् ॥ ७९ ॥

उत्तालेति । चमूषु चरन्तीति चमूचराः सैनिकाः । चरेष्ट इति टप्रत्ययः । तैरुत्तालेषून्नतेषु तालीवनेषु सम्प्रवृत्तेन समीरणेन मारुतेन सीमन्तिताः सीमन्तिन्यः कृताः । सीमन्तशब्दान्मत्वन्तात्तत्करोतीति ण्यन्तात्कर्मणि क्तः णाविष्टवद्भावे

उत्तालतालीवनसम्प्रवृत्त-
समीरसीमन्तितकेतकीकाः ।
आसेदिरे लावणसैन्धवीनां
चमूचरैः कच्छभुवां प्रदेशाः ॥ ८० ॥

लवङ्गमालाकलितावतंसा-
स्ते नारिकेलान्तरपः पिबन्तः ।
आस्वादितार्द्रक्रमुकाः समुद्रा-
दभ्यागतस्य प्रतिपत्तिमीयुः ॥ ८१ ॥

विकसितोर्लुक् । ताः केतक्यो येषु ते तथोक्ताः । नद्यृतश्चेति कप् । लवणसिन्धोरिमाः लावणसैन्धव्यः । तस्येदमित्यण् हृद्भगसिन्ध्वन्ते पूर्वपदस्येत्युभयपदवृद्धिः । तासां कच्छभुवामनूपभूमीनां । जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविध इत्यमरः । प्रदेशा देशा आसेदिरे प्राप्ताः । सीदतेः कर्म्मणि लिट् । अत्र स्वभावोक्तिरनुप्रासश्चालङ्कारौ । ओजःश्लेषसौशब्द्यसौकुमार्य्याद्यनेकगुणसम्पत्तिः स्पष्टा ॥ ८० ॥

लवङ्गेति । लवङ्गमालाभिः लवङ्गकुसुममाल्यैः कलितावतंसाः कृतभूषणाः । नारिकेलान्तरित्यव्ययं । नारिकेलाभ्यन्तर इत्यर्थः । अप इति पृथक्पदं । समासे ऋक्पूरित्यादिना समासान्तप्रसङ्गात् । पिबन्तः आस्वादिताः भक्षिताः आर्द्रक्रमुका आर्द्रपूगीफलानि यैस्ते । घोण्टा तु पूगः क्रमुक इत्यमरः । ते चमूचराः समुद्रादभ्यागतस्यातिथेः प्रतिपत्तिङ्गौरवं सत्कारमीयुः । प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि चेति विश्वः । अत्राभ्यागतप्रतिपत्ति

तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः
प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभृता ।
परिचलतो बलानुजबलस्य पुरः सततं धृतश्रिय
श्चिरविगतश्रियः सलिलनिधेस्तदाभवदन्तर
महत् ॥ ८२ ॥

प्राप्तेर्विशेषणगत्या अवतंसकलनादिपदार्थहेतुत्वात्काव्यलिङ्गमलङ्कारः । तेन समुद्रचमूचराणां गृहस्थाभ्यागतौपम्यप्रतीतेरलङ्कारेणालङ्कारध्वनिः ॥ ८१ ॥

तुरगेति । परितस्तुरगशतैराकुलस्य अपरिमिताश्वस्येत्यर्थः प्रतिपथं प्रतिमार्गं । यथार्थेऽव्ययीभावे समासान्तः । प्रमथिताः क्षुण्णाः भूभृतो राजानो गिरयश्च येन तस्य न तु स्वयं केनापि मथितस्येति भावः । सततं धृता श्रीः शोभा रमा च येन तस्य धृतश्रियः पुरोऽग्रे नगराद्वा परिचलतः परिगच्छतः बलो रामस्तदनुजस्य हरेर्बलस्य सैन्यस्य । बलं सैन्ये बलो रामइत्युभयत्रापि शाश्वतः । परं केवलमेकस्यैव तुरगस्य जन्म जन्ममात्रं यस्य तस्यैकतुरगजन्मनः एकोऽपि जातएव न लस्तीति भावः । महीभृता मन्दराद्रिणा राज्ञा च मथितस्य न तु स्वयं कस्यापि मन्थिता सततं विगतश्रियः उत्पत्त्यनन्तरमेवास्याः हरिस्वीकरणादिति भावः जलधेस्तु तदा प्रस्थानसमये महदन्तरं दूरगमनादि व्यवधानं उत्कर्षोत्या महत्तारतम्यं चाभवत् । अत्रोपमेयस्य हरिबलस्य उपमानाज्जलधेराधिक्यवर्णनात् व्यतिरेकालङ्कारः । पञ्चकावली वृत्तम् । नजभजजाजरौ नरपते कथिता भुवि पञ्चकावलीति लक्षणात् ॥ ८२ ॥

फ

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये पुरीप्रस्थानोनाम तृतीयः सर्गः ॥ ३ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्ये तृतीयः सर्गः ॥ ३ ॥

---

निश्वासधूमं सह रत्नभाभि
र्भित्त्वोत्थितं भूमिमिवोरगाणाम् ।
नीलोपलस्यूतविचित्रधातु
मसौ गिरिं रैवतकं ददर्श ॥ १ ॥
गुर्वीरजस्रं दृषदः समन्ता
दुपर्य्युपर्य्यम्बुमुचां वितानैः ।
विन्ध्यायमानं दिवसस्य भर्त्तु
र्मार्गं पुनारोद्धुमिवोन्नमद्भिः ॥ २ ॥

निःश्वासेति । नीलोपलैरिन्द्रनीलमणिभिः स्यूताः प्रोताः विचित्रा नानावर्णाः धातवो गैरिकादयो यस्य तं अतएव रत्नभाभि र्मणिप्रभाभिः सह भूमिम्भित्त्वा उत्थितं ऊर्द्धं निर्गतं उरगाणां निश्वासधूमं फूत्कारवाष्यमिव स्थितं रैवताख्यं गिरिमसौ हरि र्ददर्श स्यूतेति । सीव्यतेः कर्म्मणि क्तः च्छ्वोः शूडनुनासिके चेत्यूठा देशे यणादेशः । अत्र गिरेर्विशिष्टवर्णनीयत्वेन विशिष्टधूम त्वोत्प्रेक्षणाद्गुणनिमित्तजातिस्वरूपोत्प्रेक्षा । सर्गेऽस्मिन्नानावृत्तानि तत्रादावष्टादशोपजातयः तल्लक्षणं तूक्तं अतीतानन्तरसर्गादौ । अत्रासर्गसमाप्तेर्गिरिवर्णनमेव ॥ १ ॥

गिरिन्ददर्शेत्युक्तं कीदृगित्याकाङ्क्षायामेकान्वयेनाष्टाभिर्विशिनष्टि । गुर्व्वीरिति । गुर्व्वीर्महतीर्दृषदः शिलातटीरित्यर्थः । पाषाण प्रस्तरग्रावोपलाश्मानः शिला दृषदित्यमरः । उपर्य्युपरि दृषदां समीपउपरिप्रदेशइत्यर्थः । उपर्य्यध्यधसः सामीप्ये इतिद्विर्भावे

क्रान्तं रुचा काञ्चनवप्रभाजा
नवप्रभाजालभृतां मणीनाम्।
श्रितं शिलाश्यामलताभिरामं
लताभिरामन्त्रितषट्पदाभिः ॥३॥

तद्योगात् द्वितीयेति। यथाह वामनः उपर्य्यादिषु सामीप्ये द्विरुक्तेषु द्वितीयेति। समन्तादजस्रमुन्नमद्भिः देशकालाविच्छेदे नोत्पतद्भिरित्यर्थः अतएव तैरम्बुमुचां वितानैर्मेघवृन्दैर्निमित्तै दिवसस्य भर्त्तुः सूर्य्यस्य मार्गं पुनः रोद्धुं। संहितायां रोरीति रलोपः ढ्रलोपइति दीर्घः। विन्ध्यायमानमिव विन्ध्यवदाचरन्तं तद्वद्वर्द्धमानमिव स्थितमित्यर्थः। आचारे क्यङन्ताल्लटः शानजा देशः। अत्राविच्छिन्नमेघोन्नमनेन विन्ध्यायमानत्वोत्प्रेक्षणात् क्रिया निमित्तक्रियास्वरूपोत्प्रेक्षा ॥ २ ॥

क्रान्तमिति। पुनर्नवानि प्रभाजालानि बिभ्रतीति नवप्रभाजाल भृतः तेषां मणीनां सम्बन्धिन्य काञ्चनवप्रभाजा स्वर्णसानु प्रस्थतया रुचा दीप्त्या क्रान्तं व्याप्तं पुनः शिलानां मेचकोपलानां इन्द्रनीलानां वा श्यामलतया श्यामलिम्ना अभिरामन्तथा आमन्त्रितषट्पदाभिः मकरन्दपूरितत्वादाहूतभृङ्गाभिः लताभिः श्रितं व्याप्तं। इतः परं श्लोकान्तरमेकं यमकं वक्ष्यति। तत्र वदत्यलङ्कारः। अर्थालङ्कारस्त्वभ्युच्चेयइति यथासम्भवमूह्यम्। यमकलक्षणं त्वाचार्य्यदण्डिनोक्तम्। अव्यपेतव्यपेतात्मा या वृत्ति र्वर्णसंहतेः। यमकन्तच्च पादानामादिमध्यान्तगोचरं एक द्वित्रिचतुष्पादयमकानां प्रकल्पना। आदिमध्यान्तमध्यान्तमध्या

सहस्रसङ्ख्यैर्गगनं शिरोभिः
पदैर्भुवं व्याप्य वितिष्ठमानम् ।
विलोचनस्थानगतोष्णरश्मि
निशाकरं साधु हिरण्यगर्भम् ॥ ४ ॥

क्वचिज्जलापायविपाण्डुराणि
धौतोत्तरीयप्रतिमच्छवीनि ।
अभ्राणि बिभ्राणमुमाङ्गसङ्ग
विभक्तभस्मानमिव स्मरारिम् ॥ ५ ॥

ध्यास्चैव सर्व्वतः । अन्तन्तावद्ववत्तेषां भेदाः सम्भेदयोनयः सुकरादुष्करास्चैव दृश्यन्ते तत्र केचनेति ॥ ३ ॥

सहस्रेति । सहस्रमिति सङ्ख्या येषां तैः सहस्रसङ्ख्यैः शिरोभिः शिखरैः शीर्षैश्च गगनन्तथा तत्सङ्ख्यैः पादैः प्रत्यन्तपर्व्वतैश्चरणैश्च भुवञ्च व्याप्य वितिष्ठमानं अवतिष्ठमान । समवप्रविभ्यः स्थ इत्यात्मनेपदम् । विलोचनयोर्यत् स्थानं योग्यदेशः तद्गता वुष्णरश्मिनिशाकरौ यस्य तं अन्यत्र नेत्रीकृतार्केन्दुमित्यर्थः अतः साधु सत्यं हिरण्यगर्भम्ब्रह्माणमिवेत्युत्प्रेक्षा सहस्रशीर्षेत्यादिश्रुतेरिति भावः । हिरण्यगर्भो निधिगर्भश्च ॥ ४ ॥

क्वचिदिति । पुनः क्वचिदेकदेशे जलानामपायेनापगमेन विपाण्डुराणि शुभ्राणि अतएव धौतं क्षालितं यदुत्तरीयं तत्प्रतिमा तत्समा छविर्येषान्तानि अभ्राणि मेघान् बिभ्राणं दधानं । भृञः कर्त्तरि शानच् । अतएवेमायाः पार्व्वत्याः

छायां निजस्त्रीचटुलालसानां
मदेन किञ्चिच्चटुलालसानाम्।
कुर्व्वाणमुत्पिञ्जलजातपत्रै
र्विहङ्गमानां जलजातपत्रैः ॥ ६ ॥

स्कन्धाधिरूढोज्ज्वलनीलकण्ठा
नुर्वीरुहः श्लिष्टतनूनहीन्द्रैः।
प्रनर्त्तिनानेकलताभुजाग्रान्
रुद्राननेकानिव धारयन्तम् ॥ ७ ॥

अङ्गसङ्गेनार्द्धभागेन विभक्तं एकभागस्थापितं यस्य यस्य तं स्मरारिं हरमिव स्थितमित्युपमालङ्कारः ॥ ५ ॥

छायामिति। पुनः निजस्त्रीणां चाटुषु प्रियवचनेषु लालसाः लोलुपाः। लोलुपोलोलुभोलोलोलम्पटोलालसोऽपि चेति यादवः। तेषान्निजस्त्रीचटुलालसानाम्मदेन किञ्चिदीषच्चटुलास्च पलास्ते अलसास्च। विशेषणयोरपि मिथोविशेषणविशेष्यभाव विवक्षया विशेषणसमासः। तेषाञ्चटुलालसानां विहङ्गमानां हंसा दीनां उत्पिञ्जलानि जातानि उत्पिञ्जलजातानि। पूर्ववत्समासः। तानि पत्राणि येषान्तैरुत्पिञ्जलजातपत्रैरुत्पिञ्जरीभूतदलैरित्यर्थः। रलयोरभेदः। जलजातपत्रैः जलजैरेवातपत्रैः छायां कुर्व्वाणं। एतेन महती कमलाकरसम्टद्धिर्व्यज्यते। यमकरूपकयोः सङ्करः ॥ ६ ॥

स्कन्धेति। पुनः स्कन्धं प्रकाण्डमधिरूढाः उज्ज्वलानीलकण्ठा मयूरायेषान्तान् अन्यत्र स्कन्धाधिरूढाः असस्थिताः नीलाः

विलम्बिनीलोत्पलकर्णपूराः
कपोलभित्तीरिव लोध्रगौरीः ।
नवोलपालङ्कृतसैकताभाः
शुचीरपः शैवलिनीर्दधानम् ॥ ८ ॥
राजीवराजीवशलोलभृङ्ग
मुष्णन्तमुष्णन्ततिभिस्तरूणाम् ।
कान्तालकान्तालललनाः सुराणां
रक्षोभिरक्षोभितमुद्वहन्तम् ॥ ९ ॥

कण्ठायेषान्तान् । अंसप्रकाण्डयोः स्कन्धइति विश्वः । अहीन्द्रैः श्लिष्टतनून् व्याप्तदेहान् एकत्र तदावासत्वादन्यत्र तद्भूषणत्वाच्चेति भावः । प्रवर्त्तितानि अनेकलतानामेव भुजानां लतानामिव च भुजानां अग्राणि येषान्तानतएवानन्तानसङ्ख्यान् रुद्रानिव स्थितानित्युत्प्रेक्षा उर्वीरुहोवृक्षान्धारयन्तमुद्वहन्तम् ॥ ८ ॥

विलम्बीति । विलम्बिनोनीलोत्पलान्येव कर्णपूराः कर्णावतंसा यासान्ताः लोध्रेण लोध्ररजसा गौरीरवदाताः । षिद्गौरादिभ्यश्चेति ङीष् । कपोलभित्तीः स्त्रीणां गण्डस्थलीरिव स्थिताः । उपमान्तरमाह । नवाउलपावल्वजतृणानि । उलपाः वल्वजाः प्रोक्ताइति विश्वः । तैरलङ्कृतानां सैकतानामाभेवाभा यासान्ताः कुतः शुचीः शुद्धाः शैवलिनीः शैवलवतीः अपोदधानं । शुचित्व शैवलत्वाभ्यां विम्बप्रतिविम्बभावेनोपमाद्वयम् ॥ ८ ॥

राजीवेति । पुनः राजीवराजीनां पद्मपङ्क्तीनां वशाअधीनाः लोलाश्चलाभृङ्गायस्मिन् तं राजीवराजीवशलोलभृङ्गं तरूणां

मुदे मुरारेरमरैः सुमेरो-
रानीय यस्योपचितस्य शृङ्गैः ।
भवन्ति नोद्दामगिरां कवीना-
मुच्छ्रायसौन्दर्य्यगुणा मृषोद्याः ॥ १० ॥

ततिभिः सद्भिरुष्णमातपं मृष्णन्तं हरन्तं कान्तारस्याअलकान्ताश्चूर्ण कुन्तलान्निाय सान्ताः कान्तालकान्ताः। अलकाश्चूर्णकुन्तलाइत्यमरः। सुराणां ललनाः स्त्रियोऽप्सरसः रक्षोभीराक्षसैः अक्षोभितमनभिभूतं यथा तथा उदहन्नन् ॥ ९ ॥

नन्वल्पीयानयं कश्चिद्रैवतकोनाम शिलोच्चयः कथमियद्वर्ण्यत इति शङ्कां निरस्यति। मुदइति । मुरारेर्मुदे सन्तोषाय अमरैः कर्तृभिः सुमेरोः शृङ्गैः करणैरानीयोपचितस्य वर्द्धितस्य आनीतैः शृङ्गैरुपचितस्येत्यर्थः । उपचये करणानां शृङ्गाणामर्थादानयन कर्म्मत्वं । यस्य शैलस्य उच्छ्रायः औन्नत्यं सौन्दर्य्यञ्च तयोः गुणा उत्कर्षाउद्दामगिरां प्रगल्भवाचां कवीनां मृषा उद्यन्तइति मृषोद्याः मिथ्यावाच्यान भवन्ति मेरुशृङ्गेषु सर्व्वगुणसम्भवादिति भावः । राजसूयसूर्य्यमृषोद्येत्यादिना वदः क्यवन्तोनिपातः । उत्कृष्टः आयः उच्छ्रायइति घञन्तेनोपसर्गस्य समासः नतूपसृष्टात् घञ् प्रत्ययः । श्रीणीभुवोऽनुपसर्गइति नियमात् । मुदइत्यादि श्लोकसप्तके यच्छब्दस्य दृष्टोऽयं शैलः सइत्यनेनान्वयः । मेरुशृङ्गासम्बन्धेऽपि सम्बन्धवर्णनादतिशयोक्तिः ॥ १० ॥

यतइति । लोकः पराद्धानि श्रेष्ठानि अनूनैर्महद्भिः भूरिभिः प्रभूतैः। प्रभूतं प्राज्यं भूरीत्यमरः। प्रस्थैः सानभिर्मानविशेषैश्च ।

यतः परार्घ्यानि भृतान्यनूनैः
प्रस्थैर्मुहुर्भूरिभिरुच्छिखानि ।
आढ्यादिव प्रापणिकादजस्रं
जग्राह रत्नान्यमितानि लोकः ॥ ११ ॥

अखिद्यतासन्नमुदग्रतापं
रविन्दधानेऽप्यरविन्दधाने ।
भृङ्गावलिर्यस्य तटे निपीत
रसा नमत्तामरसा न मत्ता ॥ १२ ॥

प्रस्थोऽस्त्री सानुमानयोरित्यमरः । भृतानि सम्भृतानि मितानि च उच्छिखान्युन्नशीनि अमितानि अपरिमितानि रत्नानि यतः शैलादाढ्याद्धनिकात् । इभ्य आढ्यो धनीत्यमरः । प्रपणो व्यवहारः प्रयोजनमस्य प्रापणिको वणिक् । तदस्य प्रयोजनमिति ठक् । पण्याजीवाः प्रापणिका वैदेहा नैगमाश्च ते वणिज इति वैजयन्ती । तस्मादिवाजस्रं मुहुर्जग्राह । उपमालङ्कारः ॥ ११ ॥

अखिद्यतेति । आसन्नमौन्नत्यात्सन्निहितमत एवोदग्रतापन्दुःसहातपं रविं दधानेऽपि अरविन्दधान इति विरोधः । अरविन्दानां धाने निधाने इति परिहारः । धीयतेऽस्मिन्निति धानम् । अधिकरणे ल्युट् । शब्दश्लेषमूलो विरोधालङ्कारः । यस्य गिरेस्तटे निपीतरसा नितराम्पीतमकरन्दा नमन्ति तामरसानि पङ्केरुहाणि भारभृतया यया सा नमत्तामरसा । पङ्केरुहन्तामरसमित्यमरः । अतएव मत्ता भृङ्गावलिर्नाखिद्यत न खिन्ना । खिदेर्दैवादिकात्कर्त्तरि

यत्राधिरूढेन महीरुहोच्चै-
रुन्निद्रपुष्पाक्षिसहस्रभाजा।
सुराधिपाधिष्ठितहस्तिमल्ल-
लीलान्दधौ राजतगण्डशैलः ॥ १३ ॥

विभिन्नवर्णा गरुडाग्रजेन
सूर्य्यस्य रथ्याः परितः स्फुरन्त्या।
रत्नैः पुनर्यत्र रुचा रुचं स्वा-
मानिन्यिरे वंशकरीरनीलैः ॥ १४ ॥

लङ्। अत्यन्तसूर्य्यसन्निधानेऽप्यरविन्दाकरविहारान्मधुकरास्तापं नापुरित्यर्थः ॥ १२ ॥

यत्रेति। यत्र शैले रजतस्य विकारो राजतः। प्राणिरजतादिभ्योऽञित्यञ् प्रत्ययः। स असौ गण्डशैलश्च। गण्डशैलास्तु च्युताः स्थूलोपलागिरेरित्यमरः। उन्निद्राणि विकसितानि पुष्पाण्यक्षीणीवेत्युपमितसमासः। तेषां सहस्रं भजतीति तद्भाजा अधिरूढेनोच्चैर्महीरुहा वृक्षेण सुराधिपेन देवेन्द्रेण अधिष्ठितो यो हस्तीमल्ल इव तस्यैरावतस्य लीलां शोभान्दधौ ऐरावतस्य धावल्यादिति भावः। हस्तिमल्लोऽभ्रमातङ्गे हस्तिमल्लो विनायके इति विश्वः। अत्र लीलामिव लीलामिति सादृश्याक्षेपान्निदर्शनालङ्कारः ॥ १३ ॥

विभिन्नेति। गरुडाग्रजेनारुणेन विभिन्नवर्णा अन्यथाकृतवर्णा अरुणिमानमापादिता इत्यर्थः। सूर्य्यस्य सम्बन्धिनो रथं वहन्तीति

यत्रोज्झितामिर्मुहुरम्बुवाहैः
समुन्नमद्भिर्न समुन्नमद्भिः ।
वनं बबाधे विषपावकोत्था
विपन्नगानामविपन्नगानाम् ॥ १५ ॥

रथ्याः रथाश्वाः । तद्वहति रथयुगप्रासङ्गमिति यत्प्रत्ययः । यत्र शैले वंशकरीरनीलैः वंशाङ्कुरश्यामैः रत्नैर्मरकतैरित्यर्थः । वंशाङ्कुरे करीरोऽस्त्रीत्यमरः । वंशशब्दस्याम्लानताहेतोरलूनतायाः प्रतिपत्त्यर्थत्वादपौनरुक्त्यम् । अतएवैकार्थपदमप्रयोज्यमित्युक्त्वा करिकलभकर्णावतंसादिषु प्रतिपत्तिविशेषकरेषु न दोषइत्याह वामनः। न विशेषश्चेदिति । परितः स्फुरन्त्या रुचा स्वप्रभया करणेन पुनः स्वां रुचं निजहरितवर्णमेव आनिन्यिरे आनीताः । नयतेर्द्विकर्मकात्प्रधाने कर्म्मणि लिट् । प्रधानकर्म्मण्याख्येये लादीनाहुर्द्विकर्म्मणामिति वचनात् । अत्र विभिन्नवर्णादित्येकस्तद्गुणः। रथ्यानां स्वगुणत्यागेन गरुडाग्रजगुणग्रहणात्पुनस्तत्त्यागेन मरकतगुणग्रहणादपरस्तद्गुणस्तदुपजीवीति सजातीययोः सङ्करः । तेन गिरेः सूर्य्यमण्डलपर्य्यन्तमौन्नत्यं वस्तु व्यज्यते । तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहः ॥ १४ ॥

यत्रेति । यत्र शैले समुन्नमद्भिः समुत्पतद्भिरम्बुवाहैरुज्झिताभिस्त्यक्ताभिरद्भिर्मुहुः समुन्नं सम्यक् उन्नं क्लिन्नं सिक्तमित्यर्थः। उन्दी क्लेदने इति धातोः कर्म्मणि क्तः नुदविदेत्यादिना निष्ठानत्वं । विपन्नगाविगतसर्प्पान भवन्तीत्यविपन्नगाः सपन्नगाइत्यर्थः । तेषामविपन्नगानामगानां वृक्षाणां वनं विषपावकोत्या विषाग्निसमत्या

फलद्भिरुष्णांशुकराभिमर्षात्
कार्शानवं धाम पतङ्गकान्तैः ।
शशंस यः पात्रगुणाद्गुणानां
सङ्क्रान्तिमाक्रान्तगुणातिरेकम् ॥ १६ ॥

विपदापत् न ववाधे नित्यं वर्षानुषङ्गाद्दिषाग्निक्षोभो वृक्षाणाम किञ्चित्करइति भावः॥ १५ ॥

फलद्भिरिति । यः शैलः उष्णांशुकराभिमर्षादर्ककरसम्पर्कात् कृशानोरिदं कार्शानवं आग्नेयं धाम तेजः फलद्भिरद्भिरद्भिः अग्नि करसामर्थ्याभिव्यञ्जकैरिति भावः । पतङ्गकान्तैः सूर्य्यकान्तैः दृष्टान्तभूतैरिति भावः । गुणानां सङ्क्रान्तिमन्यत्र सङ्क्रमणं संक्रान्त गुणानित्यर्थः । पात्रगुणादाधारगुणसहकारादाक्रान्तः प्राप्तो गुणातिरेकः कार्य्यविशेषाधानरूपो गुणोत्कर्षोयस्यास्तां शशंस प्रतिपादयामास अर्क्कत्विषां सर्व्वत्र सङ्क्रमणविशेषेऽपि सूर्य्यकान्ते ष्वेव ज्वलनजननदर्शनात् सर्व्वत्रापि सङ्क्रम्यकारिणां गुणानामाधार गुणसहकारात्कार्य्यविशेषाधायकत्वमिति निश्चयोऽत्रैव जायत इत्यर्थः । ततश्च सहकारशक्तिविरहिणी सहजशक्तिरनुपकारिणीति भावः । वृत्त्यनुप्रासोऽलङ्कारः॥ १६ ॥

दृष्टोपीति । मुहुर्दृष्टोऽपि स शैलोमुरारेरपूर्व्वेणादृष्टपूर्व्वेण तुल्यमपूर्व्ववत् । तेन तुल्यं क्रिया चेदिति वतिः । विस्मयमाततान अतिरमणीयत्वादिति भावः। तथाहि क्षणे क्षणे प्रतिक्षणम् । वीप्सायां द्विर्भावः । नवतामपूर्व्ववत्त्वं उपैतीति यत् । तन्नवत्वोपगमन मेव रमणीयतायाः रूपं स्वरूपं लक्षणमित्यर्थः । अत्र रमणीयत्व

दृष्टोऽपि शैलः स मुहुर्मुरारे
रपूर्ववद्विस्मयमाततान ।
क्षणे क्षणे यन्नवतामुपैति
तदेव रूपं रमणीयतायाः ॥ १७ ॥

उच्चारणज्ञोऽथ गिरान्दधान
मुच्चारणत्पक्षिगणास्तटीस्तम् ।
उत्कन्धरं द्रष्टुमवेक्ष्य शौरि
मुत्कन्धरं दारुक इत्युवाच ॥ १८ ॥

लक्षणस्य वाक्यार्थस्य विस्मये हेतुत्वसमर्थनाद्वाक्यार्थहेतुकं काव्य लिङ्गमलङ्कारः ॥ १७ ॥

उच्चारणज्ञ इति । अथ हरिविस्मयानन्तरङ्गिरां वाक्याना मुच्चारणं जानातीत्युच्चारणज्ञः उक्तिकुशलः । आतोनुपसर्गे क इति कप्रत्ययः नेगुपधेत्यादिना आकारादनुपपदात्कर्मोपपदो भवति विप्रतिषेधेनेति वचनात् । दारुकः कृष्णसारथिः उच्चाः उन्नताः रणन्तः पक्षिगणाः यासु ताः रणत्पक्षिगणास्तटीर्दधानं तं पूर्वोक्तं । धरतीति धरं पर्वतं । पचाद्यच् । अहार्य्यधरपर्वता इत्यमरः । द्रष्टुमुत्कं उत्सुकं । उत्क उन्मनाइति निपातः । उत्कन्धरमौत्सुक्यादुन्नमितकन्धरं शौरिमवेक्ष्य इति वक्ष्यमाण क्रमेण वाचमुवाच । नहीङ्गितज्ञोऽवसरेऽवसीदतीति भावः ॥ १८ ॥

इतः प्रभृति यमकानन्तरश्लोकेष वसन्ततिलकावृत्तं नियमे नाह आच्छादितेति । आच्छादितान्यावृतानि आयतानि

आच्छादितायतदिगम्बरमुच्चकैर्गा
माक्रम्य संस्थितमुदग्रविशालशृङ्गम् ।
मूर्द्ध्नि स्खलत्तुहिनदीधितिकोटिमेन
मुद्वीक्ष्य को भुवि न विस्मयते नगेशम् ॥१९॥

दीर्घाणि दिशोऽम्बरं खञ्च दिगम्बराणि येन तं अन्यत्र आच्छादितं वसितमायतं दिगेवाम्बरं वासो येन तं तथोक्तं उच्चकैरुन्नतां गां भुवमाक्रम्य व्याप्य संस्थितं । तथा उदग्राणि उन्नतानि विशालानि च शृङ्गाणि शिखराणि यस्य तं अन्यत्र उदग्रे विशाले शृङ्गे विषाणे यस्य तं उच्चकैरुन्नतङ्गां वृषभमाक्रम्याधिष्ठाय संस्थितमित्यर्थः । शृङ्गं विषाणे शिखर इति । गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रमसि स्मृतः । अर्जुनीनेत्रदिग्बाणभूवाग्वारिषु गौर्मतेति च विश्वः । मूर्ध्नि शिखरे अन्यत्र शिरसि स्खलन्ती तुहिनदीधितेरिन्दोः कोटिः रश्मिः कला च यस्य तमेनं नगेशं नगश्रेष्ठं रैवतकं कैलासनायकमीश्वरञ्चोद्वीक्ष्य को न विस्मयते सर्व्वोऽपि विस्मयत इत्यर्थ. । नेयं तुल्ययोगिता प्रकृताप्रकृतविषये तदनुत्थानात् नापि समासोक्तिः तस्याविशेषणसाम्यजीवितात् । नापि श्लेषः उभयश्लेषे विशेष्यश्लेषयोगात् । तस्मात्प्राकरणिकार्थमात्रपर्य्यवसिताभिधाव्यापारेणापि शब्देनार्थान्तरधीकृद्ध्वनिरित्याहुः । तदुक्तं काव्यप्रकाशे । अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते । संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनमिति । वृत्तलक्षणन्तु उक्ता वसन्ततिलका तभजाजगौ ग इति ॥ १९ ॥

उदयति विततोर्द्ध्वरश्मिरज्जा-
वहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम् ॥ २० ॥

वहति यः परितः कनकस्थलीः
सहरितालसमाननवांशुकः ।
अचलएष भवानिव राजते
स हरितालसमाननवांशुकः ॥ २१ ॥

उदयतीति । वितताउर्द्धाग्र रश्मिरज्जवो रश्मयो रज्जव इव यस्य तस्मिन्विततोर्द्धरश्मिरज्जौ अहिमरुचौ सूर्य्ये उदयति उद्यमाने । अय गताविति स्वरितेतं केचिदिच्छन्ति ततः शतरि सप्तमी । तथा विततोर्द्धरश्मिरज्जौ हिमधाम्नि चन्द्रे चास्तं याति अस्तमयमाने । यातेः शतरि सप्तमी । अयं गिरिर्विलम्बिना विशेषंलम्बमानेन घण्टाद्वयेन परिवारितस्य वेष्टितस्य वारणेन्द्रस्य लीलां शोभां वहति । अत्र लीलामिव लीलामिति सादृश्याक्षेपान्निदर्शना । तथा सूर्य्याचन्द्रमसावस्य कुक्षिसमानकक्षौ बिभ्रतइति महदौन्नत्यं व्यज्यते पुष्पिताग्रा वृत्तम् । अयुजि नयुगरेफतोयकारोयुजि च नजौ जरगाश्च पुष्पिताग्रा ॥ २० ॥

वहतीति । लसमानादीप्यमानानवांशवोयस्य स लसमाननवांशुकः । शैषिकः कप्रत्ययः । योऽचलः सहरिताः सदूर्वाः । हरितेति च दूर्वायां हरिद्वर्णयुतेऽन्यवदिति विश्वः । कनकस्थ

पाश्चात्यभागमिह सानुषु सन्निषण्णाः
पश्यन्ति शान्तमलसान्द्रतरांशुजालम्।
सम्पूर्णलब्धललनालपनोपमान
मुत्सङ्गसङ्गिहरिणस्य मृगाङ्कमूर्त्तेः ॥२२॥

स्थलीः स्वर्णभूमीः। जानपदेत्यादिना अकृत्रिमार्थे ङीप्। परितोवहति स एषोऽचलः हरितालेन कर्च्चूरेण समानं नव मंशुकं वासोयस्य स हरितालसमाननवांशुकः पीताम्बरो भवानिव राजते। द्रुतविलम्बितं वृत्तम्। द्रुतविलम्बितमाह नभौ भराविति लक्षणात्॥ २१॥

पाश्चात्येति। इहाद्रौ सानुषु सन्निषण्णाः स्थिताः जनाः शान्त मलङ्कलङ्कस्य पुरोवर्त्तित्वान्निष्कलङ्कमतएव सान्द्रतरमंशुजालं यस्य तं सम्पूर्णं परिपूर्ण लब्धमाप्तं ललनालपनोपमानं स्त्रीमुख सादृश्यं येन तं। आननं लपनं मुखमित्यमरः। कुतः उत्सङ्ग सङ्गिहरिणस्य अङ्कस्थमृगस्य मृगाङ्का मृगचिन्हा मूर्त्तिर्यस्य तस्य मृगाङ्कमूर्त्तेश्चन्द्रस्य पश्चाद्भवः पाश्चात्य.। दक्षिणपश्चात्पुरसस्त्यक्। स चासौ भागश्च तं पाश्चात्यभागं पृष्ठभागं पश्यन्ति। पाश्चात्यभाग दर्शनातिशयोक्त्या तादृगौन्नत्यध्वनिः। वसन्ततिलका वृत्तं॥२२॥

कृत्वेति। अत्राद्रौ निर्झ्झरौघाः गिरिनदप्रवाहाः। प्रवाहो निर्झ्झरोझरइत्यमरः। चूतवृक्षइत्यादिवत्सामान्यविशेषभावाद पनरुक्तिः पुंवत्पुम्भिस्तुल्यं। तेन तुल्यं क्रिया चेदिति वतिः। उच्चै र्भृगुभ्यस्तटेभ्यः। प्रपातस्तटोभृगुरित्यमरः। ग्राव्णां शिलानां मद्भिपातं कृत्वा पतिता जर्ज्जराः शकलीभूताः द्यामाकाशम्प्रत्य

कृत्वा पुंवत्पातमुच्चैर्भृगुभ्यो
मूर्ध्नि ग्राव्णां जर्ज्जरा निर्झरौघाः ।
कुर्व्वन्ति द्यामुत्पतन्तः स्मरार्त्त
स्वर्लोकस्त्रीगात्रनिर्व्वाणमत्र ॥२३॥

स्थगयन्त्यमूः शमितचातकार्त्तस्वरा
जलदास्तडित्तुलितकान्तकार्त्तस्वराः ।
जगतीरिह स्फुरितचारुचामीकराः
सवितुः क्वचित् कपिशयन्ति चामी कराः ॥२४॥

त्पतन्तः स्मरार्त्तानां स्वर्लोकस्त्रीणां खेचरीणामप्सरसाङ्गात्र निर्व्वाणमङ्गनिर्वृतिं कुर्व्वन्ति । अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्य्यतः । भृग्वग्निजलसम्पातैर्मरणं प्रविधीयतइति विहितभृगुपातिनां पुंसां स्वर्लोकगामिनामिहोपमानता । शालिनी वृत्तम् शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैरिति ॥ २३ ॥

स्थगयन्तीति । इहाद्रौ क्वचिदमूर्जगतीर्भूमीः । जगती भुवने भूमाविति विश्वः । शमितास्चातकानामार्त्तस्वरायैस्ते शमितचातकार्त्तस्वराः । सर्व्वसहापतितमम्बु न चातकानामिति भूमिगतस्य तेषां विषाभवादभौमाम्बुदानेनोज्जीवयन्तीत्यर्थः । किञ्च तडिद्भिस्तुलितानि उपमितानि कान्तानि कार्त्तस्वराणि सुवर्णानि यैस्ते तडित्तुलितकान्तकार्त्तस्वराः । तडित्स्फुरणे तेषामपि तद्वत् स्फुरणादिति भावः । ते जलदाः स्थगयन्ति आच्छादयन्ति । स्थग आच्छादने इति चौरादिकः । क्वचित्तु स्फुरितानि उल्लसितानि

उत्क्षिप्तमुच्छ्रितसितांशुकरावलम्बै
रुत्तम्भितोडुभिरतीवतरां शिरोभिः ।
श्रद्धेयनिर्झरजलव्यपदेशमस्य
विष्वक् तटेषु पतति स्फुटमन्तरीक्षम् ॥२५॥

चारूणि चामीकराणि सुवर्णानि यैस्ते स्फुरितचारुचामीकराः अमी सवितुः कराः आतपाश्च कपिशयन्ति कपिशिताः कुर्वते क्वचिद्वृष्टिः क्वचिदातपश्चेति महदाश्चर्यमिति भावः । पथ्या वृत्तम् । सजसायलौच सह गेन पथ्या मता ॥ २४ ॥

उत्क्षिप्तमिति । उच्छ्रिताः उत्क्षिप्ताः सितांशोश्चन्द्रस्य कराः अंशवो हस्ताश्चावलम्बो येषान्तैः उत्तम्भितान्युडूनि यैस्तैः उडूनि चावष्टभ्येत्यर्थः । शिरोभिः शिखरैर्मस्तकैश्चातीवतरामभृशतरं । अतीवशब्दादव्ययादामुप्रत्ययः । उत्क्षिप्तमुद्यम्य धृतं अन्तरीक्षं श्रद्धेयः सादृश्याद्विश्वसनीयः निर्झरजलमिति व्यपदेशो व्यवहारो यस्य तत् दृढतरां निर्झरजलधियं कुर्वदित्यर्थः । अस्याद्रेः तटेषु विष्वक्समन्तात्पतति स्फुटं सत्यं इन्दुकरानुडूनि चावष्टभ्य शिरोभिर्ध्रियमाणमपि दुरुद्धरत्वाद्भ्रश्यदन्तरीक्षमेवेदं न तु जलं सादृश्यात्तु व्यपदेशो दुर्वार इति सर्वतः पातिता निर्झरजलं चोत्प्रेक्ष्यते तेनोत्प्रेक्षाविस्तारावस्य व्यज्येते ॥ २५ ॥

एकत्रेति । एकत्र एकस्मिन्भागे स्फटिकस्य यत्तटन्तस्यां अंशुभिर्विभिन्ननीराः मिश्रोदकाः शुभ्रजलादित्यर्थः । अपरत्रा परस्मिन् भागे नीलाश्मनामिन्द्रनीलानां द्युतिभिः भिदुराणि मिश्राण्यम्भांसि यासान्ताः नीलसलिलादित्यर्थः । इहाद्रौ सरितः

एकत्र स्फटिकतटांशुभिन्ननीरा
नीलाश्मद्युतिभिदुराम्भसोऽपरत्र।
कालिन्दीजलजनितश्रियः श्रयन्ते
वैदग्धीमिह सरितः सुरापगायाः॥२६॥
इतस्ततोऽस्मिन्विलसन्ति मेरोः
समानवप्रे मणिसानुरागाः।
स्त्रियश्च पत्यौ सुरसुन्दरीभिः
समानवप्रेमणि सानुरागाः॥ २७॥

कलिन्दस्याद्रेरपत्यं स्त्री कालिन्दी यमुना। कालिन्दी सूर्य्यतनया यमुना शमनस्वसेत्यमरः। तस्याजलैः जनिता श्रीः शोभा यस्यास्तस्याः तत्सङ्गतायाइत्यर्थः। सुरापगायागङ्गायाः वैदग्धीं शोभां श्रयन्ते भजन्ति विदग्धस्य भावः वैदग्धी। ब्राह्मणादित्वा द्गुणवचनेत्यादिना ष्यञ् प्रत्ययः षिद्गौरादिभ्यश्चेति ङीष् सोऽपीलस्य वाऽऽकुलकत्वादिह वैकल्पिकः अतएव ष्यञः षित्करणादौ कारोवकुलमिति वामनः। अत्र सितासितमणिगुणग्रहणात्सरितां यमुनासङ्गतगङ्गाशोभाशाहृश्याचेपात्तद्गुणोत्थापिता निदर्शना। प्रहर्षिणी वृत्तम् म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्॥ २६॥

इतइति। मेरोः समानवप्रे तुल्यप्रस्थे अतएवास्मिन्नद्राविति स्ततोमणिसानुरागारत्नतटकान्तयोविलसन्ति प्रसरन्ति किञ्च नवस्प्रेम यस्य तस्मिन्नवप्रेमणि पत्यौ अनुरागेण सह वर्त्तन्तइति सानुरागाः सुरसुन्दरीभिः समाः सरूपाः स्त्रियश्च इतस्ततो

उच्चैर्महारजतराजिविराजितासौ
दुर्वर्णभित्तिरिह सान्द्रसुधासवर्णा ।
अभ्येति भस्मपरिपाण्डुरितस्मरारे
रुद्वह्निलोचनललामललाटलीलाम् ॥२८॥
अयमतिजरठाः प्रकामगुर्वी
रलघुविलम्बिपयोधरोपरुद्धाः ।
सततमसुमतामगम्यरूपाः
परिणतदिक्करिकास्तटीर्बिभर्ति ॥ २९ ॥

विलसन्ति क्रीडन्ति अन्योन्यमनुरागिणोऽनुरूपाश्चेह विलासिन स्तदनुरूपाणि च विहारस्थलानि सन्तीति भावः ॥ २७ ॥

उच्चैरिति । इहाद्रौ सान्द्रया सुधया लेपविशेषेणामृतेन वा सवर्णा समानवर्णा । ज्योतिर्जनपदेत्यादिना समानस्य सादेशः । लेपभेदेऽमृते सुधेति वैजयन्ती । महारजतराजिविराजिताकाञ्चन रेखाशोभिता असौ पुरोवर्त्तिनी उच्चैरुन्नता दुर्वर्णभित्तिः रजत भित्तिः । महारजतकाञ्चने इति । दुर्वर्णं रजतं रूप्यमिति चामरः । भस्मना परिपाण्डुरितस्य स्मरारेरुद्वह्नि उद्गतार्चिर्लोचनमेव ललामम्भूषणं यस्य तस्य ललाटस्य लीलां शोभामभ्येति भजतीति निदर्शनालङ्कारः । ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुष्वित्य मरः ॥ २८ ॥

अयमिति । अयमद्रिरतिजरठाः अतिकठिनाः अतिजरतीश्च । जरठः कठिने जीर्णइति वैजयन्ती । प्रकामगुर्व्यः श्रेष्ठाः स्थौल्य

धूमाकारं दधति पुरः सौवर्णे
वर्णेनाग्नेः सदृशि तटे पश्यामी।
श्यामीभूताः कुसुमसमूहेऽलीनां
लीनामालीमिह तरवो बिभ्राणाः ॥ ३० ॥

दुर्भराश्च प्रकामगुर्व्यः। गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भर इति शब्दार्णवः। विस्पष्टपटुवत् मयूरव्यंसकादयश्चेति समासः अलघुभि र्विलम्बिभिर्लम्बमानैः पयोधरैर्मेघैः स्तनैश्च। स्त्रीस्तनाब्दौ पयोधराविल्यमरः। उपरुद्धाः आवृताः निबद्धाः सततं सर्व्वदा असुमता प्राणभृतामगम्यरूपाः अत्युन्नतत्वात् दुरारोहस्वरूपाः अन्यत्र वृद्धत्वाद्गमनानर्हविग्रहाः। त्यजेदन्यकुलोत्पन्नां वृद्धां स्त्रीं कन्यकान्तथेति गमननिषेधादिति भावः। परिणतास्तिर्य्यग्दन्त प्रहारिणो दिक्करिणो दिग्गजाः यासु ताः परिणतदिक्करिकाः। तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मतइति हलायुधः। इतः स्त्रियामिति समासान्तः कप्प्रत्ययः। अन्यत्र परिणताः किणीभूताः दिशोदन्तक्षतविशेषाः करिकानखव्रणाश्च यासान्ताः। दिग्दष्टे वर्त्तुलाकारे करिका नखरेखिकेति वैजयन्ती। तटीर्बिभर्त्ति। अत्र प्रकृततटीविशेषणमहिम्ना अप्रकृतवृद्धाङ्गनाप्रतीतेः समासोक्तिः। पुष्पिताग्रा वृत्तमुक्तम् ॥ २९ ॥

धूमेति। इहाद्रौ पुरोऽग्रे वर्णेनाग्नेः सदृशि समाने अग्निसमान वर्णे इत्यर्थः। सौवर्णे सुवर्णविकारे तटे कुसुमसमूहे लीनां स्थितां। ल्वादिभ्यश्चेति निष्ठानत्वं। अलीनां भृङ्गाणामालीमावली म्बिभ्राणाः अतएव श्यामीभूताः अमी तरवो धूमाकारन्धूमसाम्यं

उच्चैर्महारजतराजिविराजितासौ
दुर्वर्णभित्तिरिह सान्द्रसुधासवर्णा ।
अभ्येति भस्मपरिपाण्डुरितस्मरारे
रुद्वह्निलोचनललामललाटलीलाम् ॥२८॥

अयमतिजरठाः प्रकामगुर्वी
रलघुविलम्बिपयोधरोपरुद्धाः ।
सततमसुमतामगम्यरूपाः
परिणतदिक्करिकास्तटीर्बिभर्त्ति ॥ २९ ॥

विलसन्ति क्रीडन्ति अन्योन्यमनुरागिणोऽनुरूपाश्चेह विलासिन स्तदनुरूपाणि च विहारस्थलानि सन्तीति भावः ॥ २७ ॥

उच्चैरिति । इहाद्रौ सान्द्रया सुधया लेपविशेषेणामृतेन वा सवर्णा समानवर्णा । ज्योतिर्जनपदेत्यादिना समानस्य सादेशः । लेपभेदेऽमृते सुधेति वैजयन्ती । महारजतराजिविराजिताकाञ्चन रेखाशोभिता असौ पुरोवर्त्तिनी उच्चैरुन्नता दुर्वर्णभित्तिः रजत भित्तिः । महारजतकाञ्चने इति । दुर्वर्णं रजतं रूप्यमिति चामरः । भस्मना परिपाण्डुरितस्य स्मरारेरुद्वह्नि उद्गतार्चिर्लोचनमेव ललामम्भूषणं यस्य तस्य ललाटस्य लीलां शोभामभ्येति भजतीति निदर्शनालङ्कारः । ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुष्वित्य मरः ॥ २८ ॥

अयमिति । अयमद्रिरतिजरठाः अतिकठिनाः अतिजरतीश्च । जरठः कठिने जीर्णइति वैजयन्ती । प्रकामगुर्वीः श्रेष्ठाः स्थौल्य

धूमाकारं दधति पुरः सौवर्णे
वर्णेनाग्नेः सदृशि तटे पश्यामी ।
श्यामीभूताः कुसुमसमूहेऽलीनां
लीनामालीमिह तरवोबिभ्राणाः ॥ ३० ॥

दुर्भराश्च प्रकामगुर्व्वीः। गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरइति शब्दार्णवः। विस्रष्टचटुवत् मयूरव्यंसकादयश्चेति समासः अलघुभि र्विलम्बिभिर्लम्बमानैः पयोधरैर्मेघैः स्तनैश्च। स्त्रीस्तनाब्दौ पयोधराविव्यमरः। उपरुद्धाः आवृताः निबद्धाः सततं सर्व्वदा असुमताप्राणभृतामगम्यरूपाः अत्युन्नतत्वात् दुरारोहस्वरूपाः अन्यच्च वृद्धत्वाद्गमनानर्हविग्रहाः। त्यजेदन्यकुलोत्पन्नां वृद्धां स्त्रीं कन्यकान्तथेति गमननिषेधादिति भावः। परिणतास्तिर्य्यग्दन्त प्रहारिणोदिक्करिणोदिग्गजाः यासु ताः परिणतदिक्करिकाः। तिर्य्यग्दन्तप्रहारस्तु गजः परिणतोमतइति हलायुधः। इतः स्त्रियामिति समासान्तः कप्प्रत्ययः। अन्यच्च परिणताः किणीभूताः दिशोदन्तक्षतविशेषाः करिकानखव्रणाश्च यासान्ताः। दिग्दष्टे वर्त्तुलाकारे करिका नखरेखिकेति वैजयन्ती। तटीर्बिभर्त्ति। अत्र प्रकृततटीविशेषणमहिम्ना अप्रकृतवृद्धाङ्गनाप्रतीतेः समासोक्तिः। पुष्पिताग्रा वृत्तमुक्तम् ॥ २९ ॥

धूमेति। इहाद्रौ पुरोऽग्रे वर्णेनाग्नेः सदृशि समाने अग्निसमान वर्णे इत्यर्थः। सौवर्णे सुवर्णविकारे तटे कुसुमसमूहे लीनां स्थितां। ल्वादिभ्यश्चेति निष्ठानत्वं। अलीनां भृङ्गाणामालीमावली म्बिभ्राणाः अतएव श्यामीभूताः अमी तरवोधमाकारन्धूमसाम्यं

व्योमस्पृशः प्रथयता कलधौतभित्ती
रुन्निद्रपुष्पचणचम्पकपिङ्गभासः ।
सौमेरवीमधिगतेन नितम्बशोभा
मेतेन भारतमिलावृतवद्विभाति ॥ ३१ ॥

दधति त्वं पश्य । स्वर्णतटं अग्निवद्भाति श्यामास्तरवो धूमवद्भान्ती त्युपमा । जलधरमाला वृत्तम् । अब्ध्यङ्कैः स्याज्जलधरमाला म्भौ स्माविति लक्षणात् ॥ ३० ॥

व्योमेति । व्योमस्पृशोऽभ्रङ्कषाः उन्निद्रैर्विकसितैः पुष्पैर्वित्ता उन्निद्रपुष्पचणाः । तेन वित्तइति चणप्प्रत्ययः । ते च ते चम्पकाश्च तद्वत्पिङ्गभासः पिङ्गवर्णाः कलधौतभित्तीः कनकतटीः । कलधौतं रौप्यहेम्नोरिति विश्वः । प्रथयता प्रकटयता अतएव सौमेरवीं सुमेरुसम्बन्धिनीं नितम्बशोभां कटकलक्ष्मीं अधिगतेन प्राप्तवता । गत्यर्थाकर्मकेत्यादिना गमेः कर्त्तरि क्तः । एतेन रैवतकाद्रिणा भारतं भरतस्य राज्ञइदम्भारताख्यं वर्षं भूखण्डं । स्याद्दृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियामित्यमरः । इलावृतवदिलावृतवर्षमिव विभातीत्युपमा । नवखण्डस्य जम्बूद्वीपस्य हिमाद्रेर्दक्षिणभूखण्डं हैमवतापरनामकं भारतवर्षं सुमेरुयोगात्सौमेरवापराख्यं मध्यम खण्डमिलावृतवर्षं अतएव । नाम्नेदम्भारतं वर्षं हिमाद्रेस्तच्च दक्षिणे । तेन हैमवतं नाम परेष्वप्येवमुन्नयेत् । इलावृतं सौमेरवं सुमेरोः परितोऽस्ति तदिति वैजयन्ती ॥ ३१ ॥

रुचिरेति । असौ गिरिः रुचिरैः उज्ज्वलैः चित्रैर्नानावर्णै स्तनूरुहैः लोमभिः शालन्तइति तथोक्तैः परितः प्रचलितैः प्रसरद्भिः

रुचिरचित्रतनूरुहशालिभि
र्विचलितैः परितः प्रियकव्रजैः ।
विविधरत्नमयैरभिभात्यसा
ववयवैरिव जङ्गमतां गतैः ॥ ३२ ॥
कुशेशयैरत्र जलाशयोषिता
मुदा रमन्ते कलभा विकस्वरैः ।
प्रगीयते सिद्धगणैश्च योषिता
मुदारमन्ते कलभाविकस्वरैः ॥ ३३ ॥

प्रियकाः कम्बलप्रकृतयो मृगविशेषाः । प्रियको रोमभिर्युक्तो मृदू च्चमसृणैर्घनैरिति वैजयन्ती । तेषां व्रजैः समूहैः जङ्गमतां चरिष्णुताङ्गतैर्विविधरत्नमयैरवयवैः स्वाङ्गैरिव प्रतिभातीत्युत्प्रेक्षा । द्रुतविलम्बितं वृत्तम् ॥ ३२ ॥

कुशेशयैरिति । अत्राद्रौ जलाशयोषिताः जलाशयेषु ह्रदेषु उषिताः वसन्तः । गत्यर्थाकर्मकेत्यादिना वसतेः कर्त्तरि क्तः सम्प्रसारणं मतिबुद्धिपूजार्थेभ्यश्चेति चकाराद्वर्त्तमानार्थता । कलभास्त्रिंश द्वर्षकरिणः । त्रिंशद्वर्षस्तु कलभ इति वैजयन्ती । विकस्वरैर्विकसनशीलैः । स्थेशभासपिसकसोवरच् । कुशेशयैः शतपत्रैः मुदा प्रीत्या रमन्ते क्रीडन्ति करिविहाराणां कमलाकराणामयमाकर इति भावः । किञ्च कला अव्यक्तमधुराः विकारो मानसो भावः स प्रयोजनमेषां भाविका उद्दीपका इत्यर्थः कलाभाविकाश्च स्वराः षड्जादयो येषान्तैः कलभाविकस्वरैः सिद्धगणैः सुरसङ्घैः योषितां स्वस्त्रीणामन्ते समीपे उदारमुच्चैः प्रगीयते च भूस्वर्गोऽयमिति भावः ॥ ३३ ॥

आसादितस्य तमसा नियतेर्नियोगा
दाकाङ्क्षतः पुनरपक्रमणेन कालम् ।
पत्युस्त्विषामिह महौषधयः कलत्र
स्थानं परैरनभिभूतममूर्वहन्ति ॥ ३४ ॥

आसादितस्येति। इहाद्रौ अमूर्महौषधयः नियतेर्नियोगादस्मिन् काले इदं भावीति दैवशासनात् । तमसाऽन्धकारेण तत्प्रायेण व्यसनेन वा आसादितस्याक्रान्तस्य पुनरपक्रमणेन पुनरावृत्त्या कालं समागमकालमाकाङ्क्षतः पुनरागत्य सङ्गन्तुमिच्छतइत्यर्थः । त्विषां पत्युः सूर्य्यस्य सम्बन्धि परैस्तेजोऽन्तरैः पुरुषान्तरैश्चानभिभूत मतिरस्कृतमनुपहतञ्च कलत्रस्थानं कलत्रभूतानां त्विषां स्थानं स्थितिं वहन्ति निर्व्वहन्तीत्यर्थः । स्त्रीणां स्त्रीष्वेव रक्षणं कार्य्यमिति भावः । यथा केनचिदापदि न्यासीकृतानि कलत्राणि संरक्ष्य कालान्तरे माधवस्तस्मै प्रयच्छन्ति तद्दोषधयोऽपि त्विषः त्विषां पत्युरर्प्यन्तीत्यर्थः एतच्च तासां सूर्य्यास्तसमये प्रज्वलनादुदये विपर्य्ययाच्चोपचर्य्यते । अत्र विशेषणसाम्यादर्कादीनामापन्नादि साम्यप्रतीतेः समासोक्तिरलङ्कारः ॥ ३४ ॥

वनस्पतीति । अत्राद्रौ वनस्पतयोवृक्षाः । वनस्पतिर्वृक्षमात्रे विनापुष्पफलद्रुमइति विश्वः । तेषां स्कन्धेषु प्रकाण्डेषु अंसेषु च निषण्णाः सक्ताः बालप्रवालाबालपल्लवाहस्ताइव यासान्ता स्तथोक्ताः मधूनि व्रतयन्ति भुञ्जते इति मधुव्रतामधुपास्तेषां व्रातेन वृन्देन वृतैः छन्नैः अतएव लम्भिताः प्रापिताः लोचका स्तारकाणि कज्जलानि यैस्तैर्वातैरिव स्थितैरित्युत्प्रेक्षा । इवार्थे

वनस्पतिस्कन्धनिषण्णबाल
प्रवालहस्ताः प्रमदा इवात्र ।
पुष्पेक्षणैर्लम्भितलोचकैर्वा
मधुव्रतव्रातवृतैर्व्रतत्यः ॥ ३५ ॥

विहगाः कदम्बसुरभाविह गाः
कलयन्त्यनुक्षणमनेकलयम् ।
भ्रमयन्नुपैति मुहुरभ्रमयं
पवनश्च धूतनवनीपवनः ॥ ३६ ॥

वाशब्दः तद्वदुत्प्रेक्षायाञ्च उक्तः । लोचकोमांसपिण्डे स्यादक्षितारे च कज्जलइति विश्वः । पुष्पैरीक्षणैरिव पुष्पेक्षणैरुपलक्षिताः व्रतत्योलताः प्रमदाइव लक्ष्यन्तइति शेषः । न प्रसिद्धे क्रियाध्याहारदोषइत्याह वामनः । लिङ्गाध्याहारवदिति ॥ ३५ ॥

विहगाइति । कदम्बैः सुरभिः सुगन्धिस्तस्मिन् कदम्बसुरभाविहाद्रौ विहगाः पक्षिणः अनुक्षणं प्रतिक्षणं अनेके बहुविधा लया विच्छेदायस्मिन् कर्म्मणि तद्यथा तथा गाः वाचः शब्दानित्यर्थः। कलयन्ति । अर्ज्जुनीनेत्रदिग्बाणभूवाग्वारिषु गौर्मतेति विश्वः । किञ्च धूतानि कम्पितानि नवानि नीपवनानि कदम्बकाननानि येन स धूतनवनीपवनः । नीपप्रियकदम्बास्तु हलिप्रिय इत्यमरः । अयम्पवनः मुहुरभ्रमेघभ्रमयन्नुपैति । प्रमिताक्षरावृत्तम् । प्रमिताक्षरा सजससैरुदितेति लक्षणात् ॥ ३६ ॥

विद्भिरिति । एषोऽद्रिः श्रेयान् श्रेष्ठः द्विजातिर्ब्राह्मणइवागमोनिधिकल्पोमन्त्रशास्त्रञ्च सएव परमप्रधानं येषान्तैरागम

दन्तोज्ज्वलासु विमलोपलमेखलान्ताः
सद्रत्नचित्रकटकासु वृहन्नितम्बाः ।
अस्मिन् भजन्ति घनकोमलगण्डशैला
नार्योऽनुरूपमधिवासमधित्यकासु ॥ ४० ॥

अनतिचिरोज्झितस्य जलदेन चिर
स्थितबहुबुद्बुदस्य पयसोऽनुकृतिम् ।
विरलविकीर्णवज्रशकला सकला
मिह विदधाति धौतकलधौतमही ॥ ४१ ॥

अत्यय: । विमलोपला: उज्ज्वलशिला उज्ज्वलमणयो वा मेखला: काञ्च्यो नितम्बभूमयश्च । मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयो रिति विश्वः । ताभिरन्तारम्याः । मृतात्ववसिते रम्ये समाप्तावन्त इष्यतइति शब्दार्णवे । वृहन्तोनितम्बाः कटिपश्चाद्भागाः शिखराणि च यासान्ताः । नितम्बोरोधसि स्कन्धे शिखरेऽपि कटेरधइति विश्वः । घनाविपुलाः कोमलाः श्लक्ष्णाः गण्डशैलाः गण्डस्थलानि स्थूलोपलाश्च यासान्ताः नार्योऽनुरूपमिच्छासदृशं आत्मसदृशं वाधिवासम्भजन्ति । अत्र नारीणामधित्यकानाञ्च प्रकृतत्वात्केवल प्रकृतगोचरास्ते षोपस्थापिता तुल्ययोगिता । अतएवोभयविशे षणानि उभयत्र विभक्तिविपरिणामेन योज्यानि ॥ ४० ॥

अनतिचिरेति । इहाद्रौ विरलं यथा तथा विकीर्णा वज्रशकला यस्यां सा धौता शुभ्रा कलधौतमही रजतभूमिः जलदेनानति चिरोज्झितस्य तत्कालमुक्तस्य शुभ्रस्येति भावः । चिरस्थिता स्थिर

वर्ज्जयन्त्या जनैः सङ्गमे कान्तत
स्तर्कयन्त्या सुखं सङ्गमेकान्ततः ।
योषयैष स्मरासन्नतापाङ्गया
सेव्यतेऽनेकया सन्नतापाङ्गया ॥ ४२ ॥

स्थायिनोबहवस्य वुद्बुदाजलस्फोटायस्मिन् तस्य पयसोऽम्भसः सकलामनुकृतिं समग्रसादृश्यं विदधाति अत्र मेघोज्झितजलस्य स्थिरबुद्बुदासम्बन्धेऽपि सम्भावनया सम्बन्धोक्तेरतिशयोक्तिः । कुररीरुता वृत्तम् । कुररीरुता नजभजैर्लगयुगिति लक्षणात् ॥ ४१ ॥

वर्ज्जयन्त्येति । एकान्ततः एकान्ते रहसीत्यर्थः । कान्ततः कान्तेन प्रियेणेत्यर्थः । उभयत्रापि सार्व्वविभक्तिकस्तसिः । सङ्गमे सति सुखं तर्कयन्त्या उत्प्रेक्षमाणया विस्रब्धं विहारमाकाङ्क्षन्त्येत्यर्थः । अतएव जनैः सङ्गं वर्ज्जयन्त्या कुतः स्मरेणासन्नतापानि प्राप्तज्वराणि अङ्गानि यस्यास्तया स्मरासन्नतापाङ्गया । अङ्गगात्रकण्ठेभ्यश्चेति वक्तव्यमिति विकल्पादिह पक्षे टाप् । सन्नतावपाङ्गौ यस्यास्तया सन्नतापाङ्गया स्मरतापात् कूणितनेत्रया अनेकया योषया अनेकाभिर्योषाभिरित्यर्थः । जातावेकवचनं । स्त्री योषिदबला योषा नारी सीमन्तिनी वधूरित्यमरः । एषोऽद्रिः सेव्यते इच्छाविहारस्थानानि इह सन्तीति भावः । स्रग्विणी वृत्तम् । रैश्चतुर्भिर्युता स्रग्विणी सम्मतेति लक्षणात् ॥ ४२ ॥

सङ्कीर्णेति । अस्मिन्नद्रौ सङ्कीर्णाः मिथः रन्ध्रष्टाः कीचकाः वेणुविशेषाः । वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताइत्यमरः ।

सङ्कीर्णकीचकवनस्खलितैकबाल
विच्छेदकातरधियश्चलितुं चमर्य्यः।
अस्मिन् मृदुश्वसनगर्भतदीयरन्ध्र
निर्य्यत्स्वनश्रुतिसुखादिव नोत्सहन्ते ॥ ४३॥

मुक्तं मुक्तागौरमिह चीरमिवाभ्रै
र्वापीष्वन्तर्लीनमहानीलदलासु।
शस्त्रीश्यामैरंशुभिराशु द्रुतमम्भ
श्छायामच्छामृच्छति नीलीसलिलस्य ॥४४॥

तेषां वने स्खलितस्यैकबालस्यैकरोम्णो विच्छेदात् कातरा त्रस्ता धीर्यासान्ताश्चमर्य्यः मृदुश्वसनो मन्दमारुतो गर्भे येषान्तेभ्यस्तदीयरन्ध्रेभ्यः कीचकविवरेभ्यो निर्य्यतो निर्गच्छतः स्वनस्य श्रुत्या श्रवणेन यत् सुखं तस्मादिवेति हेतूत्प्रेचा। चलितुं नोत्सहन्ते वस्तुतस्तु बालप्रियत्वादिति भावः। शकधृषेत्यादिना तुमुन्प्रत्ययः॥ ४३ ॥

मुक्तमिति। इहाद्रावन्तर्लीनानि महानीलदलानि इन्द्रनीलविशेषखण्डानि यासु तासु। सिंहलस्याकरोद्भूता महानीलास्तु ते मता इति भगवानगस्त्यः। वापीषु दीर्घिकासु अभ्रैर्मेघैर्मुक्तं वृष्टं मुक्तागौरं मौक्तिकशुभ्रं अतएव चीरमिव स्थितं शस्त्री कुरिका। स्याच्छस्त्री वासिपुत्री च कुरिका वासिधेनुकेत्यमरः। बह्वादिभ्यश्चेति ङीप्। शस्त्रीवत् श्यामैरंशुभिरन्तर्गतेन्द्रनीलमरीचिभिः आशु तत्क्षणमेव द्रुतं लोलितं सत् कुरितमित्यर्थः नीलीसलिलस्य नीलाख्यौषधिपत्ररसस्य। नीली काला क्लीतकिकेत्य

या न ययौ प्रियमन्यवधूभ्यः
सारतरागमना यतमानम्।
तेन सहेह बिभर्त्ति रहः स्त्री
सा रतरागमनायतमानम्॥ ४५ ॥

अरः। अच्छां छायां कान्तिमृच्छति तत्सदृशीं छायां गच्छतीत्यर्थः। अतो निदर्शनालङ्कारः। स च मुक्तागौरं चीरमिव शस्त्रोम्यामैरिति चोपमानयेणान्तर्लीनमहानीलदलासु वापीष्विति पदार्थहेतुकं काव्यलिङ्गं तेनोत्थापितेनांशुभिर्दृतमिति तद्गुणोत्थापितद्त्यङ्गाङ्गिभावेन सङ्करः। चीरमिवेत्यनेनेन्द्रनीलानां सौक्ष्म्यं सूचितं। चीरमध्ये चिपेन्नीलं चीरश्चेन्नीलतां व्रजेत्। इन्द्रनीलमिति ख्यातं इति लक्षणसम्भवात्। तेनात्र नीलीरसोपमानेन तद्वर्णएवेति सूचितम्। नीलीरसनिभाः केचिच्छम्बुकण्ठनिभाः परइत्यादिना अगस्त्येन रत्नशास्त्रे एषामेकादशविधच्छायाभिधानादिति। मत्तमयूरं वृत्तम्। वेदैरन्ध्रैर्म्तौ यसगामत्तमयूरमिति लक्षणात्॥ ४४॥

या नेति। इहाद्रावन्यवधूभ्यः स्त्र्यन्तरेभ्यः। पञ्चमीविभक्तेरिति पञ्चमी। सारतरं श्रेष्ठमागमनं यस्याः सा सारतरागमना स्वाध्यसङ्गमेत्यर्थः। या स्त्री यतमानं स्वप्राप्त्यै प्रयतमानं प्रार्थयमानमित्यर्थः। यती प्रयत्ने शानच्। प्रियं न ययौ सा तथा प्रतिकूलापि स्त्री रहस्तेन प्रियेण सह अनायतमानमदीर्घरोषं यथा तथा रतरागं सुरताभिलाषं बिभर्त्ति अयमतिमानवतीरपि सद्यएवोद्दीपयतीति भावः। दोधकवृत्तम्। दोधकवृत्तमिदम्भभभागाविति लक्षणात्॥ ४५॥

सङ्कीर्णकीचकवनस्खलितैकबाल
विच्छेदकातरधियश्चलितुं चमर्य्यः ।
अस्मिन् मृदुश्वसनगर्भतदीयरन्ध्र
निर्य्यत्स्वनश्रुतिसुखादिव नोत्सहन्ते ॥ ४३॥

मुक्तं मुक्तागौरमिह चीरमिवाभ्रै
र्वापीष्वन्तर्लीनमहानीलदलासु ।
शस्त्रीश्यामैरंशुभिराशु द्रुतमम्भ
श्छायामच्छामृच्छति नीलीसलिलस्य ॥४४॥

तेषां वने स्खलितस्यैकबालस्यैकरोम्णो विच्छेदात् कातरा त्रस्ता धीर्यासान्तास्समर्य्यः मृदुश्वसनो मन्दमारुतो गर्भे येषान्तेभ्यस्तदीयरन्ध्रेभ्यः कीचकविवरेभ्यो निर्य्यतो निर्गच्छतः स्वनस्य श्रुत्या श्रवणेन यत् सुखं तस्मादिवेति हेतूत्प्रेक्षा। चलितुं नोत्सहन्ते वस्तुतस्तु बालप्रियत्वादिति भावः। शकधृषेत्यादिना तुमुन्प्रत्ययः ॥ ४३ ॥

मुक्तमिति। इहाद्रावन्तर्लीनानि महानीलदलानि इन्द्रनीलविशेषखण्डानि यासु तासु। सिंहलस्याकरोद्भूता महानीलास्तु ते मता इति भगवानगस्त्यः। वापीषु दीर्घिकासु अभ्रैर्मेघैर्मुक्तं वृष्टं मुक्तागौरं मौक्तिकशुभ्रं अतएव चीरमिव स्थितं शस्त्री छुरिका। स्याच्छस्त्री वासिपुत्री च छुरिका वासिधेनुकेत्यमरः। बह्वादिभ्यश्चेति ङीप्। शस्त्रीवत् श्यामैरंशुभिरन्तर्गतेन्द्रनीलमरीचिभिः आशु तत्क्षणमेव द्रुतं लोलितं सत् छुरितमित्यर्थः नीलीसलिलस्य नीलाख्यौषधिपत्ररसस्य। नीली काला क्लीतकिकेत्य

या न ययौ प्रियमन्यवधूभ्यः
सारतरागमना यतमानम्।
तेन सहेह बिभर्त्ति रहः स्त्री
सा रतरागमनायतमानम्॥ ४५ ॥

अरः। अच्छां छायां कान्तिमृच्छति तत्सदृशीं छायां गच्छतीत्यर्थः। अतो निदर्शनालङ्कारः। स च मुक्तागौरं क्षीरमिव शस्त्रोश्यामैरिति चोपमात्रयेणान्तर्लीनमहानीलदलासु वापीष्विति पदार्थहेतुकं काव्यलिङ्गं तेनोत्थापितेनांशुभिर्इतमिति तद्गुणोत्थापितइत्यङ्गाङ्गिभावेन सङ्करः। क्षीरमिवेत्यनेनेन्द्रनीलानां सौक्ष्यं सूचितं। क्षीरमध्ये क्षिपेन्नीलं क्षीरञ्चेन्नीलतां व्रजेत्। इन्द्रनीलमिति ख्यातं इति लक्षणसम्भवात्। तेनात्र नीलीरसोपमानेन तद्वर्णएवेति सूचितम्। नीलीरसनिभाः केचिच्छम्भुकण्ठनिभाः परइत्यादिना अगस्त्येन रत्नशास्त्रे एषामेकादशविधच्छायाभिधानादिति। मत्तमयूरं वृत्तम्। वेदैरन्ध्रैर्म्तौ यसगामत्तमयूरमिति लक्षणात्॥४४॥

या नेति। इहाद्रावन्यवधूभ्यः स्त्र्यन्तरेभ्यः। पञ्चमीविभक्तेरिति पञ्चमी। सारतरं श्रेष्ठमागमनं यस्याः सा सारतरागमना स्लाघ्यसङ्गमेत्यर्थः। या स्त्री यतमानं स्वप्राप्त्यै प्रयतमानं प्रार्थयमानमित्यर्थः। यती प्रयत्ने शानच्। प्रियं न ययौ सा तथा प्रतिकूलापि स्त्री रहस्तेन प्रियेण सह अनायतमानमदीर्घरोषं यथा तथा रतरागं सुरताभिलाषं बिभर्त्ति अयमतिमानवतीरपि सद्यएवोद्दीपयतीति भावः। दोधकवृत्तम्। दोधकवृत्तमिदम्भभभागाविति लक्षणात्॥ ४५ ॥

भिन्नेषु रत्नकिरणैः किरणेष्विहेन्दो
रुच्चावचैरुपगतेषु सहस्रसङ्ख्याम्।
दोषापि नूनमहिमांशुरसौ किलेति
व्याकोशकोकनदतां दधते नलिन्यः॥४६॥

भिन्नेष्विति । इहाद्राविन्दोः किरणेषु उदच्चश्चावाञ्चश्च तैरुच्चावचैरनेकविधैरित्यर्थः । उच्चावचं नैकभेदमित्यमरः । मयूरव्यंसकादिषूच्चावनीचाच् पराचोच्चावचकिञ्चनाकुतोभयानीति तत्पुरुषे निपातनात् साधुः । रत्नकिरणैर्भिन्नेषु मिश्रेषु अतएव सहस्रसङ्ख्यामुपगतेषु सत्सु नलिन्यः पद्मिन्यः । नलं पद्मे नलं तृणमिति शाश्वतः । असौ प्रकाशमानोऽहिमांशुः किलेति सहस्र किरणत्वात् सूर्य्यएवेति सम्भावनाबुद्ध्येत्यर्थः । वार्त्तासम्भाव्ययोः किलेत्यमरः । दोषापि रात्रावपि। सप्तम्यर्थेऽव्ययम् । दिवाह्नीत्यथ दोषा च नक्तञ्च रजनावित्यमरः । व्याकोशकोकनदतां विकच पद्मतां दधते नूनमित्युत्प्रेक्षायां । अथ रक्तसरोरुहम् । रक्तोत्पलं कोकनदमिति व्याकोशविकचस्फुटाइति चामरः । इह देवभूमिवा न्नित्यपद्मानलिन्यइति भावः । इह नलिनीनान्दोषातनविकासा सम्बन्धेऽपि तत्सम्बन्धरूपयातिशयोक्त्या तस्येन्दावर्कभ्रान्तिमदलङ्कारो व्यज्यते ॥ ४६ ॥

अपशङ्कमिति । अपशङ्कन्निःशङ्कमङ्गपरिवर्त्तनेषु उत्सङ्ग लुण्ठनेषूचिताः परिचिताःपतिम्भर्त्तारमुपैतुं पुरोऽग्रे चलिताः प्रयाताः आत्मजाः स्वसम्भवाद्दुहितृश्च निम्नगाः नदीः करुणेन दीनेन पत्त्रिणां पक्षिणां विरुतेन क्रोशनेन निमित्तेनैषोऽद्रिर्वत्सल

अपशङ्कमङ्कपरिवर्त्तनोचिता
श्चलिताः पुरः पतिमुपेतुमात्मजाः ।
अनुरोदितीव करुणेन पत्त्रिणां
विरुतेन वत्सलतयैष निम्नगाः ॥ ४७ ॥

मधुकरविटपानमिता
स्तरुपङ्क्तीर्बिभ्रतोऽस्य विटपानमिताः ।
परिपाकपिशङ्गलता
रजसा रोधश्चकास्ति कपिशङ्गलता ॥४८॥

तया वात्सल्येन स्नेहेनेत्यर्थः । स्नेहवान् स्निग्धस्तु वत्सलः इत्य मरः । वत्सांसाभ्यां कामबले इति वलच् प्रत्ययः । अनुरोदिती वानुक्रोशतीवेत्युत्प्रेक्षा । रुदश्च पञ्चभ्यइति गुणः रुदादिभ्यः सार्व्व धातुके इतीट् ॥ ४७ ॥

मधुकरेति । मधुकराएव विटास्तेषां पानस्थानमिताः प्राप्ताः । इणः कर्त्तरि क्तः । विटपैः शाखाविस्तारैरानमिताः विटपा नमिताः । विस्तारोविटपोऽस्त्रियामित्यमरः । तरुपङ्क्तीर्बिभ्रतो ऽस्याद्रेः रोधोनितम्बोगलता पतता परिपाकेण पिशङ्गीनां लतानां रजः पुष्परेणुः तेन परिपाकपिशङ्गलतारजसा कपिशं पिशङ्गं चकास्ति । मात्राद्वृत्तिश्चेयमार्य्यागीतिरष्टगणा । अर्द्धे वसुगणा आर्य्यागीतिरिति पिङ्गलनागः ॥ ४८ ॥

प्राग्भागतइति । इहाद्रौ प्राग्भागतः ऊर्द्धप्रदेशात् उपत्यकासु अधःप्रदेशेषु । उपत्यकाद्रेरासन्नेत्यमरः । उपाधिभ्यामित्यादिनोप शब्दात् त्यकन्प्रत्ययः । पतत् । शृङ्गारः सिन्दरादिमण्डनमस्य

य

प्राग्भागतः पतदिहेदमुपत्यकासु
शृङ्गारितायतमहेभकराभमम्भः ।
संलक्ष्यते विविधरत्नकरानुविद्ध
मूर्द्धप्रसारितसुराधिपचापचारु ॥ ४९ ॥
दधति च विकसद्विचित्रकल्प
द्रुमकुसुमैरभिगुम्फितानिवैताः ।
क्षणमलघुविलम्बिपिच्छदाम्नः
शिखरशिखाः शिखिशेखरानमुष्य ॥ ५० ॥

सञ्जातः शृङ्गारितः । शृङ्गारः सुरते नाट्ये रसे दिग्गजमण्डन इति विश्वः । आयतोदीर्घः तस्य महेभकरस्याभेवाभा यस्य तत् विविधरत्नानां करैरंशुभिरनुविद्धमनुरञ्जितमिदमम्भः ऊर्द्ध प्रसारितं यत् सुराधिपचापमिन्द्रधनुस्तद्वचारु संलक्ष्यते। अत्रेन्द्र चापस्योर्द्ध्वत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः । अभूतोपमेति मतान्तरम्। तिरोहितविवक्षायां तूपमानस्य प्रसिद्धत्वादुपमैवेयम् ॥ ४९ ॥

दधतीति । किञ्चेति चार्थः अमुष्याद्रेरेताः शिखराणि शृङ्गाण्येव शिखाः केशपाश्यः । शिखा चूडा केशपाशीत्यमरः। विकसद्भिर्विचित्रैः नानावर्णैः कल्पद्रुमकुसुमैरभिगुम्फितान् ग्रथिता निव स्थितानित्युत्प्रेक्षा । अलघूनि विलम्बीनि लम्बमानानि च पिच्छान्येव दामानि स्रजो येषु तान् शिखिनः केकिन एव शेखरान् आपीडान् क्षणं दधतीव। शिखावलः शिखी केकीति शिखास्वापीड शेखरावितिचामरः। अत्र कुसुमगुम्फेनोत्प्रेक्षालिङ्गेन पिच्छादीनां

सवधूकाः सुखिनोऽस्मि
न्नवरतममन्दरागतामरसदृशः ।
नासेवन्ते रसव
न्नवरतममन्दरागतामरसदृशः ॥ ५१ ॥
आच्छाद्य पुष्पपटमेष महान्तमन्त
रावर्त्तिभिर्गृहकपोतशिरोधराभैः ।
स्वाङ्गानि धूमरुचिमागुरवीं दधानै
र्धूपायतीव पटलैर्नवनीरदानाम् ॥५२॥

दामादिरूपकसिद्धिस्तदुत्थापिता चोत्प्रेक्षेति सङ्करः । पुष्पिताग्रा वृत्तमुक्तम् ॥५० ॥

सवधूका इति । अस्मिन्नद्रावत्वरे न भवन्तीत्यनवराः श्रेष्ठाः अनवरतमाः श्रेष्ठतमाश्च मन्दरागतैरमरैः सदृशः सरूपाश्च अनवरतममन्दरागतामरसदृशः अमन्दरागाण्यतिरक्तानि तामरसानि पङ्केरुहाणीव दृशो येषान्ते अमन्दरागतामरसदृशः रक्तनेत्राः । पङ्केरुहन्तामरसमित्यरः । सुखिनोभोगिनः सह वधूभिः सवधूकाः सन्तः । तेन सहेति तुल्ययोगे बहुव्रीहिः नद्यृतश्चेति कप् । रसवत्सानुरागं । गुणे रागे द्रवे रस इत्यमरः । नवरतं नूतनसुरतन्नासेवन्त इति न किन्त्वासेवन्त एवेत्यर्थः । सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधाविति वामनः विशिष्टसुरतानां सेवनस्य सामान्यतः प्रसक्तेः । उपमालङ्कारः । गतेयमार्य्यागीतिः ॥ ५१ ॥

आच्छाद्येति । एषोऽद्रिर्महान्तं पुष्पाण्येव पट इति रूपकन्तमाच्छाद्य अन्तः पटाभ्यन्तरे आवर्त्तिभिरभाचणं भ्रमद्भिः । बहुल

अन्योन्यव्यतिकरचारुभिर्विचित्रै
रत्रस्यन्नवमणिजन्मभिर्मयूखैः ।
विस्मेरान् गगनसदः करोत्यमुष्मि
न्नाकाशे रचितमभित्ति चित्रकर्म्म ॥ ५३ ॥

माभीच्ण्ये इति णिनिः। गृहकपोतशिरोधरायाः गृहपारावतकण्ठस्या भेवाभा येषान्तैरित्युपमा। पारावते कपोतः स्यादिति विश्वः। अगुरोः कालागुरोरिमामागुरवीं। कालागुर्वगरुः स्यादित्यमरः। धूमरुचिन्धूमकान्तिन्तस्सदृशीमित्यर्थः। अतएव निदर्शना। दधानैर्नवनीरदानां पटलैः स्वाङ्गानि धूपायतीव धूपैरिवा धिवासयतीवेत्युत्प्रेक्षा रूपकोपमानिदर्शनाभिरङ्गैः सङ्कीर्य्यते। धूप सन्तापेइति धातोः। गुपूधूपविच्छिपणिपनिभ्यआयइत्यायप्रत्ययः ॥ ५२ ॥

अन्योन्येति। अमुष्मिन्नद्रावन्योन्येषां व्यतिकरेण मिश्रणेन चारुभिः अतएव विचित्रैर्नानावर्णैरत्रस्यन्तः त्रासदोषेणादुष्यन्तः। त्रासोभीमणिदोषयोरिति विश्वः। वा भ्राशेत्यादिना वैकल्पिकः श्यन्प्रत्ययः। तेभ्योनवमणिभ्योजन्म येषान्तैर्मयूखैराकाशे रचित मभित्ति अकुड्यं अनाधारमित्यर्थः चित्रकर्म्म कर्त्तृ गगनसदः खेचरान् विस्मेरान् विस्मयशीलान् करोति। नमिकम्पीत्या दिना रप्रत्ययः। अत्र मणिमयूखेषु खे चित्रकर्म्मभ्रान्तिमता मेवाभित्तिचित्रकर्म्मेति अकारणकार्य्योत्पत्तिवर्णनात् भ्रान्तिमद लङ्कारोत्थापिता विभावनेति सङ्करः। कारणेन विना कार्य्यस्यो त्पत्तिः स्यादिभावनेति। प्रहर्षणी वृत्तम् ॥ ५३ ॥

समीरशिशिरः शिरःसु वसतां
सतां जवनिकानिकामसुखिनाम् ।
बिभर्त्ति जनयन्नयं मुदमपा
मपायधवलावलाहकततीः ॥ ५४ ॥

समीरेति। समीरेण मारुतेन शिशिरः शीतलः शिरःसु शिखरेषु वसतां निकामसुखिनां अत्यन्तसुखिनां सतां पुण्यवतां मुदञ्जनयन्नय मद्रिरपामम्भसामपायेनापगमेन धवलाबलाहकततीर्मेघपङ्क्तीरेव जवनिकास्तिरस्करिणीर्बिभर्त्ति। अनावृतेष्वपि शिखरेषु क्रीडने मेघैरेवावरणतां सम्पाद्य मुदञ्जनयतीत्यर्थः । अत्र वलाहकततिष्वारोप्यमाणानां जवनिकानां मुदञ्जनयन्निति प्रकृतोपयोगित्वर्णनात् परिणामालङ्कारः । आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति लक्षणात् । रूपके तूपरञ्जनमात्रमिति भेदः । जलोद्धतगतिर्वृत्तम् । रसैर्जसजसाजलोद्धतगतिरिति लक्षणात् ॥ ५४ ॥

मैत्रीति । इहाद्रौ समाधिं योगम्बिभ्रतीति समाधिभृतोयोगिनः । मैत्री करुणा मुदिता उपेक्षेति चतस्रश्चित्तवृत्तयः । तत्र पुण्यवत्सु मैत्री दुःखिषु करुणा सुखिषु मुदिता अनुमोदनं पापिषु उपेक्षा । मैत्री आदिर्येषान्तानि चित्तस्य परिकर्म्माणि प्रसाधकानि शोधकानीत्यर्थः तानि विन्दन्ति लभन्ते इति तद्विदः तद्भाजस्तैःक्षीणान्तःकरणमलादृत्यर्थः अतएव क्लेशप्रहाणं विधाय । अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः । तत्रानित्येषु नित्यत्वाभिमानः अनात्मनि च देहेन्द्रियादावात्मधीरित्यादिविभ्रमोऽविद्या । अस्मिता अहङ्कारः । रागोऽभिमतविषया

मैत्र्यादिचित्तपरिकर्म्मविदो विधाय
क्लेशप्रहाणमिह लब्धसबीजयोगाः ।
ख्यातिं च सत्त्वपुरुषान्यतयाधिगम्य
वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम् ॥५५॥

मरकतमयमेदिनीषु भानो
स्तरुविटपान्तरपातिनो मयूखाः ।
अवनतशितिकण्ठकण्ठलक्ष्मी
मिह दधति स्फुरिताणुरेणुजालाः ॥ ५६ ॥

भिलाषः । द्वेषोऽनभिमतेषु रोषः । अभिनिवेशः कार्य्याकार्य्ये ष्वाग्रहः । ते हि पुरुषं क्लिश्यन्तीति क्लेशाः क्लेशहेतवः । पचाद्यच् । तेषां प्रहाणं त्तयः। कृत्यचइति णत्वं । तद्विधाय क्लेशान् हित्वेत्यर्थः। अतो लब्धः सबीजः सावलम्बनो योगो यैस्ते लब्धसबीजयोगाः सन्तः आलम्बनमेव व्यनक्ति। सत्त्वेति। सत्त्वपुरुषयोः प्रकृतिपुरुषयोरन्यतया अन्यत्वेन मिथोभिन्नत्वेन ख्यातिं ज्ञानं चाधिगम्य प्रकृतिपुरुषौ भिन्नाविति ज्ञात्वेत्यर्थः । प्रकृतिपुरुषयोर्विवेकाग्रहणात्संसारः । विवेकग्रहणान्मुक्तिरिति साङ्ख्याः । अथ तां ख्यातिमपि निरोद्धुं निवर्त्तयितुं वाञ्छन्ति वृत्तिरूपान्तां निवर्त्य स्वयम्प्रकाशतयैव स्थातुमिच्छन्तीत्यर्थः । प्रकृतावुपरतायाम्पुरुषस्वरूपेणावस्थानं मुक्तिरिति साङ्ख्यसिद्धान्तः। न केवलम्भोगभूरियं किन्तु मोक्षचेत्र मपीति भावः ॥ ५५ ॥

मरकतेति । द्रवाद्भ्यो मरकतानां विकारामरकतमय्यस्तासु मेदिनीषु। स्त्रियः पुम्वदित्यादिना पुम्वद्भावः। तरूणां विटपाः

या बिभर्त्ति कलवल्लकीगुण
स्वानमानमतिकालिमालया ।
नात्र कान्तमुपगीतया तया
स्वानमा नमति कालिमालया ॥ ५७ ॥

पल्लवाः तेषामन्तरैरवकाशैः पतन्तीति तथोक्ताः । विटपः पल्लवे षिड्गे विस्तारे स्तम्बशाखयोरिति विश्वः । स्फुरितान्यणुरेणूनां सूक्ष्मरजसां जालानि येषु ते भानोर्मयूखाः अवनतस्य शितिकण्ठकण्ठस्य मयूरकन्धरायाः लक्ष्मीं दधतीति निदर्शनालङ्कारः । पुष्पिताग्रा वृत्तम् ॥ ५६ ॥

येति । अत्राङ्गावत्यत्यन्तः कालिमा कार्ष्ण्यं यस्याः सा अतिकालिमा अतिश्यामेत्यर्थः । न विद्यते लयोलयनं क्वचिदवस्थानं यस्याः सा अलया भ्रमन्तीत्यर्थः । अतएव सस्वनेति भावः । या अलिमाला कलोऽव्यक्तमधुरः वल्लकीगुणस्वानस्य वीणातन्त्रीशब्दस्य मानमुपमानं बिभर्त्ति तन्त्रीवद्ध्वनतीत्यर्थः । उपमालङ्कारः । उपगीतया समीपे गातुम्प्रवृत्तयैव न तु पूर्व्वङ्गायन्त्येवेति भावः । आदिकर्म्मणि क्तः कर्त्तरि चेति क्तः । तया अलिमालया भृङ्गावल्या स्वानमा सुखेनानमयितुमाक्रष्टुं शक्या । ईषद्दुरित्यादिना खल्प्रत्ययः । का वा स्त्री कान्तं प्रियं न नमति सर्वापि मानं विहाय कान्तं सद्यः प्रणमत्येव तथोद्दीपकत्वाद्गानस्येत्यर्थः । रथोद्धता वृत्तम् । रोनराविति रथोद्धता लगाविति लक्षणात् ॥ ५७ ॥

सायमिति । इहाद्रौ वप्राः सानवः । वप्रोऽस्त्री सानुसानयोरित्यमरः । सायं रात्रौ शशाङ्ककिरणैराहतेभ्यश्चन्द्रकान्तेभ्यो

सायं शशाङ्ककिरणाहतचन्द्रकान्त
निस्यन्दिनीरनिकरेण कृताभिषेकाः ।
अर्कोपलोल्लसितवह्निभिरह्नि तप्ता
स्तीव्रं महाव्रतमिवात्र चरन्ति वप्राः ॥ ५८ ॥

एतस्मिन्नधिकपयःश्रियं वहन्त्यः
संक्षोभं पवनभुवा जवेन नीताः ।
वाल्मीकेररहितरामलक्ष्मणानां
साधर्म्यं दधति गिरां महासरस्यः ॥ ५९ ॥

निस्यन्दिना प्रस्राविणा नीरनिकरेण जलपूरेण कृताभिषेकाः कृतस्नानाः अह्नि अर्कोपलेभ्यः सूर्यकान्तेभ्यः उल्लसितैरुत्थितै, र्वह्निभिस्तप्ताः सन्तः तीव्रं उग्रं दुश्चरं महाव्रतं महातपश्चरन्तीवेत्यु त्प्रेक्षा ॥ ५८ ॥

एतस्मिन्निति । एतस्मिन्नद्रावधिकपयःश्रियमधिकाञ्जल समृद्धिं वहन्त्यः अन्यत्र तु अधिकाः कपयः सुग्रीवादयो वर्ण्यत्वेन यासु ताः अधिकपयः श्रियं गुणालङ्कारादिशोभां वहन्त्यः पवना द्भवतीति पवनभूस्तेन पवनभुवा वायुजन्येन जवेन वेगेन संक्षोभ मुल्लनन्नीताः अन्यत्र तु जवेन जविना । जवोजविनि वेगे स्यादिति विश्वः । पवनभुवा हनुमता संक्षोभमौद्धत्यं नीता हनुमद्वेगवर्णनया प्रागल्भ्यं नीतादृत्यर्थः । वाक्यान्ते सर्वत्र षष्ठ्याविपरिणामः कार्यः । महासरस्योमहासरांसि अरहितावविर्जितौ रामलक्ष्मणौ याभिस्तासां अन्यत्र तु रामोरमणः अरहितरामा अवियुक्तरामाः

इह मुहुर्मुदितैः कलभैरवः
प्रतिदिशं क्रियते कलभैरवः ।
स्फुरति चानुवनं चमरीचयः
कनकरत्नभुवां च मरीचयः ॥ ६० ॥

लक्ष्मणाः सारसयोषितो यास्तु ताः केचित्स्वरहितरामाः अवियुक्त स्त्रीकाः लक्ष्मणाः सारसा इति पुंपक्षिपरत्वेन व्याचक्षते तेषां हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा लक्ष्मणौषधिसारस्योरित्याद्यमर विश्वप्रकाशादिवाक्यगतनियतस्त्र्यर्थताविरोधः । तासां वाल्मीकेर्गिरां साधर्म्यं सादृश्यं दधाति । अत्र पवनभुवा जवेनेत्यत्रैकवृन्तावलम्बिफलद्वयवदभङ्गैकपादगतत्वेनार्थद्वयप्रतीतेरर्थश्लेषः । अन्यत्र पदभङ्गेनार्थद्वयप्रतीतेर्जतुकाष्ठवच्छब्दयोरेव मिथः श्लिष्टत्वाच्छब्दश्लेषइत्युभयसाहित्यादुभयश्लेषोऽयं प्रकृताप्रकृतगोचरः उपमालङ्कमिति सङ्करः ॥ ५९ ॥

इहेति । इहाद्रौ मुदितैरिच्छाविहारसन्तुष्टैः कलभैः करिपोतैः। कलभः करिशावकइत्यमरः। दिशि दिशि प्रतिदिशं । याथार्थ्येऽव्ययीभावः अव्ययीभावे शरत्प्रभृतिभ्यइति समासान्तोऽच्प्रत्ययः । कलस्त्रासौ भैरवस्त्र कलभैरवोमधुरभीषणः । विशेषणयोरपि कुपाणिखञ्जवद्वैच्छिकोपसर्जनत्वविवक्षया विशेषणसमासः । रवो बृंहणध्वनिः मुहुः क्रियते अनुवनं वने वने चमरीचयः चमरी मृगसङ्घः स्फुरति । किञ्च कनकरत्नानां याभुवस्तासां मरीचयश्च स्फुरन्ति सम्बद्धिमद्वस्तुवर्णनादुदात्तालङ्कारे यमकस्याभ्युच्चयः ॥ ६० ॥

त्वक्साररन्ध्रपरिपूरणलब्धगीति
रस्मिन्नसौ मृदितपक्ष्मलरल्लकाङ्गः।
कस्तूरिकामृगविमर्द्दसुगन्धिरेति
रागीव सक्तिमधिकां विषयेषु वायुः ॥६१॥

प्रीत्यै यूनां व्यवहिततपनाः
प्रौढध्वान्तं दिनमिह जलदाः।
दोषामन्यं विदधति सुरत
क्रीडायासश्रमशमपटवः ॥ ६२ ॥

त्वगिति। अस्मिन्नद्रौ त्वचि सारो येषान्ते त्वक्सारा वंशाः। वंशे त्वक्सारकर्म्मारत्वचिसारतृणध्वजा इत्यमरः। तेषां रन्ध्राणि तेषां परिपूरणेन ध्मापनेन लब्धा गीतिर्गानसुखं येन सः मृदितानि सम्मृष्टानि पक्ष्मलानि लोमशानि रल्लकानां कम्बलमृगाणां कम्बलानां वाङ्गानि शरीराणि येन सः। रल्लकः कम्बलमृगे कम्बले परिकीर्त्तितइति वैजयन्ती। एतेन स्पर्शसुखमुक्तं कस्तूरिकामृगाणां विमर्द्देन संघर्षेण सुगन्धिः शोभनगन्धः यद्यपि। गन्धस्येत्वे तदेकान्त ग्रहणं कर्त्तव्यमित्युक्तं तथापि निरङ्कुशाः कवयइत्यपर्य्यनुयोगः। असावेवम्भूतोवायूरागीव कामीव विषयेषु प्रदेशेषु च। विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि चेति विश्वः। अधिकां सक्तिं व्यासक्तिमेति गच्छति ॥ ६१ ॥

प्रीत्यै इति। इहाद्रौ युवतयश्च युवानश्च तेषां यूनां। पुमान् स्त्रियेत्येकशेषः। प्रीत्यै व्यवहिततपनाः तिरोहितार्क्काः अतएव सुरतान्येव क्रीडास्ताभिर्यआयासोव्यायामस्तेन यः श्रमः खेदः। श्रमः

भग्नो निवासोऽयमिहास्य पुष्पैः
सदानतो येन विषाणिनागः ।
तीव्राणि तेनोज्झति कोपितोऽसौ
सदानतोयेन विषाणि नागः ॥ ६३ ॥

खेदोऽध्वरत्यादेरिति लक्षणात्। तस्य शमे वारणे पटवः समर्थाः जलदाः प्रौढध्वान्तं मेघावरणाद्गाढान्धकारं दिनं दिवसन्दोषा रात्रिमात्मानं मन्यतइति दोषामन्यं रात्रिमानिनं विदधति मेघावरणमहिम्ना दिवसः स्वयमप्यात्मानं रात्रिं मन्यते किमुतान्य इत्यर्थः । दोषेत्यव्ययन्तदुपपदान्मन्यतेर्धातोरात्ममाने खश् चेति खश् प्रत्ययः। इह यूनां दोषावद्दिवापि विस्रम्भं विहाराः सम्भव न्तीति भावः । भ्रमरविलसितं वृत्तम्। म्भौ न्लौ गः स्याद्भ्रमरवि लसितमिति लक्षणात् ॥ ६२ ॥

भग्नइति। इहाद्रावस्य नागस्य निवासः आश्रयः सदा पुष्पैरानतो नम्रोऽयं न गच्छतीत्यगोवृक्षः दानतोयैर्मदोदकैः सह वर्त्तते यस्तेन सदानतोयेन मत्तेनेत्यर्थः। येन विषाणिना दन्तिना भग्नस्तेन विषाणिना कोपितः कोपश्चापितः असौ नागः सर्पस्तीव्राणि विषाणि गरलान्युज्झति वमति परप्रतीकाराक्षमस्य क्रोधः स्वाश्रय मेव व्याहन्तीति भावः ॥ ६३ ॥

प्रालेयेति । ईश्वरः शिवोऽपि किमुतान्यइति भावः । सान्द्रं यदिभचर्म्म तदेव वसनं तदेवावरणं छादनं यस्य सः तथा सन्नलना वरणेनापि शिथिलावरणइति भावः । प्रलयादागतं प्रालेयं हिमं। ततआगतइत्यणि केकयमित्रयुप्रलयानां यादेरियइति यशब्दस्ये

प्रालेयशीतमचलेश्वरमीश्वरोऽपि
सान्द्रेभचर्म्मवसनावरणोऽधिशेते ।
सर्व्वर्त्तुनिर्वृतिकरे निवसन्नुपैति
न द्वन्द्वदुःखमिह किञ्चिदकिञ्चनोऽपि ॥६४॥

नवनगवनलेखाश्याममध्याभिराभिः
स्फटिककटकभूभिर्नाटयत्येष शैलः ।
अहिपरिकरभाजोभास्मनैरङ्गरागै
रधिगतधवलिम्नः शूलपाणेरभिख्याम् ॥६५॥

यादेशः । तेन शीतं शीतलमचलेश्वरं हिमवन्तमधिशेते तस्मिन् शेते इत्यर्थः । अधिशीङ्स्थासां कर्म्मेति कर्म्मत्वं । सर्व्वर्त्तुभिर्निर्वृति करे सदासुखकरे इहाद्रौ निवसन् पुनर्नास्ति किञ्चनास्येत्यकिञ्चनो निःस्वोऽपि । उच्चावचेत्यादिना मयूरव्यंसकादिषु निपातनात्तत्पुरुषः । किञ्चिदल्पमपि द्वन्द्वदुःखं शीतोष्णदुःखं नोपैति नित्यं सन्निहितानामृतूनामन्योन्यदोषनिवारकत्वादिति भावः । द्वन्द्वं युग्महिमोष्णादि मिथुनं कलहोरहइति वैजयन्ती । अत्रोपमानात् हिमाचलादुपमेयस्याधिक्यवर्णनाद्व्यतिरेकः ॥ ६४ ॥

नवेति । एष शैलोरैवतकोनवया नगवनलेखया तरुवनपङ्क्त्या श्यामोमध्योमध्यभागोयासान्ताभिराभिः स्फटिकानां कटकभूभिः तटप्रदेशैः करणैरहिरेव परिकरोगात्रिकाबन्धस्तं भजतीति तस्य अहिपरिकरभाजः । भवेत्परिकरोव्राते पर्य्यङ्कपरिवारयोः प्रगाढे गात्रिकाबन्धे विवेकारम्भयोरपीति विश्वः । भजोण्विः । भास्मनैः भस्ममयै । वैकारिकोण् प्रत्ययः अणिति प्रकृतिभावान्नस्तद्धितइति

दधद्भिरभितस्तटौ विकचवारिजाम्बू नदै-
र्विनोदितदिनक्लमाः कृतरुचश्च जाम्बूनदैः ।
निषेव्य मधु माधवाः सरसमत्र कादम्बरं
हरन्ति रतये रहः प्रियतमाङ्गकादम्बरम् ॥६६॥

टिलोपेन । अङ्गरागैरनुलेपनैरधिगतधवलिम्नः प्राप्तधावल्यस्य शूलं पाणौ यस्य तस्य शूलपाणेरीश्वरस्य । प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः । अभिख्यां शोभां । अभिख्या नामशोभयोरित्यमरः । आतश्चोपसर्गे इत्यण्प्रत्ययः । नाटयत्यनुकरोति निदर्शनालङ्कारः । मालिनी वृत्तमेतत् ॥ ६५ ॥

दधद्भिरिति । अत्राद्रौ माधवस्य इमे माधवाः यादवाः विकचानि वारिजानि येषु तान्यम्बूनि ययोस्तौ विकचवारिजाम्ब अभितउभयतस्तटौ दधद्भिः नदैः । अम्बुप्रवाहैः प्राक्स्रोतसोनद्यः प्रत्यक्स्रोतसोनदाः नर्म्मदां विनेत्याङः । विनोदितोदिनक्लमो येषान्ते विहारापनीताह्निकसन्तापाइत्यर्थः किञ्च जाम्बूनदस्य विकारैर्जाम्बूनदैः कनकभूषणैः कृतरुचोजनितशोभाः सन्तः रसवत् स्वादवत् । रसोगन्धे रसे स्वादइति विश्वः । कादम्बइचुः । कादम्बः कलहंसेक्षोरिति विश्वः । कादम्बं राति रलयोरभेदाल्लाति प्रकृतित्वेनादत्तइति कादम्बरमैक्षवं । पानसन्द्राचमाधूकं खार्ज्जुरन्तालमैक्षवमिति स्मरणात् । आतोऽनुपसर्गे कः । मधु मद्यं । एवञ्च मधुकादम्बरशब्दयोः सामान्यविशेषपरत्वादपौनरुक्त्यं । निषेव्य पीत्वा । क्षत्रियाणां पैष्ट्या एव निषेधादिति भावः । रतये सुरतार्थं रहः प्रियतमानां प्रेयसीनामङ्गादेवाङ्गकाद्गात्रात्कादम्बरं वस्त्रं हरन्ति

दर्प्पणनिर्म्मलासु पतिते घनतिमिरमुषि
ज्योतिषि रौप्यभित्तिषु पुरः प्रतिफलति मुहुः ।
व्रीडमसम्मुखोऽपि रमणैरपहृतवसनाः
काञ्चनकन्दरासु तरुणीरिह नयति रविः ॥६७॥

यादृतास्वेह मधुपानरतोत्सवैर्विस्रब्धं विहरन्तीति भावः । पृथ्वी वृत्तम् । जसौ जसयलावसुग्रहयतिश्च पृथ्वी गुरुरिति लक्षणात् ॥ ६६ ॥

दर्प्पणेति । इहाद्रौ रविर्दर्प्पणनिर्म्मलासु पुरः रौप्यभित्तिषु । काञ्चनकन्दराग्रवर्त्तिरजतसानुषु पतिते सङ्क्रान्ते घनं सान्द्रं यत्तिमिरन्तन्मुष्णाति हरतीति तन्मुट् । क्विप् । तस्मिन् ज्योतिषि स्वतेजसि काञ्चनकन्दरासु मुहुः प्रतिफलति सम्मूर्च्छति सति रमणै रपहृतवसनास्तरुणीरसंमुखोपि कन्दरानभिमुखोपि व्रीडं त्रपां । यद्यपि गुरोश्च हलइति स्त्रियामप्रत्ययः अतएव मन्दाक्षं ह्री स्त्रपा व्रीडेत्यमरः तथापि तत्र स्त्रीलात्रिवक्षायां बाहुलकत्वान्न पुं सकत्वं च । अतएवाविधौ गुरोः स्त्रियां बहुलविवक्षेति वामनः । नयति प्रापयति । नीवह्योर्हरतेश्चैवेति द्विकर्म्मकता । यस्मिन् सुवर्ण कन्दरासु क्रीडार्थं प्रविष्टाः स्त्रियोऽन्धकारइति कृत्वा पुरुषैरपहृतवस्त्राः सत्यः पुरःस्थितरौप्यभित्तितेजसामन्तःप्रति बिम्बतत्प्रकाशे सति सलज्जाइति भावः अत्र काञ्चनकन्दराणा मसम्मुखार्कज्योतिःप्रतिफलनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः । वंशपत्रपतितं वृत्तम् । दिङ्मुनि वंशपत्रपतितं भरनभनलगैरिति लक्षणात् ॥ ६७ ॥

अनुकृतशिखरौघश्रीभिरभ्यागतेऽसौ
त्वयि सरभसमभ्युत्तिष्ठतीवाद्रिरुच्चैः ।
द्रुतमरुदुपनुन्नैरुन्नमद्भिः सहेलं
हलधरपरिधानश्यामलैरम्बुवाहैः ॥ ६८ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
रैवतकवर्णनं नाम चतुर्थः सर्गः ॥ ४ ॥

अनुकृतेति । असावुच्चैरुन्नतोऽद्रिः रैवतकः त्वयि अभ्यागते सति अनुकृता शिखरौघाणां श्रीर्यैस्तैस्तथोक्तैः शिखरौघभ्रमकारिभिरिति भावः । अतएवाच श्रीरिव श्रीरिति निदर्शनया भ्रान्तिमदलङ्कारोव्यज्यते । द्रुतमरुता शीघ्रमारुतेनोपनुन्नैः प्रेरितैः अतएव सहेलं सलीलमुन्नमद्भिः उत्पतद्भिः धरतीति धरः । पचाद्यच् । हलस्य धरो हलधरो बलभद्रः तस्य परिधानानि अम्बराणि तद्वत् श्यामलैः श्यामैरम्बुवाहैः निमित्तेन सरभसमभ्युत्तिष्ठतीव प्रत्युत्थानं करोतीवेति क्रियानिमित्ता क्रियास्वरूपोत्प्रेक्षा विशिष्टमेघोन्नमनक्रियया प्रत्युत्थानक्रियोत्प्रेक्षणात् सा चोक्तनिदर्शनानुप्राणितेति सङ्करः शाब्दस्तु वृत्त्यनुप्रासः । मालिनी वृत्तम् ॥ ६८ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्ये चतुर्थः सर्गः ॥ ४ ॥

---

इत्थङ्गिरः प्रियतमाइव सोऽव्यलीकाः
शुश्राव सूततनयस्य तदा व्यलीकाः ।
रन्तुन्निरन्तरमियेष ततोऽवसाने
तासाङ्गिरौ च वनराजिपटं वसाने ॥१ ॥

तं स द्विपेन्द्रतुलितातुलतुङ्गशृङ्ग
मभ्युल्लसत्कदलिकावनराजिमुच्चैः ।
विस्ताररुद्धवसुधोऽन्वचलञ्चचाल
लक्ष्मीन्दधत्प्रतिगिरेरलघुर्बलौघः ॥ २ ॥

इत्यमिति । स हरिरित्थमनेन प्रकारेण । इदमस्थमुरिति थमुप्रत्ययः । अव्यलीकाः अप्रियरहिताः । व्यलीकन्त्वप्रियेऽन्टते इत्यमरः । प्रियतमाः प्रेयस्यइव स्थिताः कान्तासम्मिताइत्यर्थः व्यलीकाविगतान्टताः सत्याः सूततनयस्य सारथिकुमारस्य दारुकस्य गिरः तदा शुश्राव ततः श्रवणानन्तरं तासाङ्गिरामवसाने समाप्तौ निरन्तरं नीरन्ध्रवनराजिरेव पटस्तं वसाने आच्छादयति । वस आच्छादनइति धातोः कर्त्तरि लटः शानजादेशः । गिरौ रैवतकाद्रौ रन्तुं क्रीडितुमियेष तत्र वसतिं कर्त्तु मिच्छति स्मेत्यर्थः उपमायमकयोः संसृष्टिः । सर्गेऽस्मिन् वसन्त तिलका वृत्तम् । उक्ता वसन्ततिलका तभजाजगौ गइति ॥ १ ॥

तमिति । कदल्यएव कदलिकाः वैजयन्त्योरम्भातरवश्च । कदली वैजयन्त्यां च रम्भायां हरिणान्तरे इति विश्वः । अभ्यु ल्लसन्त्यः कदल्योवजयन्त्योवनराजयइव यस्य सः अन्यत्र रम्भावन

भास्वत्करव्यतिकरोल्लसिताम्बरान्ताः
सापत्रपा इव महाजनदर्शनेन ।
संविव्युरम्बरविकाशि चमूसमुत्थं
पृथ्वीरजः करभकण्ठकडारमाशाः ॥३॥

पङ्क्तयो यस्य तमिति योज्यम् । उच्चैरुन्नतः विस्तारेण रुद्धवसुधः व्याप्तभूमिः अतएव प्रतिगिरेर्लक्ष्मीन्दधत् स्वयमप्यन्यो गिरिरिव स्थितइत्यर्थः अलघुसंहान् स बलौघः सेनासङ्घः द्विपेन्द्रैस्तुलिता न्यतुलान्यप्रतिमानि द्विपेन्द्रव्यतिरिक्तप्रतिमारहितानि उत्तुङ्ग शृङ्गाणि यस्य तन्तथोक्तमन्वचलं रैवतकमनु चचाल तम्प्रति ययावित्यर्थः । अनुर्लक्षणइति कर्म्मप्रवचनीयत्वात्तद्योगे द्वितीया । अत्र प्रतिगिरेः कस्यचिदप्रसिद्धत्वात् गिरिधर्म्मयोगी बलौघः प्रतिगिरेर्लक्ष्मीमिव लक्ष्मीन्दधातीति निदर्शनामुखेन प्रतियोगित्वेनो त्प्रेक्ष्यते इत्युत्प्रेक्षैवेयं श्लेषानुप्राणितेति सङ्करः ॥ २ ॥

भास्वदिति। आशा दिशो भास्वत्करव्यतिकरेण सूर्य्यांशुव्याप्त्या उल्लसिताम्बरान्ताः प्रकाशिताकाशदेशाः अन्यत्र भास्वान् भासुरः अभिरूपः। भास्वान् भास्वरसूर्य्ययोरिति विश्वः । तस्य हस्तस्य स्पर्शनेन उल्लसिताम्बरान्ताः स्रस्तवस्त्राञ्चलाः अतएव महाजन दर्शनेन सापत्रपा इव । लज्जा सापत्रपान्यतइत्यमरः । अम्बर विकाशि व्योमव्यापि वासश्शोभि च । अम्बरं व्योमवाससोरिति विश्वः। चमषु समुत्थं करभउष्ट्रपोतः। उष्ट्रे क्रमेलकमयमहाङ्गाः करभः शिशुरित्यमरः । तस्य कण्ठइव कडारं कपिशं । कडारः कपिशः पिङ्गइत्यमरः। पृथ्वीरजः संविव्युः संवव्रुराच्छादयामासु

आवर्त्तिनः शुभफलप्रदशुक्तियुक्ताः
सम्पन्नदेवमणयोभृतरन्ध्रभागाः ।
अश्वाः पृथुर्वसुमतीमतिरोचमाना
स्तूर्ण पयोधयइवोर्म्मिभिरापतन्तः ॥ ४ ॥

रित्यर्थः । वेञः संवरणे लिट् कित्वात्सम्प्रसारणे द्विर्भावः एरनेकाच इति यणादेशः । स्त्रियोवस्त्रापहारे लज्जया यत्किञ्चिदाच्छा दयन्तीति भावः । अत्राचेतनास्वाशासु श्लिष्टविशेषणमहिम्ना स्त्री प्रतीतौ तदभेदाध्यवसायेन संव्यानव्यवहारसमारोपात् समासोक्तिः । सा च सापत्नपत्न्युत्प्रेक्षानुप्राणितेति सङ्करः ॥ ३ ॥

आवर्त्तिनइति । आवर्त्तिनः दशावर्त्तवन्तः।प्रशंसायामिति णिनिः। त च द्वावुरसौ शिरसौ द्वौ द्वौ द्वौ रन्ध्रोपरन्ध्रयोः । एकोभाले ह्यपाने च दशावर्त्ताध्रुवा स्मृता इत्युक्तादश ध्रुवाख्या विवक्षिताः । अन्येषामनन्तरमेव पृथगभिधानात्। अन्यत्र तु जलभ्रमवन्तः । स्या दावर्त्तोम्भसाभ्रमइत्यमरः । रोमसंस्थाने तु तत्साम्याद्व्यपदेशः तदुक्तम्। आवर्त्तसाम्यादावर्त्तोरोमसंस्थानमङ्गिनामिति । शुभ फलानि राज्यलाभादीनि प्रददतीति शुभफलप्रदाः। प्रे दाभिइति कः। ताभिः शुक्तिभिः संस्थानैरावर्त्तविशेषैर्युक्ताः। तदुक्तम्। वक्षःस्थाः शुक्तयस्तिस्रऊर्द्ध्वरोमाजयावहाइति । अन्यत्र शुभफलानि मुक्ता फलानि तत्प्रदाः शुक्तयोमुक्तास्फोटाः ताभिर्युक्ताः । मुक्तास्फोटे हयावर्त्ते शुक्तिः शङ्खकपालयोरिति यादवः । सम्पन्नाः समग्राः देवमणयोनिगालावर्त्ताः कौस्तुभादिदिव्यमणयश्च येषान्ते । आवर्त्तोरोमजोदेवमणिस्त्वेष निगालजः । निगालस्तु गलोद्देशे

आरटमग्रमवमत्य सृणिं शिताग्र
मेकः पलायत जवेन कृतार्त्तनादः ।
अन्यः पुनर्मुहुरुदप्लवतास्तभार
मन्योन्यतः पथि वताविभितामिभोष्ट्रौ ॥ ५ ॥

सक्कत् इति वैजयन्ती। प्रुताः पूर्वारम्भभागाः पार्श्वदेशा निम्नप्रदेशाश्च येषान्ते अतिशयिता रोचमानाः कण्ठावर्त्ता येषान्ते अतिरोचमानाः। कण्ठजो रोचमानश्च स्वामिसौभाग्यवर्द्धनइति वैजयन्ती। अन्यत्र तु अत्यन्तं दीप्यमानाइत्यर्थः ऊर्मिभिर्गतिविशेषैर्वीचिभिश्च पतन्तः आधावन्तः। पङ्क्तीकृतानामश्वानां नमनोन्नमनाकृतिः। अतिवेगसमायुक्ता गतिरूर्म्मिरुदाहृतेति वैजयन्ती। ईदृशोऽश्वाः पयोधयइव तूर्णं वसुमतीं पृथुः छादयन्ति स्म। अपिधानतिरोधान पिधानच्छदनानि चेत्यमरः। अपिपूर्व्वाद्दधातेर्ल्युट् वष्टि भागुरि रल्लोपमवाप्योरुपसर्गयोरित्यकारलोपः। एकनालावलम्बिफल द्वयवदेकशब्देनार्थद्वयप्रतीतेरर्थश्लेषोऽयं प्रकृताप्रकृतगोचरः उपमा लङ्कमिति सङ्करः॥ ४ ॥

आरटेति। पथि मार्गे इभोष्ट्रावन्योन्यतः अन्योन्यस्माद् विभितामभीतवन्तौ। ञिभी भये लङ् भियोऽन्यतरस्यामितीत्वं। वतेत्यनयोरपि भीतिरिति खेदेऽतिविस्मये वा। खेदानुकम्पासन्तोष विस्मयामन्त्रणे वतेत्यमरः। तत्र लिङ्गमाह। एकइभआरटः कुम्भयोरधस्तत्र मग्नमप्रविष्टं शिताग्रन्तीक्ष्णमुखं सृणिमङ्कुशं। अङ्कुशोऽस्त्री सृणिर्द्वयोरित्यमरः। अवमत्यावधूय कृतआर्त्तनादो येन सः अतिकरुणं क्रन्दन्नित्यर्थः जवेन पलायत पलायितवान्।

आयस्तमैचत जनश्चटुलाग्रपादं
गच्छन्तमुच्चलितचामरचारुमश्वं ।
नागं पुनर्मृदु सलीलनिमीलिताक्षं
सर्वः प्रियः खलु भवत्यनुरूपचेष्टः ॥ ६ ॥

परापूर्व्वाद्यतेर्लङ् उपसर्गस्यायताविति रेफस्य लत्वम् । अन्यः पुनरुष्ट्रस्तु अस्तभारनिरस्तभारं यथा तथा मुक्तरुद सवत उत्प्लवितवान् । प्लु गताविति लङ् । स्वभावोक्तिः ॥ ५ ॥

आयस्तमिति । जनश्चटुलाग्रपादं चञ्चलपूर्व्वचरणं यथा तथा गच्छन्तं शीघ्रं धावन्तमित्यर्थः उच्चलितैः उल्लसितैश्चामरैश्चारुमश्वमायस्तं सयत्नमादृतं यथा तथा । यसु प्रयत्ने कर्त्तरि क्तः क्लान्तं क्रियाविशेषणम् । ऐचत ईक्षितवान् । ईक्षतेर्लङ् आडजादीनामाटश्चेति वृद्धिः । नागं पुनर्गजन्तु सलीलं निमीलिते अक्षिणी यस्मिन् कर्म्मणि तत् । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् । मृदु मन्दङ्गच्छन्तमायस्तमैचत कथं शीघ्रमन्दयोस्तुल्यदृष्टिरतआह सर्व्वः प्राणी अनुरूपचेष्टः स्वजात्युचितव्यापारः सन् प्रीणातीति प्रियः प्रीतिकरोभवति खलु । इगुपधज्ञाप्रीतिकर्त्तरि कः । अर्थान्तरन्यासः ॥ ६ ॥

त्रस्तइति । करेणोरिभ्याः । करेणुरिभ्यां स्त्रीनेभेइत्यमरः । भीत्रार्थानां भयहेतुरित्यपादानत्वम् । त्रस्तोभीतः खरोगर्दभः समस्तजनस्य हासं करोतीति तत्करः सन् । कृञोहेत्वित्यादिना टप्रत्ययः । तावत्तदवधि प्रखरं भृशमुत्तलयाञ्चकार उत्पपात यावत् चलात् स्थानचलितादासनात् विलोलोऽपस्रुतस्तस्मान्नितम्ब

त्रस्तः समस्तजनहासकरः करेणो-
स्तावत्खरः प्रखरमुल्ललयाञ्चकार ।
यावच्चलासनविलोलनितम्बबिम्ब-
विस्रस्तवस्त्रमवरोधवधूः पपात ॥ ७ ॥
शैलोपशल्यनिपतद्रथनेमिधारा-
निष्पिष्टनिष्ठुरशिलातलचूर्णगर्भाः ।
भूरेणवो नभसि नद्धपयोदचक्रा-
श्चक्रीवदङ्गरुहधूम्ररुचो विसस्रुः ॥ ८ ॥

बिम्बाद्विस्रस्तं वस्त्रं यस्मिन् कर्मणि तद्यथा तथा अवरोधवधूः पपात । स्वभावोक्तिः ॥ ७ ॥

शैलेति । शैलस्य रैवतकाद्रेरुपशल्यं प्रान्तं । यद्यपि ग्रामान्त उपशल्यं स्यादित्यमरः तथापि उपचाराददोषः । तत्र निपततां धावतां रथानां नेमयश्चक्रान्ताः । चक्रं रथाङ्गन्तस्यान्तो नेमिः स्त्री स्यात्प्रधिः पुमानित्यमरः । तासान्धाराभिः निष्पिष्टानां चूर्णितानां निष्ठुरशिलातलानां चूर्णो गर्भे येषान्ते तथोक्ताः नभसि नद्धानि पयोदचक्राणि पयोदाकारमण्डलानि यैस्ते चक्रवद्भ्रमणमस्यास्तीति चक्रीवान् गर्दभः । चक्रीवन्तस्तु वालेयरासभागर्दभाः खरा इत्यमरः । आसन्दीवच्चक्रीवदष्ठीवदित्यादिना साधुः । तस्याङ्गरुहाणि रोमाणि तद्वत् धूम्ररुचः कृष्णलोहितवर्णाः । धूम्रधूमलौ कृष्णलोहितावित्यमरः । भूरेणवो विसस्रुः प्रसृताः ॥ ८ ॥

उद्यत्कृशानुशकलेषु खुराभिघाता-
द्भूमीसमायतशिलाफलकाचितेषु ।
पर्य्यन्तवर्त्मसु विचक्रमिरे महाश्वाः
शैलस्य दर्दुरपुटानिव वादयन्तः ॥ ९ ॥

उद्यदिति । खुराः शफानि । शफं क्लीवे खुरः पुमानित्यमरः । तेषामभिघातादुद्यन्तः कृशानुशकलाः स्फुलिङ्गाः यभ्यस्तेषु टङ्कप्रायाः खुरा इति भावः भूम्यां समानि समतलानि आयतानि च यानि शिलाः फलकानीव शिलाफलकानि तैराचितैर्व्याप्तैस्तेषु शैलस्य पर्य्यन्तवर्त्मसु प्रान्तमार्गेषु महाश्वा दर्दुराणां वाद्यविशेषाणां पुटान्मुखानि वादयन्त इव विचक्रमिरे जग्मुः पादन्यासैः तादृशं शब्दमकुर्व्वन्नित्यर्थः । वेः पादविहरणे इत्यात्मनेपदम् । दर्दुरा स्तोयभेकेषु वाद्यभाण्डाद्रिभेकयोरित्यमरः । उत्प्रेक्षालङ्कारः ॥ ९ ॥

तेज इति । तेजो नाम दर्पापरनामा सत्त्वगुणविकारः प्रकाशको अन्तःसारविशेषः यथाह भोजराजः तेजो निसर्गजं सत्त्वं वाजिनां स्फुरणं रजः । क्रोधस्तम इति ज्ञेयास्त्रयोऽपि सहजा गुणा इति । तच्च द्विविधं सततोत्थितमयोत्थितञ्चेति । यथाह स एव धारासु योजितानाञ्च निसर्गात्प्रेरणं विना । अविच्छिन्नमिवाभाति तत्तेजः सततोत्थितम् । कशापादादिघातैर्यत् साध्वसात् स्फुरितं तु तदिति । अत्र तेजःशब्देन तत्कार्य्यं वेगो लक्ष्यते तथा च तेजसि वेगे निरोधे तन्निवारणे समतायां वेगसाम्ये चावहितेन वल्गाविभागकुशलेने त्यर्थः । कशा ताडिनी । अश्वादेस्ताडिनी कशेत्यमरः । अत्र कशाः कशाघातास्तासां त्रयमुत्तममध्यमाधमेषु यथासङ्ख्यं मृदुसमनिष्ठुर

तेजोनिरोधसमतावहितेन यन्त्रा
सम्यक्कशात्रयविचारवता नियुक्तः ।
आरट्टजश्चटुलनिष्ठुरपातमुच्चै
श्चित्रं चकार पदमर्द्धपुलायितेन ॥ १० ॥

द्वित्रिरूपं त्रितयन्तस्य विचारः एतेषु निमित्तेषु अङ्गेष्वेवन्ताड्य इति विमर्षः तद्वता तज्ज्ञेन । यथाह भोजः । मृदु नैकेन घातेन दण्डकालेषु ताडयेत् । तीक्ष्णं मध्यं पुनर्द्वाभ्याञ्जघन्य न्निष्ठुरैस्त्रिभिः । उपवेशेऽथ निद्रायां स्खलिते दुष्टचेष्टिते । वडवालोकनोत्सुक्ये वक्रगर्व्वितह्रेषिते । सन्त्रासे च दुरुत्थाने विमार्ग्गगमने भये । शिक्षात्यागस्य समये सञ्जाते चित्तविभ्रमे । दण्डः प्रयोज्योवाहानां कालेषु द्वादशस्वपि । ग्रीवायाम्भीतमाहन्यात् त्रस्तञ्चैव च वाजिनम् । विभ्रान्तचित्तमधरे त्यक्तशिक्षञ्च ताडयेत् । प्रहेषितं स्कन्धबाह्वोर्वडवालोकिनं तथा । उपवेशे च निद्रायां कटिदेशे च ताडयेत् । दुश्चेष्टितं मुखे हन्यादुन्मार्ग्ग प्रस्थितं तथा । जघने स्खलितं हन्यान्नेत्रमार्ग्गे दुरुत्थितं । यः कुण्ठप्रकृतिर्वाजी तं सर्व्वत्रैव ताडयेदिति । एवम्भूतेन यन्त्रा सादिना सम्यग्यथाशास्त्रं नियुक्तईरितः उच्चैरुन्नतः आरट्टो ऽश्वयोर्निर्देशविशेषः तज्जोऽश्वआरट्टजः । विशेषणमात्रप्रयोगे सागराम्बरादिवत्तावतैव विशेष्यप्रतीतेरित्याह वामनः विशेषण प्रयोगोविशेष्यप्रतिपत्ताविति । चटुलश्चपलोनिष्ठुरः परुषश्च पातःप्रक्षेपोयस्मिन् कर्म्मणि तद्यथा तथा । अर्द्धपुलायितेन मण्डलगतिविशेषेण चित्रमद्भुतम्पदम्पदक्रमञ्चकार । शतार्द्धार्द्ध

नीहारजालमलिनः पुनरुक्तसान्द्राः
कुर्वन् वधूजनविलोचनपक्ष्ममालाः ।
क्षुण्णः क्षणं यदुबलैर्दिवमाततांसुः
पांशुर्दिशां मुखमतुत्थयदुत्थितोऽद्रेः ॥११॥

क्रमादूनैर्मण्डलायितवल्गितैः । उन्मुखस्याश्वमुख्यस्य गतिरर्द्धपुलायितमिति लक्षणात् । पुला नाम प्लुताद्यनेकापरनामा हयानाङ्गति विशेषः । तदुक्तं हयलीलावत्यां प्लुतां सवल्गितामाकृष्य धारा पुलनाभिधा । पुनरेनां रलोपान्तां पुलामित्याह देशिकः । तल्लक्षणञ्च तत्रैवोक्तम् । क्षिपति समविशेषानुत्क्षिपत्यग्रपादान्प्रसरति पुरतोऽश्वः साथ धारा पुलाख्या । विलसति समपादोत्क्षेपणाकुञ्चनानां करणमिह गतिज्ञाः प्राहुरन्ये पुलाख्यामिति । पार्ष्णिप्रधानञ्च विधाय रागादलं स्थिरीकृत्य वहेत्पुलाख्यामित्यादि । पुलाख्यया अयितं गतिः पुलायितं । अयगतौ भावे क्तः तच्चतार्द्धंत्या द्युक्तरीत्या अनुष्ठितमर्द्धपुलायितमित्यलमतिविस्तरेण ॥ १० ॥

नीहारेति । नीहारजालवत् तुहिनव्यूहवन्मलिनः वधूजन विलोचनानां पक्ष्ममालाः पुनरुक्तसान्द्राः द्विगुणसान्द्राः कुर्वन् स्वभावतोऽपि सान्द्रत्वादिति भावः । मयूरव्यंसकादित्वादिस्पष्टवज्ञ वत्समासः । क्षणं यदूनां बलैः सैन्यैः क्षुण्णः अद्रेरुत्थितः दिव माकाशमाततनितुमवतनितुमिच्छुः आतितांसुः । तनोतेः सन्नन्ताद् प्रत्ययः सनीवन्तर्द्धेत्यत्र तनिपतिदरिद्राणामुपसङ्ख्यानाद्वैकल्पिक इड्भावः तनोतेर्विभाषेति दीर्घः । पांशुर्दिशाम्मुखमतुत्थयदा च्छादयति स्म । तुत्थ आच्छादने इति धातोश्चौरादिकाल्लङ् ॥ ११ ॥

उच्छिद्य विद्विष इव प्रसभं मृगेन्द्रा
निन्द्रानुजानुचरभूपतयोऽध्यवात्सुः ।
वन्येभमस्तकनिखातनखाग्रमुक्त
मुक्ताफलप्रकरभाञ्जि गुहागृहाणि ॥१२॥

बिभ्राणया बहलयावकपङ्कपिङ्ग
पिच्छावचूडमनुमाधवधाम जग्मुः ।
चञ्च्वग्रदष्टचटुलाहिपताकयान्ये
स्वावासभागमुरगाशनकेतुयष्ट्या ॥ १३ ॥

उच्छिद्येति । इन्द्रानुजस्योपेन्द्रस्य हरेरनुचरा अनुजीविनो भूपतयो मृगेन्द्रान् सिंहान् विद्विषः शत्रूनिव प्रसभं प्रसह्योच्छिद्य हत्वा वन्येभानां मस्तकेषु निखातैर्निक्षिप्तैर्नखाग्रैः सिंहनखमुखैर्मुक्तान्विकीर्णान्मुक्ताफलप्रकरान् भजन्तीति तथोक्तानि गुहागृहाणीवेत्युपमितसमासः विद्विषइवेति लिङ्गात् अध्यवात्सुरध्युषितवन्तः । उपान्वध्याङ्वस इति कर्मत्वं वस निवासे लुङि सिचि वृद्धिः सस्यार्द्धधातुक इति तत्वम् ॥ १२ ॥

बिभ्राणयेति । अन्ये भूपतयः यावएव यावकोऽलक्तकः । राक्षा लाक्षा जतु क्लीबे यावोऽलक्तोद्रुमामय इत्यमरः । यावादिभ्यः कन्निति स्वार्थे कन् । बहलेन यावकपङ्केन पिङ्गं पिङ्गलं पिच्छं बर्हमेवावचूडं अधोलम्बिकलापम्बिभ्राणया । अस्योच्चूडावचूडाख्या वूर्द्धाधोमुखचूडकाविति ध्वजाङ्गेषु हलायुधः । चञ्चुस्त्रोटिः । चञ्चुस्त्रोटिरुभे स्त्रियामित्यमरः । तस्याग्रेण दष्टा चटुला अहि

छायामपास्य महतीमपि वर्त्तमाना
मागामिनीं जगृहिरे जनतास्तरूणाम्।
सर्व्वोहि नोपगतमप्यपचीयमानं
वर्द्धिष्णुमाश्रयमनागतमभ्युपैति ॥ १४ ॥

रेव पताका यस्यान्तथा उरगाशनो गरुडस्तस्य केतुयष्टिस्तदधिष्ठितो ध्वजदण्ड इत्यर्थः तया अभिज्ञानेनेति भावः अनुमाधवधाम हरिशिविरमनु स्वावासभागं स्वनिवेशदेशञ्जग्मुः प्रापुः दूरादेव गरुडध्वजेन माधवधाम ज्ञात्वा तत्सन्निहितान्नियतदिक्कान् स्वावासान्निश्चित्य जग्मुरित्यर्थः ॥ १३ ॥

छायामिति। जनानां समूहाः जनताः। ग्रामजनबन्धुसहायेभ्यस्तल्। तरूणां वर्त्तमानां विद्यमानां महतीमपि छायामपास्य त्यक्त्वा आगामिनीं छायां जगृहिरे वर्द्धिष्णुत्वादिति भावः। न च प्राप्तत्यागो दोषाय त्यागस्वीकारयोः चयवृद्धिप्रयुक्तत्वादिति भावः। सर्व्व इति। तथा हि सर्व्वो जनः उपगतं प्राप्तमप्यपचीयमानं चीयमाणं। कर्म्मकर्त्तरि प्रयोगः। आश्रयन्नोपैति न गृह्णाति किं त्वनागतमप्राप्तमपि वर्द्धिष्णुं वर्द्धनशीलं आश्रयमुपैति। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ १४ ॥

अग्र इति। अग्रे गतेन पुरः प्रयातेन रम्यां वसतिं निवासं। वहिवस्यर्त्तिभ्यश्चेति वसेरौणादिकोऽतिप्रत्ययः। परिगृह्यापतन्तीत्यापात्याः स्वयमाक्रमितुमागच्छन्तः। भव्यगेयेत्यादिना कर्त्तरि ण्यदन्तो निपातः। तेषां सैनिकानां निराकरणे निरसने आकुलेन व्यग्रेण उद्वाहुना उद्यतहस्तेन केनचिदिति शेषः अन्यतोयान्तोगच्छन्तः

अग्रे गतेन वसतिं परिगृह्य रम्या
मापात्यसैनिकनिराकरणाकुलेन ।
यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरा
दुद्बाहुना जुहुविरे मुहुरात्मवर्ग्याः ॥१५॥
सिक्ताइवामृतरसेन मुहुर्जनानां
क्लान्तिच्छिदो वनवनस्पतयस्तदानीम् ।
शाखावसक्तवसनाभरणाभिरामाः
कल्पद्रुमैः सह विचित्रफलैर्विरेजुः ॥ १६ ॥

आत्मवर्ग्याः स्वयूथ्याः प्लुतन्त्रिमात्रिकं यथा तथा कृतःस्वरोनाद आक्रान्तं यस्मिन् कर्म्मणि तद्यथा तथा । दूराद्धूते चेति दूरादाह्वाने प्लुतविधानादिति भावः । आशु दूरान्मुहुराजुहुविरे आहूताः । ह्वयतेराङ् पूर्व्वात्कर्म्मणि लिट् अभ्यस्तस्य चेति सम्प्रसारणे द्विर्वचनमुवङादेशश्च ॥ १५ ॥

सिक्ताइति । अमृतरसेन सिक्ताइवेत्युत्प्रेक्षा मुहुर्जनानां क्लान्तिच्छिदः श्रमहराः कल्पद्रुमवदमृतसेकाभावादपि तद्वदाह्लादकाइति भावः शाखास्ववसक्तैर्लग्नैर्वसनैराभरणैश्चाभिरामा एकत्र सेनास्थापितैरन्यत्र स्वप्रसूतैरिति भावः वनवनस्पतयोवनवृक्षाः विचित्रफलैर्वस्त्राभरणाद्यनेकफलयुक्तैः कल्पद्रुमैस्तत्रत्यैरिति शेषः सह तदानीं विरेजुः तद्वद्विरेजुरित्यर्थः । सहेति साहश्ये । सह साकल्यसाहश्ययौगपद्यसमृद्धिष्विति विश्वः । तथा चोपमालङ्कारः ॥ १६ ॥

यानाज्जनः परिजनैरवतार्य्यमाणा
राज्ञीर्नरापनयनाकुलसौविदल्लाः ।
स्रस्तावगुण्ठनपटाः क्षणलक्ष्यमाण
वक्त्रश्रियः सभयकौतुकमीक्षते स्म ॥ १७ ॥
कण्ठावसक्तमृदुबाहुलतास्तुरङ्गा
द्राजावरोधनवधूरवतारयन्तः ।
आलिङ्गनान्यधिकृताः स्फुटमापुरेव
गण्डस्थलोः शुचितया न चुचुम्बुरासाम् ॥१८॥

यानादिति । परिजनैर्यानाद्वाहनादवतार्य्यमाणा अवरोप्य माणाः । रुहेर्ण्यन्तात्कर्म्मणि लटः शानजादेशः रुहः पोऽन्यतरस्यामिति पकारः। नराणामालोकिजनानामपनयनेऽपसारणे आकुलाः सौविदल्लाः कञ्चुकिनो यासान्ताः । सौविदल्लाः कञ्चुकिन इत्यमरः। स्रस्ता अवरोपणसंक्षोभादपहृता अवगुण्ठनपटा यासान्ताः अतएव क्षणं लक्ष्यमाणाः वक्त्रश्रियो यासान्ताः तथोक्ताः राज्ञीः राजस्त्रीः । पुंयोगादाख्यायामिति ङीप् । सभयकौतुकमीक्षते स्म । ताडनाद्भयं कामात्कौतुकम् ॥ १७ ॥

कण्ठेति । तुरङ्गाद्राजावरोधनवधूः राज्ञामवरोधस्त्री रवतारयन्तोऽवरोपयन्तोऽधिकृताः अन्तःपुराधिकारिणः कण्ठेषु स्वकीयेष्ववसक्ता मृदवो बाहुलतास्तदीया येषान्ते तथोक्ताः सन्तः स्फुटं व्यक्तमालिङ्गनान्यापुरेव अन्यथा दुरवरोहत्वाद्भ्राजा चेति भावः। आसान्वधूनाङ्गण्डस्थलीः शुचितया स्वयं शुद्धवर्त्तित्वाद्गण्डानां

दृष्ट्वेव निर्ज्जितकलापभरामधस्ता
द्व्याकीर्णमाल्यकवरां कवरीं तरुण्याः ।
प्रादुद्रवत् सपदि चन्द्रकवान् द्रुमाग्रात्
संहर्षिणा सह गुणाभ्यधिकैर्दुरासम् ॥ १९ ॥

नैर्मल्याच्च न चुचुम्बुः यावत्कर्त्तव्यकारिणः शुद्धात्मानो नातिचर न्तीति भावः अन्यत्र तु पापाचाराः पापलिङ्गानि प्रकाशयन्तीति भावः ॥ १८ ॥

दृष्ट्वेवेति । अधस्तात्तरुतले निर्ज्जितः कलापभारो बर्हभारो यया ताम् । कलापोऽभूषणे बर्हे इत्यमरः । व्याकीर्णेन विचित्रेन माल्येन कवरां सारम् । कवरः कर्वुरः सारः इति हलायुधः । तरुण्याः कवरीं केशपाशम् । कवरी केशपाशोऽस्येत्यमरः । जानपदेत्यादिना ङीप् । दृष्ट्वेवेत्युत्प्रेक्षा । सपदि चन्द्रका अस्य सन्तीति चन्द्रकवा न्मयूरः द्रुमाग्रात्प्रादुद्रवत् प्रद्रुतवान् । द्रुगतौ लुङि णिश्रीत्या दिना च्लेरङादेशः अचि श्नुधात्वित्यादिना उवङादेशः । तथा हि संहर्षिणा मत्सरिणा कर्त्रा गुणाभ्यधिकैर्गणोत्कृष्टैः सह दुरासमासितु मशक्यमित्यर्थः । आसेरकर्मकादीषद्दुरित्यादिना खल्प्रत्ययः तयोरेव कृत्यक्तखलर्थाइति नियमात् । अत्र भयहेतुकस्य पलायनस्य कवरीदर्शनहेतुकत्वमुत्प्रेक्ष्य तत्समर्थनासमर्थोऽयं अर्थान्तरन्यासः क्तइत्यस्यानयाङ्गेन सङ्करः । न हि जितैर्जेतुरग्रे स्थातुमुचित मिति भावः ॥ १९ ॥

रोचिष्णवेति । रोचिष्णवो रोचनशीलाः । अलङ्कृञित्या दिना इष्णुच् प्रत्ययः । तेषाङ्काञ्चनचयानाङ्कनकचयानामंशुभिः

रोचिष्णुकाञ्चनचयांशुपिशङ्गिताशा
वंशध्वजैर्जलदसंहतिमुल्लिखन्त्यः ।
भूभर्त्तुरायतनिरन्तरसन्निविष्टाः
पादा इवाभिबभुरावलयो रथानाम् ॥ २० ॥

छायाविधायिभिरनुज्झितभूतिशोभै
रुच्छ्रायिभिर्बहलपाटलधातुरागैः ।
दूष्यैरिव क्षितिभृतां द्विरदैरुदार
तारावलीविरचनैर्व्यरुचन्निवासाः ॥ २१ ॥

पिशङ्गिताः पिशङ्गीकृताः आशायाभिस्ताः वंशानान्तत्तद्राजकुलानां ध्वजैः प्रतिनियतकुलानामङ्कुशादिचिह्नितकेतुभिः अन्यत्र वंशा त्मवस्तैरेव ध्वजैर्जलदसंहतिं मेघसङ्घातमुल्लिखन्त्यः आयतन्दीर्घं निरन्तरन्नीरन्ध्रञ्च सन्निविष्टाः संस्थिताः रथानामावलयः भूभर्त्तू रैवतकाद्रेः पादाः प्रत्यन्तपर्वता इवाभिबभुः भान्ति स्म । आशापि शङ्गीकरणादिक्रियानिमित्ता जातिस्वरूपोत्प्रेक्षा ॥ २० ॥

छायेति । क्षितिभृतां राज्ञां निवसन्त्यत्रेति निवासाः निवास देशाश्छायाविधायिभिः कान्तिकरैरनातपसम्पादकैश्च । छाया त्वनातपे कान्ताविति विश्वः । अनुज्झिताभूतीनाम्भस्मरचनानां सम्पदां च शोभायैस्तैः । भूतिर्भस्मनि सम्पदीत्यमरः । उच्छ्रायिभि रुन्नमद्भिर्बहलः सान्द्रः पाटलश्चारक्तधातुरागो गैरिकादि रञ्जनं येषान्तैः उदारा तारावलीनां शुद्धमुक्तावलीनां विरचना येषु तैः मुक्तासारभूषितैरित्यर्थः । तारा मुक्तादिसंशुद्धौ

उत्क्षिप्तकाण्डपटकान्तरलीयमान
मन्दानिलप्रशमितश्रमघर्म्मतोयैः ।
दूर्व्वाप्रतानसहजास्तरणेषु भेजे
निद्रासुखं वसनसद्मसु राजदारैः ॥ २२ ॥

तरले शुद्धमौक्तिके इति विश्वः । दृष्यपचे ताराबलीरज्जु सन्ततिरिति केचित् द्विरदैर्दूष्यैः पटमण्डपैरिव । दूष्यं वस्त्रे च तद्गृहइति विश्वः । व्यरुचन् रोचन्ते स्म । रुच दीप्तौ द्युद्भ्योलुङीति परस्मैपदं पूषादीत्यादिना च्लेरङादेशः । अत्र द्विरदाना न्दूष्याणाञ्च प्रकृतत्वान्नोपमा नापि श्लेषभेदः विशेष्यस्य विशेषणानां च केषाञ्चिदश्लिष्टत्वात् तस्मात्केवलप्रकृतास्पदा तुल्ययोगितेयं इवशब्दस्तु सादृश्यमात्रानुवादकइति सङ्क्षेपः ॥ २१ ॥

उत्क्षिप्तेति । उत्क्षिप्तउद्धृतोयः काण्डपटएव काण्डपटकः इत्याधोलम्बिवायुसञ्चारार्थः पटः । अपटः काण्डपटी स्यादिति वैजयन्ती । तस्यान्तरेऽवकाशे लीयमानेन मन्दानिलेन प्रशमितं श्रमेणाध्वखेदेन यत् घर्म्मतोयं स्वेदाम्बु तद्येषान्तैराजदारैः राजावरोधैः दूर्व्वाणां प्रतानं प्रचयएव सहजमकृत्रिममास्तरणं तल्पं येषु तेषु वसनसद्मसु पटमण्डपेषु निद्रासुखम्भेजे ॥ २२ ॥

प्रस्वेदइति । अङ्गे गात्रे प्रस्वेदवारिणा सविशेषं सातिशयं यथा तथा विषक्तं अतिश्लिष्टं कूर्प्पासकञ्चोलकं कञ्चुकमित्यर्थः । चोलः कूर्प्पासकोऽस्त्रियामित्यमरः । चतानि पुनर्विदीर्णानि नख चतानि यस्मिन् कर्म्मणि तद्यथा तथा उत्क्षिपन्ती उन्मोचयन्ती अतएवाविर्भवत्प्रकाशमानं घनपयोधरबाहुमूलङ्गनौ पयोधरौ

प्रस्वेदवारिसविशेषविषक्तमङ्गे
कूर्पासकं क्षतनखक्षतमुत्क्षिपन्ती ।
आविर्भवद्घनपयोधरबाहुमूला
शातोदरी युवदृशां क्षणमुत्सवोऽभूत् ॥ २३ ॥
यावत्स एव समयः सममेव ताव
दव्याकुलाः पटमयान्यभितोवितत्य ।
पर्य्यापतत्क्रयिकलोकमगण्यपण्य
पूर्णापणाविपणिनोविपणीर्विभेजुः ॥ २४ ॥

बाहुमूले च यस्याः सा शातोदरी । नासिकोदरेत्यादिना ङीप् । युवदृशां क्षणमुत्सवोऽभूत् । एतेन यूनां लराचिन्तादिकरसिद्ध वस्त्ववलोकननिमित्तङ्कालाक्षमत्वलक्षणमौत्सुक्यं व्यज्यते । नायिकाभिसारिणी प्रगल्भा वा ॥ २३ ॥

यावदिति । विपणोव्यवहारः स एषामस्तीति विपणिनो वणिजोयावत्स एव समयः सेनानिवेशलक्षण एव तावत्क्षण एव समं युगपत् अव्याकुलाः अव्यग्राः सन्तः पटमयानि पट विकाराणि पटमण्डपानीत्यर्थः अभितोवितत्य उभयतः श्रेण्या वितत्य विस्तार्य्य क्रयेण जीवतीति क्रयिकः । वस्तुक्रयविक्रयादिति ठक् । पर्य्यापतम् परितोधावन् क्रयिकलोकः क्रेतृजनोयस्मिन् कर्म्मणि तत् अगण्यैरसङ्ख्येयैः पण्यैः पण्यद्रव्यैः पूर्णाआपणाः पण्य प्रसारणस्थानानि यासु ताः विपणीः पण्यवीथीः । आपणस्तु निषद्यायां विपणिः पण्यवीथिकेत्यमरः । विभेजुरसङ्कीर्णन्निर्ममु रित्यर्थः । स्वभावोक्त्यनुप्रासौ ॥ २४ ॥

अल्पप्रयोजनकृतोरुतरप्रयासै
रुद्गूर्णलोष्टलगुडैः परितोऽनुविद्धम्।
उद्यन्तमुद्धृतमनोकहजालमध्या
दन्यः शशं गुणमनल्पमवन्नवाप ॥ २५ ॥

अल्पेति । अल्पप्रयोजनेनाल्पफलेन निमित्तेन कृतउरुतरो भूयान्प्रयासैर्यैस्तैः अल्पस्यैकस्य शशपिण्डस्य भूयसामकिञ्चित्करत्वा दिति भावः उद्गूर्णाः उद्यताः लोष्टानि मृत्खण्डाः लगुडाश्च दण्डकाष्ठानि यैस्तैः पुम्भिरिति शेषः परितोऽनुविद्धमनुरुद्धं अनसः शकटस्याकृतिं घ्नन्तीत्यनोकहावृक्षाः तेषाञ्जालमध्या दुद्यन्तमुत्थितं । उत्पूर्वादेतेः कर्त्तरि क्तः । उद्धृतम्पलायितं शशं मृगविशेषं अन्यः परः अवन् हन्तृन्निवार्य्य रक्षन् अनल्पं गुणं महान्तमुत्कर्षमवाप । दयालोरनामिषलोलुपस्य सुकीर्त्तिः सुलभेति भावः अत्रार्थान्तरश्चोक्तः अन्योगुणं पाशमवन् प्रयुञ्जानः शशमवाप जग्राह योहन्ता तस्यैव मृगइति व्याधसमयादिति भावः ॥ २५ ॥

त्रासेति । त्रासाकुलोजनदर्शनाद्भयविक्लवोऽतएव निकेता न्निवेशान् परितः सर्व्वतः । अभितः परितइत्यादिना द्वितीया। परिपतन्धावन् मृगोहरिणः कैश्चिदपि धन्विभिर्धनुष्मद्भिः । धन्वी धनुष्मान्धानुष्कइत्यमरः । व्रीह्यादित्वादिनिरिति स्वामी। पुम्भि र्नान्ववन्धि नानुयातः । बध्नातेः कर्म्मणि लुङ् । तथाप्यङ्गनानामाकर्ण पूर्णाविस्तीर्णाश्चाक्षुषाश्च ये नयनान्येवेषवस्तैर्हता ईक्षणश्रीर्यस्य सः अतः क्वचिदपि न तस्थौ किन्तु वीरविशिखापाताभावेऽप्यङ्गना

त्रासाकुलः परिपतन्परितो निकेता
न्पुम्भिर्न कैश्चिदपि धन्विभिरन्वबन्धि ।
तस्थौ तथापि न मृगः क्वचिदङ्गनाना
माकर्णपूर्णनयनेषुहतेक्षणश्रीः ॥ २६ ॥

आस्तीर्णतल्परचितावसथः क्षणेन
वेश्याजनः कृतनवप्रतिकर्मकाम्यः ।
खिन्नानखिन्नमतिरापततो मनुष्या
न्प्रत्यग्रहीच्चिरनिविष्टइवोपचारैः ॥ २७ ॥

पाङ्गविशिखपातात्पलायित एवेति भावः । अत्र जनालोकनोत्थभय हेतुकस्य मृगानवस्थानस्याङ्गनापाङ्गेषुहतिहेतुकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा सा च व्यञ्जकाप्रयोगात् प्रतीयमाना । हेतोश्च हतेक्षणश्रीरिति विशेषणगत्योक्तत्वात्काव्यलिङ्गमिति सङ्करः ॥ २६ ॥

आस्तीर्णेति । क्षणेनास्तीर्णतल्पं वेश्यावृत्तेः शय्याप्रधानत्वात् प्रागेव सज्जितशय्यं यथा तथा रचितावसथः कल्पितनिकेतः। स्थाना वसथवास्तु चेति कोषः । कृतेन नवप्रतिकर्म्मणा नूतनेन प्रसाधनेन काम्यः स्पृहणीयः अखिन्नमतिरश्रान्तचित्तः अगणिताध्वखेद इत्यर्थः । वेश्याजनः खिन्नानध्वश्रान्तानापतत आगच्छतो मनुष्यान् पुरुषान् चिरनिविष्टइव तत्रैव नित्यवास्तव्यइवेत्युत्प्रेक्षा उपचारैः शीताम्बुताम्बूलदानादिसत्कारैः प्रत्यग्रहीत् वशीचकारेत्यर्थः॥२७॥

सस्रुरिति । सेनायां समेताः सैन्याः सैनिकजनाः । सेनाया श्चेति ण्यप्रत्ययः । नगनिम्नगानां याः श्रियः सम्पदः तासामनुप

सस्नुः पयः पपुरनेनिजुरम्बराणि
जक्षुर्बिसं धृतविकासिबिसप्रसूनाः ।
सैन्याः श्रियामनुपभोगनिरर्थकत्व
दोषप्रवादममृजन्नगनिम्नगानाम् ॥ २८ ॥

भोगः उपभोगाभावः । क्वचित्प्रसज्यप्रतिषेधेऽपि नञ्समास दृश्यते । यथाऽदर्शनमश्रवणमनुच्चारणं अनुपलब्धिरभावइत्यादि । तेन यन्निरर्थकत्वं निष्फलत्वं तदेव दोषः तेन यः प्रवादो निन्दा तममृजन् अमार्ज्जन् । मृजूष् शुद्धौ अदादित्वाल्लङि शपोलुक् मृजेरजादौ क्ङिति विभाषा वृद्धिर्वक्तव्येति विकल्पाद्वृद्ध्यभावः । मार्ज्जनप्रकारमाह । सस्नुः स्नानञ्चक्रुः पयः पानीयं पपुः । ष्णा शौचे पा पाने लिट् । अम्बराण्यनेनिजुः अक्षालयन् । णिजिर शौचे जुहोत्यादित्वाल्लङि श्लाविति द्विर्भावः सिजभ्यस्तविदिभ्यश्चेति झेर्जुसादेशः णिजान्त्रयाणां गुणः श्लावित्यभ्यासस्य गुणः । धृतानि विकासिबिसप्रसूनानि विकसितपुष्कराणि यैस्ते । बिसप्रसूनराजीव पुष्कराम्भोरुहाणि चेत्यमरः । बिसम्मृणालञ्जक्षुः भक्षयाञ्चक्रुः । घसेर्लिटि गमहनेत्यादिना उपधालोपे चुत्वं शासिवसिघसीनां चेति षत्वं । स्नानाद्युपभोगेनोक्तनैरर्थ्यं निराचक्रुरित्यर्थः । अत्र दोषमार्जनस्य स्नानादिनोक्तत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमल ङ्कारः । स्नानादिक्रियासमुच्चयस्तस्याङ्गमस्येति सङ्करः ॥ २८ ॥

नाभीति । स्त्रीणां नाभिभिरेव ह्रदैः परिगृहीततरयाणि प्रतिषिद्धवेगानि वृहद्भिर्जघनैरेव सेतुभिर्निवारितानि प्रतिहत गतिकानीत्यर्थः । पश्चान्नितम्बः स्त्रीकट्याः क्लीवे तु जघनं

त्रासाकुलः परिपतन्परितो निकेता
न्पुम्भिर्न कैश्चिदपि धन्विभिरन्वबन्धि ।
तस्थौ तथापि न मृगः क्वचिदङ्गनाना
माकर्णपूर्णनयनेषुहतेक्षणश्रीः ॥ २६ ॥
आस्तीर्णतल्परचितावसथः क्षणेन
वेश्याजनः कृतनवप्रतिकर्म्मकाम्यः ।
खिन्नानखिन्नमतिरापततो मनुष्या
न्प्रत्यग्रहीच्चिरनिविष्ट इवोपचारैः ॥ २७ ॥

पाङ्गविशिखपातात्पलायित एवेति भावः । अत्र जनालोकनोत्थभय हेतुकस्य मृगानवस्थानस्याङ्गनापाङ्गेषुहतिहेतुकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा सा च व्यञ्जकाप्रयोगात् प्रतीयमाना । हेतोश्च हतेक्षणश्रीरिति विशेषणगत्योक्तत्वात्काव्यलिङ्गमिति सङ्करः ॥ २६ ॥

आस्तीर्णेति । क्षणेनास्तीर्णतल्पं वेश्यावृत्तेः शय्याप्रधानत्वात् प्रागेव सज्जितशय्यं यथा तथा रचितावसथः कल्पितनिकेतः। स्थाना वसथवास्तु चेति कोषः । कृतेन नवप्रतिकर्म्मणा नूतनेन प्रसाधनेन काम्यः स्पृहणीयः अखिन्नमतिरश्रान्तचित्तः अगणिताध्वखेद इत्यर्थः । वेश्याजनः खिन्नानध्वश्रान्तानापतत आगच्छतो मनुष्यान् पुरुषान् चिरनिविष्ट इव तत्रैव नित्यवास्तव्य इवेत्युत्प्रेक्षा उपचारैः शीताम्बुताम्बूलदानादिसत्कारैः प्रत्यग्रहीत् वशीचकारेत्यर्थः॥२७॥

सस्नुरिति । सेनायां समेताः सैन्याः सैनिकजनाः । सेनाया वेति ण्यप्रत्ययः । नगनिम्नगानां याः श्रियः सम्पदः तासामनुप

सस्नुः पयः पपुरनेनिजुरम्बराणि
जह्नुर्बिसं धृतविकासिबिसप्रसूनाः ।
सैन्याः श्रियामनुपभोगनिरर्थकत्व
दोषप्रवादममृजन्नगनिम्नगानाम् ॥ २८ ॥

भोगः उपभोगाभावः । क्वचित्प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते । यथाऽदर्शनमश्रवणमनुच्चारणं अनुपलब्धिरभावइत्यादि । तेन यन्निरर्थकत्वं निष्फलत्वं तदेव दोषः तेन यः प्रवादो निन्दा तममृजन् अमार्ज्जन् । मृजूष् शुद्धौ अदादित्वाल्लङि शपोलुक् मृजेरजादौ क्ङिति विभाषावृद्धिर्वक्तव्येति विकल्पाद्वृद्ध्यभावः । मार्ज्जनप्रकारमाह । सस्नुः स्नानञ्चक्रुः पयः पानीयं पपुः । ष्णा शौचे पा पाने लिट् । अम्बराण्यनेनिजुः अक्षालयन् । णिजिर शौचे जुहोत्यादित्वाल्लङि श्लाविति द्विर्भावः सिजभ्यस्तविदिभ्यश्चेति झेर्जुसादेशः णिजान्त्रयाणां गुणः श्लावित्यभ्यासस्य गुणः । धृतानि विकासिबिसप्रसूनानि विकसितपुष्कराणि यैस्ते । बिसप्रसूनराजीव पुष्कराम्भोरुहाणि चेत्यमरः । बिसम्मृणालञ्जघ्नुः भक्षयाञ्चक्रुः । घसेर्लिटि गमहनेत्यादिना उपधालोपे चुत्वं शासिवसिघसीनां चेति षत्वं । स्नानाद्युपभोगेनोक्तनैरर्थ्यं निराचक्रुरित्यर्थः । अत्र दोषमार्जनस्य स्नानादिनाक्तत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । स्नानादिक्रियासमुच्चयस्तस्याङ्गत्वेति सङ्करः ॥ २८ ॥

नाभीति । स्त्रीणां नाभिभिरेव ह्रदैः परिगृहीततरयाणि प्रतिषिद्धवेगानि बृहद्भिर्जघनैरेव सेतुभिर्निवारितानि प्रतिहत गतिकानीत्यर्थः । पश्चान्नितम्बः स्त्रीकट्याः क्लीवे तु जघनं

नाभिह्रदैः परिगृहीतरयाणि यत्र
स्त्रीणां बृहज्जघनसेतुनिवारितानि।
जग्मुर्जलानि जलमण्डुकवाद्यवल्गु
वल्गद्घनस्तनतटस्खलितानि मन्दम्॥ २९॥

आलोलपुष्करमुखोल्लसितैरभीक्ष्ण
मुक्षाम्बभूवुरभितोवपुरम्बुवर्षैः।
खेदायतश्वसितवेगनिरस्तमुग्ध
मूर्द्धन्यरत्ननिकरैरिव हास्तिकानि॥ ३०॥

पुरद्दत्यमरः। जलमेव मण्डुकवाद्यं वाद्यविशेषः जलमेकेन पाणिनोत्थापितमपरेण ताडितम्मण्डुकवत् ध्वनतीति प्रसिद्धत्वेन वल्गु सुन्दरं वल्गद्भिश्चलैः घनैः स्तनतटैः स्खलितानि स्खलन ङ्गतानि गमितानि वा जलानि पूर्व्वोक्तनगनिम्नगासलिलानि मन्दञ्जग्मुः। अत्र जलमन्दगमनस्य विशेषणगत्या रयप्रतिबन्धादि पदार्थहेतुकत्वात्काव्यलिङ्गम्॥ २९॥

आलोलेति। हस्तिनां समूहाहास्तिकानि। अचित्तहस्तिधेनो ष्ठक्। आलोलानि यानि पुष्कराणि हस्ताग्राणि। पुष्करङ्करि हस्ताग्रद्दत्यमरः। तेषां मुखैरग्रैरुल्लसितानि उत्क्षिप्तानि तैरम्बु वर्षैः खेदेनाध्वश्रमेणायतेन द्राघीयसा श्वसितस्योच्छ्वासमारुतस्य वेगेन निरस्ताः वहिरुत्क्षिप्ताः ये मुग्धाः सुन्दराः मूर्धन्याः मूर्द्धनि भवाः। शरीरावयवाच्चेति यत्प्रत्ययः ये चाभावकर्मणोरिति प्रकृतिभावान्नस्तद्धितद्दति टिलापाभावः। रत्ननिकरामुक्ताफलप्रकरा स्तैरिवेत्युत्प्रेक्षा वपुरभीक्ष्णमुक्षाम्बभूवुः सिषिचुः। उक्ष सेचने

ये पक्षिणः प्रथममम्बुनिधिङ्गतास्ते
येऽपीन्द्रपाणितुलितायुधलूनपक्षाः ।
ते जग्मुरद्रिपतयः सरसीर्विगाढु
माक्षिप्तकेतुकुथसैन्यगजच्छलेन ॥ ३१ ॥

द्विजादेश्च गुरुमतोऽन्त्यच्छद्रत्याम्प्रत्ययः । गजेन्द्रजीमूतवराह शङ्खमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरीति गजानां मुक्ताकरत्वे प्रमाणम् ॥ ३० ॥

यद्रति । ये पक्षिणः पक्षवन्त इन्द्रेणाच्छिन्नपक्षा इत्यर्थः । संसर्गेऽ इनिप्रत्ययः । तेऽद्रिपतयो मैनाकादयः प्रथममम्बुनिधि ङ्गताः प्रविष्टाः येऽपि ये ये इत्यर्थः इन्द्रस्य पाणिना तुलितेन प्रेरितेनायुधेन वज्रेण लूनपक्षाः छिन्नगरुतस्तेऽद्रिपतयः आक्षिप्ता अपनीताः केतवो ध्वजाः कुथाः पृष्ठास्तरणानि च येषां । प्रवेणा स्तरणं वर्णः परिस्तोमः कुथो द्वयोरित्यमरः । तेषां सैन्यगजानां छलेन सरसीर्विगाढुं विगाहितुं । स्वरतिसूतीति विकल्पान्नडा गमः । जग्मुः अत्र गजच्छलेनेति छलशब्देन गजत्वमपह्नुत्या द्रित्वारोपणाच्छलादिशब्दैरसत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः । तेन पक्षवतामद्रीणां सगरावगाहनदर्शनान्मत्सरात् स्वयमपि सलिलमवगाहमानाः साक्षाल्लूनपक्षाः पर्वता इवेत्युत्प्रेक्षा व्यज्यते ॥ ३१ ॥

आत्मानमिति । महेभो जलधेर्जलाशयस्य महत्यम्भसि प्रति विम्बितमङ्गं यस्य तमभिमुखापतितमभिमुखमागतमात्मानमेव

आत्मानमेव जलधेः प्रतिविम्बिताङ्ग
मूर्म्मौ महत्यभिमुखापतितं गजेन ।
क्रोधादधावदपभीरभिहन्तुमन्य
नागाभियुक्तइव युक्तमहो महेभः ॥ ३२ ॥
नादातुमन्यकरिमुक्तमदाम्बुतिक्तं
धूताङ्कुशेन न विहातुमपीच्छताम्भः ।
रुद्धे गजेन सरितः सरुषावतारे
रिक्तोदपात्रकरमास्त चिरं जनौघः ॥ ३३ ॥

आत्मप्रतिविम्बमेवेत्यर्थः निरीक्ष्यान्यनागेन प्रतिगजेनाभियुक्तो ऽभिद्रुतइवातित्वरमपभीर्निर्भीकः सन् क्रोधादधावत् अहोइति मौढ्येन विस्मय तच्च युक्तं महेभस्येति भावः । अभियुक्तइवेत्युत्प्रेचायाः प्रतिगजभ्रान्तिनिवन्धनत्वात् भ्रान्तिमदुत्प्रेचयोरङ्गाङ्गिभावेन सङ्करः ॥ ३२ ॥

नेति । अन्यकरिणा प्रतिगजेन मुक्तेन मदाम्बुना तिक्तं सुरभि । कटुतिक्तकषायास्तु सौरभ्येऽपि प्रकीर्त्तिताइति केशवः । अम्भआदातुङ्गृहीतुं नेच्छता विहातुन्त्यक्तुमपि नेच्छता अनिच्छता क्रोधपिपासाभ्यामिति भावः । धूताङ्कुशेन सरुषा सक्रोधेन गजेन नगसरितोऽवतारे तीर्थे रुद्धे सति जनौघः रिक्तान्युदपात्राणि यषु ते करायस्मिन् तद्यथा तथा चिरमास्त अतिष्ठत् । आस उपवशने लङ् । एकहलादौ पूरयितव्येऽन्यतरस्यामित्युदकशब्दस्योदादेशः ॥ ३३ ॥

पन्थानमाशु विजहीहि पुरः स्तनौ ते
पश्यन् प्रतिद्विरदकुम्भविशङ्कि चेताः ।
स्तम्बेरमः परिणिनंसुरसावुपैति
षिड्गैरगद्यत ससम्भ्रममेव काचित् ॥ ३४ ॥

कीर्णं शनैरनुकपोलमनेकपानां
हस्तैर्विगाढमदतापरुजः शमाय ।
आकर्णमुल्लसितमम्बु विकासिकाश
नीकाशमाप समतां सितचामरस्य ॥ ३५ ॥

पन्थानमिति । पन्थानमाशु विजहीहि । ओहाक्त्यागे लोटि सेर्ह्यादेशः आ च हाविति विकल्पादीकारादेशः । पुरोऽग्रे ते स्तनौ पश्यन् प्रतिद्विरदस्य कुम्भौ विशङ्कत इति तद्विशङ्कि चेतो यस्य सः कुम्भभ्रान्तिमानित्यर्थः । अतएव भ्रान्तिमदलङ्कारः । स्तम्बे तृणे रमत इति स्तम्बेरमः । इभः स्तम्बेरमः पद्मीत्यमरः । स्तम्बकर्णयो रमिजपोरित्यच् प्रत्ययः । तत्पुरुषे कृति बहुलमित्यलुक् । परिणन्तुस्तिर्यक् प्रहर्तुमिच्छुः परिणिनंसुः । नमेः सन्नन्तादु प्रत्ययः एकाच उपदेशेऽनुदात्तादितीट्प्रतिषेधः । असावुपैति पुरेति पाठे पुरोपैतीत्यन्वयः उपैष्यतीत्यर्थः । यावत्पुरा निपातयोर्लडिति भविष्यदर्थे लट् । षिड्गैर्विटैः । षिड्गः पल्लविको विट इति कोषः । काचिदेवमुक्तरीत्या सम्भ्रमं सत्वरं अगद्यत गदिता ॥ ३४ ॥

कीर्णमिति । अनेकपानां द्विपानां विगाढः प्ररूढो यो मदेन तापः स एव रुक् रोगः तस्याः रुजः शमाय शनैर्मन्दहस्तैरनुकपोलं

गण्डूषमुज्झितवता पयसः सरोषं
नागेन लब्धपरवारणमारुतेन ।
अम्भोधिरोधसि पृथुप्रतिमानभाग
रुद्धोरुदन्तमुसलप्रसरं निपेते ॥ ३६ ॥

कपोलयोः कीर्णं क्षिप्तं आकर्णं कर्णपर्यन्तं । आङ्मर्य्यादाभिविध्यो रित्यव्ययीभावः । उल्लसितमुत्पतितं त्रिकाग्नि यत्काशकाशकुसुम न्तेन सदृशङ्काशनीकाशं । नित्यसमासत्वादस्वपदविग्रहः । अत एव सुरुत्तरपदे लमी । निभशङ्काशनीकाशप्रतीकाशोपमादय इत्यमरः । अस्तु सितचामरस्य समतां साट्टश्यमाप । तुल्यार्थैरित्या दिना षष्ठी । उपमालङ्कारः ॥ ३५ ॥

गण्डूषमिति । लब्धः परवारणस्य प्रतिगजस्य मारुतोमद गन्धवाहोयेन तेन अतएव सरोषं यथा तथा पयसः पानीयस्य गण्डूषम्मुखपूरणं मुखान्तर्गतम्पय इत्यर्थः । गण्डूषोमुखपूरणइति हलायुधः । द्विलिङ्गत्वेऽपि पुल्लिङ्गमेवाह वामनोलिङ्गाध्याहारा वित्यत्र । उज्झितवता त्यक्तवता नागेन गजेन । मतङ्गजोगजोनाग इत्यमरः । अम्भोधिरोधसि सागरतीरे । दन्तयोरुभयोर्मध्यम्प्र तिमानमिति स्मृतम् । पृथुना प्रतिमानभागेन रुद्धः प्रतिबद्धः उरू दन्तौ मुसलाविव तयोः प्रसरः प्रसारोयस्मिन् कर्म्मणि तत् । अयोग्रोमुसलोऽस्त्रीस्यादित्यमरः । निपेते निपतितम् । भावे लिट् । क्रोधवेगादलब्धरोधाः प्रहृत्य पारवश्यात् स्वयञ्चा धोमुखः पपातेत्यर्थः । क्रोधान्धाः किन्न कुर्वन्तीति भावः ॥ ३६ ॥

दानं ददत्यपि जलैः सहसाधिरूढे
को विद्यमानगतिरासितुमुत्सहेत ।
यद्दन्तिनः कटकटाहतटान्मिमङ्क्षो
र्मङ्क्षूदपाति परितः पटलैरलीनां ॥ ३७ ॥

दानमिति । दीयतइति दानं धनं मदश्च । दानं गजमदे त्यागइति विश्वः । तद्ददति वितरत्यपि दातर्य्यपीत्यर्थः । सहसा अकस्मात् । स्वरादित्वादव्ययमिति शाकटायनः । जलैर्जडै र्नीरैश्च । जलङ्गोकलले नीरे ह्रीवेरे च जडेऽन्यवदिति विश्वः । अधिरूढे आक्रान्ते सति विद्यमानगतिः गत्यन्तरवान्समर्थश्च कः पुमानासितुन्तत्र स्थातुमुत्सहेत न कोऽपीत्यर्थः । शकधृषेत्यादिना तुमुन् । यस्मान्मिमङ्क्षोर्मङ्क्तुमिच्छोः । मज्जेः सन्नन्तादु प्रत्ययः । दन्तिनः कटोगण्डः स कटाहः खर्परइव । कटाहः खर्परस्तु पइति वैजयन्ती । तस्य तटात्प्रदेशादलीनां पटलैः परितोमङ्क्षु द्राक् । द्राक् मङ्क्षु सपदि द्रुतमित्यमरः । उदपाति उत्पतितम् । भावे लुङ् चिण् भावकर्म्मणोरिति चिण् । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३७ ॥

अन्तरिति । जलौघे अन्तर्जलौघं । विभक्त्यर्थेऽव्ययीभावः । अथ वा जलौघस्य जलपूरमन्तरभ्यन्तरे अवगाढवतः प्रविष्टवतः । गाहेर्निष्ठात्क्तवतुप्रत्ययः ढत्वष्टुत्वढलोपाः । गजस्य कपोलौ हित्वा तणमन्तरोत्ते उपर्याकाशे विततपक्षतिर्विस्तृतपक्षमूलः आमूलात विततपक्षइत्यर्थः । स्त्री पक्षतिः पक्षमूलमित्यमरः । पक्षात्तिरिति तिप्रत्ययः । अलिगणोगुणेषु रूपादिषु द्रव्यमाश्रयोयेषान्तेषु

अन्तर्जलौघमवगाढवतः कपोलौ
हित्वा क्षणं विततपक्षतिरन्तरीक्षे ।
द्रव्याश्रयेष्वपि गुणेषु रराज नीलो
वर्णः पृथग्गतइवालिगणो गजस्य ॥ ३८ ॥

संसर्पिभिः पयसि गैरिकरेणुरागै
रम्भोजगर्भरजसाङ्गनिषङ्गिणा च ।
क्रीडोपभोगमनुभूय सरिन्महेभा
वन्योन्यवस्त्रपरिवर्त्तमिव व्यधत्ताम् ॥ ३९ ॥

द्रव्याश्रयेषु अपि अयुतसिद्धत्वात् द्रव्यसमवेतत्वाच्च द्रव्याधीन सत्ताकेषु सत्स्वपीत्यर्थः । पृथग्गतः जलमज्जनभयात् स्वाश्रयपरिहारेण स्थितोनीलोवर्णोनीलरूपङ्गजस्य नीलिमेव रराज । गुणे शुक्लादयः पुंसीत्यमरः । अत्रालिगणे सादृश्याङ्गजनीलत्वाश्रयादन्यतउपलब्धिनिर्वाहाय पृथक् स्थितिविशिष्टत्वमुत्प्रेक्ष्यते ॥ ३८॥

संसर्प्पिभिरिति । सरिच्च महेभस्च सरिन्महेभौ पयसि संसर्प्पिभिः गजात्सरिज्जले विसृत्वरैः गैरिकरेणवएव रागास्तैः । करणे घञ् । अङ्गनिषङ्गिणा गजाङ्गसङ्गिना अम्भोजगर्भरजसा पद्मान्तःपरागेण च निमित्तेन क्रीडया लीलया उपभोगं सम्भोगमनुभूयान्योन्यम्मिथोवस्त्रयोः परिवर्त्तं विनिमयं व्यधत्तामकुरुतामिव । दधातेर्लङि परस्मैपदे तसस्तामादेशः । अत्र सरिन्महेभयोः प्रतीयमाननायिकादेरभेदाध्यवसायेन वस्त्रविनिमयोत्प्रेक्षा ॥ ३९ ॥

यास्त्वन्द्रकैर्मदजलस्य महानदीनां
नेत्रश्रियं विकसतो विदधुर्गजेन्द्राः ।
तास्तत्यवापुरविलम्बितमुत्तरन्तो
धौताङ्गलग्ननवनीलपयोजपत्रैः ॥ ४० ॥

प्रत्यन्यदन्ति निशिताङ्कुशदूरभिन्न
निर्याणनिर्यदसृजं चलितं निषादी ।
रोद्धुं महेभमपरिस्फुटमानमागा
दाक्रान्तितो न वशमेति महान्परस्य ॥ ४१ ॥

यास्त्विति । गजेन्द्राः विकसतः समन्तात्पयसि तैलविन्दुवत्प्र सरतो मदजलस्य चन्द्रकैश्चन्द्राकारैर्मण्डलैर्महानदीनां याम्नेत्र श्रियं विदधुः चक्रुस्तां नेत्रश्रियमुत्तरन्तो जलान्निर्गच्छन्तो धौतेषु क्षालितेष्वङ्गेषु लग्नैः सक्तैर्नवनीलपयोजपत्रैर्नवनीलोत्पलदलैर विलम्बितक्षिप्रमेव प्रत्यवापुः प्रतिभेजिरे । अत्र गजानां नदीनां च समनेत्रश्रीविनिमयोक्त्या समपरिवृत्तिरलङ्कारः । समन्यूना धिकानाञ्च यदा विनिमयो भवेत् । साकं समाधिकन्यूनैः परिवृत्ति रसौ मतेति लक्षणात् ॥ ४० ॥

प्रतीति । अन्यदन्तिनम्प्रति प्रत्यन्यदन्ति प्रतिगजाभिमुख मित्यर्थः । लक्षणेनाभिप्रती आभिमुख्ये इत्यव्ययीभावः । चलित न्धावन्तं अत एव निशितेनाङ्कुशेन दूरङ्गाढं यथा तथा भिन्नं यत् निर्याणमपाङ्गदेशः । अपाङ्गदेशो निर्याणमित्यमरः । तस्मान्नि र्यत् निःसरदसृक् यस्य तं महेभं रोद्धुं ग्रहीतुन्निषादी यन्ता परिबृंहते प्रभवतीति परिबृढः प्रभुः । बृहतेर्बृंहेर्वा कर्त्तरि क्त

सेव्योऽपि सानुनयमाकलनाय यन्त्रा
नीतेन वन्यकरिदानकृताधिवासः ।
नाभाजि केवलमभाजि गजेन शाखी
नान्यस्य गन्धमपि मानभृतः सहन्ते ॥ ४२ ॥

प्रत्यये प्रभौ परिवृढइति नकारहकारयोर्लोपः निष्ठातकारस्य ढत्वञ्च निपात्यते अन्यथा ढलोपस्य सर्व्वत्रासिद्धेरिष्टनादिषु रुहतेर्हलादेर्लघोरिति रेफादेशोन स्यात् तस्मादिमनिचि रेफादेशे परिव्रढिमा ततोनञ् समासः । तमपरिव्रढिमानमसामर्थ्य मागात्प्राप । इणोगा लुङीति गादेशः । तथाहि महान् बलवान् आक्रान्तितोबलात्कारात्परस्य वशमेति । सामान्येन विशेष समर्थनरूपोऽर्थान्तरन्यासः ॥ ४१ ॥

सेव्यइति । यन्त्रा निषादिना आकलनाय बन्धनाय सानुनयं ससान्त्वं नीतेन समीपम्प्रापितेन गजेन वन्यगजदानैः कृतोऽधि वासोवासना यस्य सः तद्गन्धीत्यर्थः शाखी वृक्षः । व्रीह्यादित्वा त्त्विनिः । सेव्योऽपि सन्नाभाजि नासेवि । भज सेवायां कर्म्मणि लुङि चिणोलुग्वृद्धिश्च । किन्तु केवलमभाज्यभञ्जीत्यर्थः । भञ्जि आमर्दने भञ्जेश्चिणीति विभाषानलोपः शेषम्पूर्व्ववत् । तथा हि मानभृतोऽहङ्कारिणोऽन्यस्य गन्धमपि न सहन्ते परं किमुतेति भावः । अतोवृक्षभञ्जनं युक्तमेवेत्यर्थः । पूर्व्ववदलङ्कारः ॥ ४२ ॥

अद्रीन्द्रेति अद्रीन्द्रस्य रैवतकस्य कुञ्जेषु चरति यस्तस्य कुञ्ज चरस्य कुञ्जरस्य गण्डकाषेण कपोलकषणेन सङ्क्रान्तं दानपयो मदाम्बु यस्य तस्यातएव सेनागजेन मथितस्य भग्नस्य वनपादपस्य

अद्रीन्द्रकुञ्जचरकुञ्जरगण्डकाष
सङ्क्रान्तदानपयसो वनपादपस्य ।
सेनागजेन मथितस्य निजप्रसूनै
र्म्म्ले यथागतमगामि कुलैरलीनाम् ॥ ४३ ॥
नोच्चैर्यदा तरुतलेषु ममुस्तदानी
माधोरणैरभिहिताः पृथुमूलशाखाः ।
बन्धाय चिच्छिदुरिभास्तरसात्मनैव
नैवात्मनीनमथ वा क्रियते मदान्धैः ॥ ४४ ॥

निजैरात्मीयैः प्रसूनैः पुष्पैः । निजमात्मीयनित्ययोरिति वैजयन्ती । मम्ले म्लानम् । म्लायतेर्भावे लिट् । अलीनां कुलैस्तु यथागतमगामि गतम् । आगतक्रमेणैव गतं न तु म्लानमित्यर्थः । आपद्यात्मीयानात्मीययोर्भेदइति भावः । गमेर्गत्यर्थस्याकर्म्मकत्व विवक्षणाद्भावे लुङ् । इभवनपादपादीनां विशेषणसाम्यादापन्ना यौपम्यप्रतीतिः कथञ्चित्समासोक्तिरूनेया ॥ ४३ ॥

नेति । इभायदा उच्चैरुन्नतेषु तरुतलेषु न ममुर्नावर्त्तन्त तदानीं आधोरणैर्न्नियन्तृभिरभिहिताः इमांश्छिन्धीत्युपदिष्टाः पृथुमूलशाखाः बन्धाय स्वबन्धनायैव तरसा बलेनात्मना स्वय मेव चिच्छिदुः न चैतद्युक्तमिति भावः । यद्वा मूढानां युक्तमेवे त्याह । अथ वेति । अथ वा मदान्धैरात्मनीनमात्मने हितं न क्रियतएव । आत्मन्विश्वजनभोगात्तरपदात् खइति खप्रत्ययः आत्माध्वानौ खेइति प्रकृतिभावान्नस्तद्धितइति टिलोपोन । पूर्ब्बवदर्थान्तरन्यासः ॥ ४४ ॥

उष्णोष्णशीकरसृजः प्रबलोष्मणोऽन्त
रुत्फुल्लनीलनलिनोदरतुल्यभासः।
एकान् विशालशिरसो हरिचन्दनेषु
नागान्बबन्धुरपरान्मनजा निरासुः ॥ ४५ ॥

कण्डूयतः कटभुवं करिणो मदेन
स्कन्धं सुगन्धिमनुलीनवता नगस्य।
स्थूलेन्द्रनीलशकलावलिकोमलेन
कण्ठे गुणत्वमलिना वलयेन भेजे ॥ ४६ ॥

उष्णोष्णेति। मनुजा नरा उष्णोष्णाः उष्णप्रकाराः। प्रकारे गुणवचनस्येति द्विर्वचनं कर्मधारयवत्सुपोलुक्। तान् शीकरान्सृजन्ति मुञ्चन्तीति तथोक्तान्। क्विप्। अन्तः प्रबलोष्मणः प्रवृद्धतापान् उत्फुल्लं विकचं। उत्फुल्लसम्फुल्लयोरुपसङ्ख्यानमित्युपसर्गेऽपि फुलेर्निष्ठात्वलं। तस्य नीलनलिनस्य नीलोत्पलस्योदरेण तुल्यभासः समानकान्तीन् कृष्णवर्णानित्यर्थः विशालशिरसो विपुलमस्तकान् एकान् कतिचिन्नागान् गजानित्यर्थः हरिचन्दनेषु चन्दनविशेषेषु। तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियामित्यमरः। बबन्धुः अपरान्नागानहीनित्यर्थः। दुष्टाश्चाहिगजानागा इत्युभयत्रापि वैजयन्ती। निरासुः निष्कासयामासुः। अस्यतेर्लिट्। अत्रोभयेषामपि नागानां प्रकृतत्वात्केवलप्रकृतश्लेषः ॥ ४५ ॥

कण्डूयतइति। कटभुवङ्गण्डस्थलङ्कण्डूयतः कषतः। कण्ड्वादिभ्योयक् ततः शतप्रत्ययः। कण्डूयतेर्ञिद्धातुप्रकृतित्वादुभय

निर्धूतवीतमपि बालकमुल्ललन्तं
यन्ता क्रमेण परिसान्त्वनतर्ज्जनाभिः ।
शिक्षावशेन शनकैर्वशमानिनाय
शास्त्रं हि निश्चितधियां क न सिद्धिमेति ॥४७॥

परित्वं । करिणोमदेन सुगन्धिं शोभनगन्धं । गन्धस्येत्वे तदेकान्त ग्रहणं नाद्रियन्ते कवयः । नगस्य वृक्षस्य स्कन्धं प्रकाण्डं अनुलीनवता तत्र संश्लिष्टेनेत्यर्थः । लीयतेर्निष्ठेति क्तवतुप्रत्ययः ल्वादिभ्य इति निष्ठानत्वं । स्थूलानामिन्द्रनीलशकलानां आवलिवत्कोमलेन मनोहरेणालिनां वलयेन कण्ठेगुणत्वं कण्ठवलयत्वं । मूर्द्धमस्तकात् स्वाङ्गादकामइत्यलुक् । भेजे प्राप्तम् । कर्म्मणि लिट् । अत्रालि वलये इन्द्रनीलमयकण्ठभूषणत्वारोपाद्रूपकालङ्कारः ॥ ४६ ॥

निर्धूतेति । यन्ता निषादी निर्धूतं निरस्तं वीतं पादघाता ङ्कुशवारणं यस्मिन् कर्म्मणि तद्यथा तथा उल्ललन्तमुत्प्लवमानमपि । पादकर्म्म यतं प्रोक्तं यतमङ्कुशवारणं । उभयं वीतमाख्यातमिति हलायुधः । बालकम्पञ्चवर्षगजम् । पञ्चवर्षोगजोबालः पोतस्तु दशवार्षिकइति वैजयन्ती । शिक्षावशेन स्वकीयेन गजशास्त्रा भ्यासबलेन क्रमेण परिपाट्या परिसान्त्वनान्युपलालनानि तर्ज्जना भर्त्सनाश्च ताभिः शनैरेव शनकैः । अव्ययसर्व्वनाम्नामकच् प्राक् टेरिति स्वार्थेऽकच् प्रत्ययः । शमं शान्तिमानिनाय । तथा हि सुष्ठु निश्चितार्था धीरेषान्तेषाम्पुंसामित्यर्थः शास्त्रं क सिद्धिर्नैति सम्यस्तं शास्त्रं सर्व्वत्र फलतीत्यर्थः । विभक्तधनाभ्रातरोविभक्ताइतिवद्वि निश्चितार्था धीर्निश्चितेत्युपचर्य्यते अतएवात्र गम्यमानार्थत्वाद न्तरपदस्याप्रयोगलक्षणोलोपइत्याहुः ॥ ४७ ॥

स्तम्भं महान्तमुचितं सहसा मुमोच
दानं ददावतितरां सरसाग्रहस्तः ।
बद्धापराणि परितो निगडान्यलावी
त्स्वातन्त्र्यमुज्ज्वलमवाप करेणुराजः ॥ ४८ ॥

स्तम्भमिति । करेणुस्वामी राजा च करेणुराजो गजश्रेष्ठः करेणूनां राजेति गजपतिः राजा च ध्वन्यते । उभयत्रापि राजाहः सखिभ्यइति टच् । उज्ज्वलमुच्छृङ्खलं स्वातन्त्र्यं स्वेच्छाचारित्व मवाप । तदेवाह उचितञ्चिरपरिचितं महान्तं स्तम्भमालानं जाड्यञ्च सहसा मुमोच । स्तम्भः स्थूणाजडत्वयोरिति विश्वः । सरसः आर्द्रोऽग्रहस्तः पुष्करम्पाणिश्च यस्य स सन् दानम्मदन्दीयत इति दानं धनञ्चातितरामतिमात्रं । अव्ययादामुप्रत्ययः । ददौ ववर्षेत्यर्थः । परितोबद्धापराणि बद्धपश्चिमपादानि बद्धान्यानि च । अपरः पश्चिमः पादइति गजप्रकरणे वैजयन्ती । निगडानि शृङ्खलानि । अथ शृङ्खले अन्दुकोनिगडोऽस्त्रियामित्यमरः । अलावीत् लुनाति स्म । लुञ् छेदने लुङ् अस्तिसिचोऽपृक्ते इतीट् इटईटीति सलोपः । अत्र करेणुराजपदसाधर्म्यध्वनिः विशेष्य स्यापि श्लिष्टत्वान्न श्लेषइत्युक्तम् ॥ ४८ ॥

जज्ञइति । गम्भीरमन्तं वेत्तीति गम्भीरवेदी । त्वग्भेदा च्छोणितस्रावान्मांसस्य च्यवनादपि । आत्मानं योन जानाति तस्य गम्भीरवेदितेति राजपुत्रीये । चिरकालेन योवेत्ति शिक्षा म्परिचितामपि । गम्भीरवेदी विज्ञेयः स गजोगजवेदिभिरिति मृगचर्मीये । तस्मिन् गम्भीरवेदिनि करीन्द्रे संरब्धः कुपितः

जज्ञे जनैर्मुकुलिताक्षमनाददाने
संरब्धहस्तिपकनिष्ठुरचोदनाभिः ।
गम्भीरवेदिनि पुरः कवलं करीन्द्रे
मन्दोऽपि नाम न महानवगृह्य साध्यः॥४९॥

क्षिप्तं पुरो न जगृहे मुहुरिक्षुकाण्डं
नापेक्षते स्म निकटोपगताङ्करेणुम् ।
सस्मार वारणपतिः परिमीलिताक्ष
मिच्छाविहारवनवासमहोत्सवानाम्॥ ५० ॥

हस्तिनं पातीति हस्तिपः सएव] हस्तिपकोनिषादी । आधोरणा हस्तिपकाहस्त्यारोहानिषादिनइत्यमरः । तस्य निष्ठुराभिश्चोदनाभि स्तर्जनाभिरपि मुकुलिताक्षं निमीलितनेत्रं यथा तथा पुरः कवलं ग्रासं अनाददाने सति । मन्दोमूढोऽपि । मूढाल्पापटुनिर्भाग्या इत्यमरः । गजभेदोऽपि । भद्रोमन्दोमृगश्चैव विज्ञेयास्त्रिविधागजा इति । महान् बलाधिकोऽवगृह्य निगृह्य साध्योन नाम न खल्विति जनैर्जज्ञे ज्ञातम् । जानातेः कर्मणि लिट् । मन्दोऽपीत्यादिवाक्यार्थः कर्म ॥ ४९ ॥

क्षिप्तमिति । वारणपतिः करिवरोमुहुः पुरः क्षिप्तमग्रे न्यस्त मिक्षुकाण्डमिक्षुदण्डं न जगृहे न स्वीचकार निकटोपगतां समीप स्थां करेणुङ्करिणीञ्च नापेक्षते स्म नेच्छति स्म । लट् स्मइति भूतार्थे लट् । किन्तु परिमीलिताक्षं यथा तथेति स्मृत्यनुभावः इच्छया विहारायेषु ते वनवासाएव महोत्सवास्तेषां सस्मार तानेव

स

दुःखेन भोजयितुमाशयिता शशाक
तुङ्गाग्रकायमनमन्तमनादरेण ।
उत्क्षिप्तहस्ततलदत्तविधानपिण्ड
स्नेहस्नुतिस्नपितबाहुरिभाधिराजम् ॥ ५१ ॥

चिन्तयामासेत्यर्थः । अधीगर्थदयेशाङ्कर्मणीति शेषत्वविवक्षायां षष्ठी ।
न स्वच्छन्दचारिणां निर्बन्धे भोगेषु मनः प्रवर्त्ततइति भावः ।
वाक्यार्थहेतुकङ्काव्यलिङ्गमलङ्कारः ॥ ५० ॥

दुःखेनेति । उत्क्षिप्ते उद्यते हस्ततले दत्तोनिहितोयः
. विधानस्य गजग्रासस्य पिण्डः । विधानं हस्तिकवलइति वैजयन्ती ।
तस्य स्नेहस्नुत्या घृतादिनिःस्यन्देन स्नपितबाहुराप्लुतभुजः ।
स्नातेर्ण्यन्तात्कर्मणि क्तः अर्त्तिह्रीत्यादिना पुगागमः मित्त्वाद्ध्रस्वः ।
आशयिता भोजयिता । अशेर्ण्यन्तात्तृच् । तुङ्गाग्रकायं स्वभावत
एवोन्नतोर्द्धकायं अनादरेणानमन्तं कवलग्रहणाय नतिमकुर्वाण
मिभाधिराजम् । गतिबुद्धीत्यादिना अणिकर्त्तुर्णौ कर्म्मत्वम् ।
दुःखेन कृच्छ्रेण भोजयितुं शशाक स्वभावोन्नतानान्तचाप्यहङ्कार
ग्रस्तानां कोनमयितेति भावः ॥ ५१ ॥

शुक्लेति । शुक्लांशुकैः शुक्लपटैः उपरचितानि उप
कल्पितानि अन्यत्र तु अल्पाः अंशवोऽशुकाः सूक्ष्मास्तेजोऽवयवाः ।
अल्पाद्यल्पार्थे कन्प्रत्ययः । शुक्लैस्तैरुपचितानि व्याप्तानि रश्मिभिः
प्रग्रहः किरणैश्च विततानि विस्तृतानि । किरणप्रग्रहौ रश्मी
इत्यमरः । चन्द्रस्येवाकृतिर्येषान्तानि चन्द्राकृतीनि चन्द्रमण्डलनिभा
नीत्यर्थः नराधिपानां वेश्मानि दूष्याणि ।नरन्तराभिर्नीरन्ध्राभि

शुक्लांशुकोपरचितानि निरन्तराभि
र्वेश्मानि रश्मिविततानि नराधिपानाम् ।
चन्द्राकृतीनि गजमण्डलिकाभिरुच्चै
र्नीलाभ्रपङ्क्तिपरिवेशमिवाधिजग्मुः ॥ ५२ ॥

गत्वूनमार्ग्गगतयोऽपि गतोरुमार्ग्गाः
स्वैरं समाचकृषिरे भुवि वेल्लनाय ।
दर्प्पोदयोल्लसितफेनजलानुसार
संलक्ष्यपल्ययनवर्ध्रपदास्तुरङ्गाः ॥ ५३ ॥

उच्चैर्गजमण्डलिकाभिर्गजपरिधिभिः । स्वार्थे कप्रत्ययः कात्पूर्व्व स्येकारः। नीलाभ्रपङ्क्तिभिः परिवेशम्परिधिम्परिवेष्टनमिति यावत्। परिवेशस्तु परिधिरित्यमरः। अधिजग्मुरिवेत्युत्प्रेक्षा ॥ ५२ ॥

गत्वूनेति । गत्वूनाविशिष्टगमनहीनामार्ग्गगतयोऽध्वगमनानि येषान्ते तथापि गतोरुमार्ग्गाः प्रस्थितदूराध्वानइति विरोधः। अपि विरोधे गत्वूना मार्ग्गा मृगसम्बन्धिनी गतिर्येषान्तइति विरोधपरिहारः । अतएव विरोधाभासोऽलङ्कारः । दर्प्पस्य तेजसोऽन्तःसार स्योदयेनौत्कण्ठ्येनोल्लसितस्योद्धतस्य फेनजलस्य फेनीभूतोद्धृतस्वेदो दकस्यानुसारेण संलक्ष्याणि पल्ययनवर्ध्राणामासनबन्धचर्म्मवरत्राणां पदानि तन्नोदबान्निम्नीभूतस्थलानि येषान्ते तथाक्ताः । तुरङ्गाः भुवि वेल्लनायाङ्गपरिवर्त्तनाय स्वैरं मन्दं समाचकृषिरे समाकृष्टाः अध्वश्रमापनोदनार्थमिति भावः । वर्द्धते दृढबन्धनाद्दीर्घीभव तीति वर्ध्रं वृद्धिवपिभ्यां रन्निर्त्यौणादिके रन्प्रत्यये लघपधगणो

आजिघ्रति प्रणतमूर्द्धनि वाह्लिजेऽश्वे
तस्याङ्गसङ्गमसुखानुभवोत्सुकायाः ।
नासाविरोकपवनोल्लसितं तनीयो
रोमाञ्चतामिव जगाम रजः पृथिव्याः ॥५४॥

रपरः । वर्ध्रं चपुवरत्रयोरिति विश्वः । अमरस्तु नध्री वर्ध्री वरत्रा स्यादित्याह । तदा ष्ट्रन्नित्यौणादिके ष्ट्रन्प्रत्यये पूर्ववत् गुणोरपरः प्रत्ययतकारस्य झषस्तथोर्धोऽध इति धत्वे षित्वात् स्त्री लिङ्गे ङीष् ॥ ५३ ॥

आजिघ्रतीति । वाह्लिरश्वयोनिर्देशविशेषः तज्जे वाह्लिजेऽश्वे वाह्लिदेश्ये इति पाठे विशेष्याप्रयोगेगम्यमानत्वादित्युक्तं । गर्गादिभ्योयञिति भवार्थे यञ्प्रत्ययः । तदन्तविधिस्तु मृग्यः । प्रणतमूर्द्धनि नम्रशिरसि कृतप्रणामे च आजिघ्रति गन्धं गृह्णाति चुम्बति च सति स्वभावात्कामाच्चेति भावः । नासाविरोकं नासारन्ध्रन्तस्य पवनोनिश्वासः तेनोल्लसितमुद्भूतन्तनीयस्तनुतरं रजस्तस्याश्वस्याङ्गसङ्गमेन वेल्लनप्रयुक्तेन यत्सुखन्तस्यानुभवे उत्सुकायाःउत्कण्ठितायाः पृथिव्याः रोमाञ्चताञ्जगामेवेत्युत्प्रेक्षा । सा च भूतुरङ्गमयोः प्रतीयमानचेतननायकाद्यभेदाध्यवसायादित्यवधेयम् । विरोचतेऽनेनेति विरोकम् । घञ्प्रत्ययः चजोः कु घिण्यतोरिति कुत्वं लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति नपुंसकत्वाविरोधः । अतएव च्छिद्रन्निर्व्यथनं रोकमित्यमरः । रोकोरश्मौ बिले न पुमिति वैजयन्ती । रोकोदीप्तौ बिले रोकमिति विश्वः । ये तु केनाप्यभिप्रायेण विरेकपवनेति पठन्ति तेषाम्परोत्सर्गैकजीविनामिति

हेम्नः स्थलीषु परितः परिवृत्य वाजी
धुन्वन्वपुः प्रविततायतकेशपङ्क्तिः ।
ज्वालाकणारुणरुचा निकरेण रेणोः
शेषेण तेजस इवोल्लसता रराज ॥ ५५ ॥

तद्धपानीयपवनप्रतीतेरश्लीलाख्यो दोषः अश्लीलन्तद्‌मङ्गल्यजुगुप्सा व्रीडधीकरमिति लक्षणात् ॥ ५४ ॥

हेम्नइति । हेम्नः स्थलीषु स्वर्णभूमिषु । जानपदेत्यादिना अकृत्रिमार्थे ङीष्प्रत्ययः । परितः परिवृत्य परिवृत्तिं कृत्वा वपुर्धुन्वन् धूलिनिर्गमाय कम्पयन् अतएव प्रवितता विश्लिष्टाश्चायता च केशपङ्क्तिः रोमसङ्घातो यस्य स वाजी ज्वालाकणाः स्फुलिङ्गाः तद्वद्‌रुणरुचा रक्तवर्णेन रेणोर्निकरेण उल्लसता अत्युत्कटतया वहिरुद्गच्छता तेजसोन्तःसारस्य दर्पस्य शेषेणातिरेकेणेव रराज । उत्प्रेक्षालङ्कारः ॥ ५५ ॥

दन्तालिकेति । पुरुषकोऽश्वानां स्थानकभेदः । तदुक्तम् पश्चिमेनाग्रपादेन भुवि स्थित्वाग्रपादयोः । ऊर्ध्वप्रेरणया स्थानमश्वानाम्पुरुषः स्मृतइति । पुरुषएव पुरुषकः तेन पुरुषकेण स्थानकेनोन्नमितऊर्द्ध्वावस्थितोऽग्रकायः पूर्व्वकायो यस्य स तथोक्तः अतएवोदयशैलस्य मूर्द्ध्नामस्तकादर्द्धमुदितोऽर्द्धोदितः हरिः सूर्य्य इव स्थितइत्यर्थः अर्द्धोदितविशेषणात् उच्चैरुन्नतः श्रीवृक्षएव श्रीवृक्षकः आवर्त्तविशेषस्तद्वानश्वः श्रीवृक्षकी । वक्षोभवावर्त्तचतुष्टयस्य कण्ठे भवेद्यस्य च रोचमानः । श्रीवृक्षकी नाम हयः स भर्त्तुः श्रीपुत्रपौत्रादिविवृद्धये स्यादिति लक्षणात् । श्रीवृक्षकी

दन्तालिकाधरणनिश्चलपाणियुग्म-
मर्द्धोत्थितो हरिरिवोद्धतपूर्वमूर्द्धः ।
लोकेन नाक्रमत वल्लभपालमुच्चैः
श्रीवृक्षकी पुरुषकोनमितायकायः ॥ ५६ ॥

दन्तालि चेद्रोमावर्त्तो मुखे ऽपि चेति तु वैजयन्ती । दन्तालिका मुख-रज्जुः । मुखरज्जुश्च दन्ताली राशिका रचणीति चेति वैजयन्ती । तस्याधरणे ग्रहणे निश्चलं स्थिरम्पाणियुग्मं यस्य तम्पाणिभ्यां दृढं गृहीतोभयरज्जुमित्यर्थः । वल्लभपालमुत्तमाश्वपालम् । वल्लभो दयितेऽध्यक्षे कुलीनेऽश्वेऽपि वल्लभ इति विश्वः । लोकेन नाक्रमत वल्गाग्रहणदार्ढ्यात् लोकेनापि अभिभवितुन्न शक्तोऽभू-दित्यर्थः । इह स्पर्शयितुं चणमचमताङ्गना न दृष्टदुःखमिह किञ्चिदित्यादिवदप्यर्थस्य सामर्थ्यलभ्यत्वादपेरप्रयोगः । अन्यथा लोकेन नाक्रमत किन्तु भूय इति व्याख्याने निश्चलपाणियुग्मत्वादि विशेषणावगतवाहकौशल्यप्रकाशनतात्पर्यभङ्गप्रसङ्गात् । करणे च लोकेत्यादिना विकल्पात्तृतीया अनुपसर्गाद्वेति विकल्पादात्मने-पदम् । उपमालङ्कारः ॥ ५६ ॥

रेज इति । स्नपनेनाभिषिञ्चनेन सान्द्रतरार्द्रमूर्त्तिः अनिमिष-दृष्टिभिः विस्मयादनिमिषाचैर्जनैर्देवैरिव तादृग्भिरीक्ष्यमाणः श्रियः शोभायाः देव्याश्च सन्निधानेन रमणीयतरः । तत्र सन्नि-हिता लक्ष्मीः सन्ति यत्नोत्तमाहयादित्यागमादिति भावः । उच्चै-रुन्नतोऽश्वो जलनिधेः समुद्राज्जातएव जातमात्रः सद्योजातइत्यर्थः । अन्यथोक्तसाधर्म्यासम्भवादिति भावः । मात्रङ्कात्स्न्र्येऽवधारण

रेजे जनैः स्नपनसान्द्रतरार्द्रमूर्त्ति
र्दैवैरिवानिमिषदृष्टिभिरीक्ष्यमाणः ।
श्रीसन्निधानरमणीयतरोऽश्व उच्चै
रुच्चैःश्रवाजलनिधेरिव जातमात्रः ॥ ५७ ॥

अश्रावि भूमिपतिभिः क्षणवीतनिद्रै
रश्वः पुरोहरितकं मुदमादधानः ।
ग्रीवाग्रलोलकलकिङ्किणिकानिनाद
मिश्रं दधद्दशनचुर्चुरशब्दमश्वः ॥ ५८ ॥

इत्यमरः । उच्चैरुन्नतं श्रवः कीर्त्तिरुन्नते श्रवसी कर्णौ वा यस्य सः उच्चैःश्रवाः शक्राश्व इव रेजे । उपमालङ्कारः ॥ ५७ ॥

अश्रावीति । पुरोऽग्रे हरितकं हरिततृणमश्नन् अतएव ग्रीवाग्रे लोलाश्चलाः कलाः किङ्किणिकाः क्षुद्रघण्टिकाः तासां निनादेन मिश्रन्दशनानान्दन्तानाञ्चुर्चुरशब्दञ्चुर्चुरध्वनिन्दधत् अतएव मुदमादधानउत्पादयन्नश्वः । जातावेकवचनं । क्षणेन वीतनिद्रैः । अल्पनिद्रोऽल्पभुग्वाग्मी सितभाव्यनसूयकइति सौभाग्य लक्षणादिति भावः । भूमिपतिभिरश्रावि अतः अश्वस्य शब्दोऽश्रावीत्यर्थः । वीणाः श्रूयन्ते भेर्यः श्रूयन्तइत्यादिवत् शब्दधर्म्मः शब्दिवदुपचर्य्यते । स्वभावोक्तिरलङ्कारः ॥ ५८ ॥

उत्खायेति । दर्पाच्चलितेनोत्ललितेन अतएव रज्ज्वा पाशेन सह कीलं शङ्कुं । शङ्कावपि द्वयोः कीलेत्यमरः । उत्खाय उत्पाट्य दूरं विद्रुतन्धावन्तं अन्यमश्वं अश्वेत्यनुद्रवता वडवेति भ्रान्त्यानुधावता ग्रयत्नपरैर्ग्रहीतुमयतमानैरपि मानवैर्मनुष्यै

उत्खाय दर्प्पचलितेन सहैव रज्ज्वा
कीलं प्रयत्नपरमानवदुर्ग्रहेण ।
आकुल्यकारि कटकस्तुरगेण तूर्ण
मश्वेति विद्रुतमनुद्रवताश्वमन्यम् ॥ ५९ ॥

दुर्ग्रहेण तुरङ्गेण कटकः शिविरमाकुल्यकारि आकुलीकृतः । आकुलशब्दादभूततद्भावे च्विः अस्य चावितीकारः । करोतेः कर्माणि लुङि चिणोलुक् ॥ ५९ ॥

अव्याकुलमिति । वल्गा मुखरज्जुः सा चोत्क्षिप्तादिभेदेन चतुर्द्दशविधा । तदुक्तं हयलीलावत्याम् । उत्क्षिप्ता शिथिला तथोत्तरवती मन्दा च वैहायसी विच्छिन्नैककरार्द्धकन्धरसमोत्कीर्णा विभक्ता तथा । अत्युत्क्षिप्ततलोद्धृते खलु तथा व्यागूढगोकर्णिके वाहानाङ्कथिताश्चतुर्द्दशविधा वल्गाप्रभेदा अमीति । तल्लक्षणानि तु तत्रैव द्रष्टव्यानि विस्तरभयान्न लिख्यन्ते । तस्या विभागो विविच्य प्रयोगः तत्र कुशलो वल्गाविभागकुशल इति षड्विधप्रेरणाभिज्ञ इत्यर्थः वल्गाग्रहणस्य रागाद्युपलक्षणत्वात् । यथाह भोजः । वाहनं प्रतिवाहानां षड्विधप्रेरणं विदुः । रागावल्गाकषापार्ष्णिप्रतोदस्वभेदतदिति । कश्चित् कश्चन वाहकः अव्याकुलं समग्रमचलमिति यावत् प्रकर्षेण कृतमकृतं सज्जितमित्यर्थः । मखे मुखकर्माणि सिद्धं सिद्धिमन्तमश्वं चतुष्काख्ये गतिविशेषे मुखे संस्थानविशेषादि विशेषणविशिष्टमश्वमित्यर्थः । तदुक्तं रेवतोत्तरे । स्वक्काधरोष्ठसितफेनलवाभिराम फूत्कारवायुपदमुन्नतकन्धराग्रं । नीलोपकुञ्चितमुखं नवलोहसाम्यमश्वं चतुष्कसमये मुखसिद्धमाहुः ।

अव्याकुलं प्रकृतमुत्तरधेयकर्म्मा
धाराः प्रसाधयितुमव्यतिकीर्णरूपाः ।
सिद्धं मुखे नवसु वीथिषु कश्चिदश्वं
वल्गाविभागकुशलो गमयाम्बभूव ॥ ६० ॥

उत्तरधेयकर्म्मा युद्धाद्युत्तरकाले धेयं विधेयम्प्रयोज्यं यत्कर्म क्रिया तद्रूपाइत्यर्थः । अव्यतिकीर्णरूपाअसंकीर्णरूपाधारागतिभेदाः । अश्वानान्तु गतिर्धारा विभिन्ना सा च पञ्चधा । आस्कन्दितन्धौरितकं रेचितं वल्गितं प्लुतमिति वैजयन्ती । गतयोऽमूः पञ्च धाराइत्य मरश्च । अश्वशास्त्रे तु संज्ञान्तरेणोक्ताः । गतिः पुला चतुष्का च तद्वन्मध्यजवा परा । पूर्णवेगा तथा चान्या पञ्च धाराः प्रकीर्त्तिताः । एकैका त्रिविधा धारा हयशिक्षाविधौ मता । लघ्वी मध्या तथा दीर्घा ज्ञात्वैतायोजयेत् क्रमादिति । तथा च पञ्चदशविभेदा भवन्ति । ताः पञ्च धाराः प्रसाधयितुम्परिचेतुं नवसु वीथिषु संचारस्थानेषु गमयाम्बभूव । वीथयोनवाश्वानां सर्व्वत्र धारा दर्व्वार्थाः परिमिताः प्रचारदेशाः ताश्च तिस्रइत्येके नवेत्यन्ये तत्रोत्तरपक्षमाश्रित्योक्तं कविना नवस्विति । यथाह भोजः । वीथ्यस्तिस्रोऽथ धाराणां लघ्वी मध्योत्तमाः क्रमात् । तासां स्या द्धनुषां मानमशीतिर्न्नवतिः शतम् । श्रेष्ठमध्योत्तमानान्तु वाजिनां वीथिकाः स्मृताः । नवानां कथितावीथ्योदुष्टानां क्रमणक्रमे । अन्येषामपि सर्व्वत्र गतिदार्व्वार्थमीरिताः । समोन्नता सा विषमाम्बुकीर्णा शुद्धा नताग्रा तृणवीरुदाढ्या । स्थाणुप्रकीर्णोपल सम्प्रकीर्णा पार्श्वोन्नताख्या नवधेति वीथ्यः । सर्व्ववीथिषु योवाजी

मुक्तास्तृणानि परितः कटकं चरन्त
स्त्रुट्यद्वितानतनिकाव्यतिषङ्गभाजः।
सद्यः सरोषपरिचारकवार्य्यमाणा
दामाञ्चलस्खलितलोलपदं तुरङ्गाः ॥६१॥

दृढशिचासमन्वितः। तेन राजा रणे नित्यं मृगयायां मुदं व्रजेदिति। अन्ये तु घरसाल्यादयोगतिविशेषावीथ्यइत्याहुः। उरसाली वरसाली पृथुलोमध्यनामकः। आलीढः शोभनैरङ्गैः प्रत्यालीढस्तथापरः। उपधेनवउक्तं च पादचाली च सर्व्वगः। निर्दिष्टा वीथयस्त्वेताइति ॥ ६० ॥

मुक्ताइति। मुक्ताविहारार्थमुत्सृष्टाश्चतएव कटकं शिबिरम्परितः। अभितः परितइत्यादिना द्वितीया। तृणानि चरन्तोभक्षयन्तः त्रुट्यन्तीषु छिन्नासु वितानतनिकासु पटमण्डपरज्जुषु व्यतिषङ्गं सङ्गभजन्तीति तथोक्ताः। अतएव सरोषैः परिचारकैः किङ्करै र्वार्य्यमाणाः अपसार्य्यमाणाः तुरगादामाञ्चलानि पादपाशाः। दामाञ्चलम्पादपाशइति वैजयन्ती। दुष्यवरचाबन्धनशङ्कवइति केचित्। तेषु स्खलितेन लोलानि पदानि यस्मिन् कर्म्मणि तद्यथा तथा सस्त्रुरपसस्त्रुः ॥ ६१ ॥

उत्तीर्णेति। उत्तीर्णभारमवरोपितावपनं अतएव लघुः तेन तथोक्तेन तथाप्यलघुना उलपानां वल्वजतृणानां ओघेन यत्सौहित्यम्पूर्त्तिः। पर्याप्तमुपसम्पन्नम्पूर्त्तिः सौहित्यमुच्यतइति हलायुधः। तेन निस्सहतरेणात्यन्तमसहतरेण वाह्यभारावतारेऽप्यन्तरगुरुभोजनाद्गुरुभवतेत्यर्थः। सहेः निःपूर्व्वात् पचाद्यजन्ता

उत्तीर्णभारलघुनाप्यलघूलपाघ
सौहित्यनिःसहतरेण तरोरधस्तात् ।
रोमन्थमन्थरचलद्गुरुसास्नमासा
ञ्चक्रे निमीलदलसेक्षणमौक्षकेण ॥ ६२ ॥

मृत्पिण्डशेखरितकोटिभिरर्द्धचन्द्र
शृङ्गैः शिखाग्रगतलक्ष्ममलं हसद्भिः ।
उच्छृङ्गितान्यवृषभाः सरितां नदन्तो
रोधांसि धीरमवचस्करिरे महोक्षाः ॥ ६३ ॥

न्तरप् प्रत्ययः । उलपावल्वजाः प्रोक्तादृति विश्वः । औक्षकेण उक्ष्णां समूहेन । गोत्रोक्षेत्यादिना वुञ् प्रत्ययः । तरोरधस्तात्तरुतले रोमन्थः पशूनाञ्चर्व्वितचर्व्वणन्तेन मन्थरमन्दञ्चलन्त्योगुर्व्यः सास्नागलकम्बलानि यस्मिन् कर्म्मणि तद्यथा तथा । सास्ना तु गलकम्बलइत्यमरः । किञ्च निमीलन्ति सुखान्मुकुलीभवन्ति अलसानि ईक्षणानि यस्मिन् कर्म्मणि तत् यथा तथा आसाञ्चक्रे आसितम् । आस उपवेशने भावे लिट् । दयायासश्चेत्याम्प्रत्ययः । कृञ्चानुप्रयुज्यते लिटीति कृञोऽनुप्रयोगः । इतः प्रभृत्यांचतुष्टयात् स्वभावोक्तिः ॥ ६२ ॥

मृत्पिण्डेति । मृत्पिण्डैर्वप्रक्रीडालग्नैर्मृत्खण्डैः शेखरिताः सञ्जातशेखराः कोटयोऽग्राणि येषान्तैरतएव शिखाग्रगतमुभयकोट्यन्तर्गतं लक्ष्मैव मलं यस्य स एवम्भूतं मेतमर्द्धचन्द्रं हसद्भिरित्यतिशयोक्तिभेदइत्युक्तम् । अभूतोपमेति मतान्तारम् । शृङ्गैर्विषाणैरुच्छृङ्गाउत्पतितशृङ्गाः कृताउच्छृङ्गिताः अन्यवृषभाः प्रति

मेदस्विनः सरभसोपगतानभीकान्
भङ्क्त्वा पराननडुहो मुहुराहवेन ।
ऊर्ज्जस्वलेन सुरभीरनुनिःसपत्नं
जग्मे जयोद्धुरविशालविषाणमुक्ष्णा ॥ ६४ ॥

वृषभायैस्ते अतएव धीरङ्गम्भीरं नदन्तोगर्जन्तः महान्तउक्षाणो महोक्षाः । अचतुरेत्यादिना निपातात्साधुः । सरितां रोधांसि अवचस्करिरे आलिलिखुः दर्पाद्रुरुजुरित्यर्थः । अवपूर्व्वात्किरतेः कर्त्तरि लिट् किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्य मित्यात्मनेपदम् ऋच्छत्यृतामिति गुणः अवाच्चतुष्पाच्छकुनिष्वा लेखने इति सुडागमः ॥ ६३ ॥

मेदस्विनइति । ऊर्ज्जोबलमस्यास्तीति तेन ऊर्ज्जस्वलेन बलिना । ज्योत्स्नातमिस्रेत्यादिना निपातः । उक्ष्णा वृषभेण मेदस्विनो मांसलान् । अस्मायामेधास्रजोविनिः । अतएव सरभसं सत्वर मपगतान् अभिकामयन्तइत्यभीकान् कामुकान् । कम्रः कामयिता भीकइत्यमरः । अनुकामिकाभीकः कमितेति निपातः । परान नडुहोबलीवर्दान् मुहुराहवेन युद्धेन भङ्क्त्वा निर्जित्य जयेनोद्धुर निर्भरे । ऋक्पूरित्यादिना समासान्तः । विशाले च विषाणे यस्मिन् कर्म्मणि तद्यथा तथा निःसपत्नमप्रतिपक्षं सुरभीरनु गवां पृष्ठतः । कर्म्मप्रवचनीययुक्ते द्वितीया । जग्मे गतम् । भाव लिट् ॥ ६४ ॥

विम्राणमिति । आयतिमतीं दैर्घ्यवतीं न च वृथा दैर्घ्यमि त्याह । अवृथेति । उच्चैस्तरपल्लवग्रहणात्सफलामित्यर्थः । गिरे।

बिभ्राणमायतिमतीमवृथा शिरोधिं
प्रत्यग्रतामतिरसामधिकं दधन्ति ।
लोलौष्ठमौष्ट्रकमुदग्रमुखं तरूणा
मभ्रंलिहानि लिलिहे नवपल्लवानि ॥ ६५ ॥

सार्द्धं कथञ्चिदुचितैः पिचुमर्द्दपत्रै
रास्यान्तरालगतमाम्रदलं म्रदीयः ।
दासेरकः सपदि संवलितं निषादै
र्विप्रं पुरा पतगराडिव निर्ज्जगार ॥ ६६ ॥

धीयतेऽस्यामिति शिरोधिं ग्रीवां । शिरोधिः कन्धरेत्यपीत्यमरः ।
कर्म्मण्यधिकरणे चेति किप्रत्ययः । बिभ्राणन्दधानं उदग्रमुखं
पल्लवग्रहणार्थमूर्द्ध्वोत्क्षिप्ततुण्डमौष्ट्रकमुष्ट्रसमूहः । गोत्रो चेत्यादिना
वुञ् । अतिशयितोरसः स्वादोयस्यान्तामतिरसाम्प्रत्यग्रतामभि
नवत्वं दधन्ति दधति । वा नपुंसकस्येति वैकल्पिकोनुमागमः ।
अभ्रं लिहन्तीत्यभ्रंलिहान्युच्चतराणि । वहाभ्रे लिह इति खश्
प्रत्ययः अरुर्द्विषदित्यादिना मुमागमः । तरूणां नवपल्लवानि ।
पल्लवोऽस्त्री किसलयमित्यमरः । लोलौष्ठं यथा तथा ओत्वोष्ठयोः
समासे वेति पररूपं वक्तव्यम् । लिलिहे आस्वादयामास जघा
सेत्यर्थः ॥ ६५ ॥

सार्द्धमिति । उचितैरभ्यस्तः । अभ्यस्तेऽप्युचितं न्याय्यमिति
यादवः । पिचुमर्द्दपत्रैर्निम्बदलैः सार्द्धम् । पिचुमर्द्दस्य निम्ब
इत्यमरः । कथञ्चित्प्रमादादास्यान्तरालगतं मुखान्तर्गतं म्रदीयो

स्पष्टं वहिः स्थितवतेऽपि निवेदयन्त
श्चेष्टाविशेषमनुजीविजनाय राज्ञां।
वैतालिकाः स्फुटपदप्रकटार्थमुच्चै
र्भोगावलीः कलगिरोऽवसरेषु पेठुः ॥ ६७॥

उन्नम्रताम्रपटमण्डपमण्डितन्त
दानीलनागकुलसङ्कुलमाबभासे।
सन्ध्यांशुभिन्नघनकर्वुरितान्तरीक्ष
लक्ष्मीविडम्बि शिविरं शिवकीर्त्तनस्य॥ ६८॥

मृदुतरमाम्रदलसूतपल्लवं दासेरकः उष्ट्रः पुरा निषादैः म्लेच्छैः संवलितं विप्रम्पतगराट् गरुत्मानिव निर्ज्जगार उद्गीर्णवान्। पुरा किल कुतश्चित्कारणात् म्लेच्छभक्षणे तैः सहान्तः प्रविश्य गलन्दहन्तं विप्रङ्गरुड उज्जगारेति पौराणिकी कथाचानुसन्धेया॥ ६६॥

स्पष्टमिति। वहिःस्थितवतेऽपि अनुजीविजनाय राज्ञोऽवसरकाङ्क्षिण इति भावः। राज्ञां चेष्टाविशेषन्तत्कालोचितचरित्रविशेषं स्पष्टं निवेदयन्तः तद्द्योतकप्रवन्धपाठैरिति भावः। कलगिरो मधुरवाचोवैतालिकामङ्गलपाठकाः अवसरेषु तद्वेलासु स्फुटैः प्रसिद्धैः पदैः प्रकटः प्रकाशोऽर्थोऽभिधेयं यस्मिन् कर्म्मणि तद्यथा तथा उच्चैः भोगावलीः प्रवन्धान् पेठुः पठन्ति स्म। अतएकहल्मध्येनादेशादेर्लिटीत्येत्वाभ्यासलोपौ॥ ६७॥

उन्नम्रेति। उन्नम्रैरुन्नतैस्ताम्रैः धातुरक्तैः पटमण्डपैर्दूष्यैर्मण्डितं आसमन्तान्नीलैर्नागकुलैर्गजसङ्घैः सङ्कुलं अतएव सन्ध्यांशुभिन्नैः सन्ध्यारागसम्भिन्नैर्घनैर्मेघैः कर्वुरितस्य चित्रीकृतस्यान्तरीक्षस्य

धरस्योद्धर्त्तासि त्वमिति ननु सर्व्वत्र जगति
प्रतीतस्तत्किं मामतिभरमधः प्रापिपयिषुः ।
उपालब्धेवोच्चैर्गिरिपतिरिति श्रीपतिमसौ
बलाक्रान्तः क्रीडद्द्विरदमथितोर्वीरुहरवैः ॥६९

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
पञ्चमः सर्गः ॥ ५ ॥

लक्ष्मीं विडम्बयत्यनुकरोतीति तत्तथोक्तं शिवकीर्त्तनस्य मङ्गल कीर्त्तेः कृष्णस्य तच्छिविरकटकमावभासे मनोहरमभूदित्यर्थः । उपमालङ्कारः ॥ ६८ ॥

धरस्येति । बलैः सैन्यैराक्रान्तोगिरिपतीरैवतकः क्रीडद्भि र्विहरमाणैर्द्विरदैर्मथितानाभग्नानामुर्वीरुहाणां वृक्षाणां रवैः शब्दै र्निमित्तेन श्रीपतिं हरिं । नन्वङ्ग त्वं धरस्य पर्व्वतस्योद्धर्त्ता उद्धारको ऽसीति सर्व्वत्र जगति प्रतीतः प्रसिद्धः गोवर्द्धनोद्धरणादिति भावः । तत्तर्हि किं किमर्थं अतिभरमतिभारवन्तं मामधः प्रापिपयिषुः प्रापयितुमिच्छुरसि । प्रापयतेः सन्नन्तादुप्रत्ययः । इत्युच्चैरुपालब्धेव आक्रुष्टवदिवेत्युत्प्रेक्षा । उपाङ् पूर्व्वाल्लभेर्लुङ् एकाच उपदेशइति नेट् झषस्तथोर्धोधइति तकारस्य धकारः धि चेति सिचः सकार लोपः । शिखरिणी वृत्तम् । रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति लक्षणात् ॥ ६९ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघ काव्यव्याख्याने सर्वङ्कषाख्ये पञ्चमः सर्गः ॥ ५ ॥

---

अथ रिरंसुममुं युगपद्गिरौ
कृतयथास्वतरुप्रसवश्रिया ।
ऋतुगणेन निषेवितुमादधे
भुवि पदं विपदन्तकृतं सताम् ॥ १ ॥

अथ ऋतुवर्णनमारभते । अथेति । अथ सेनानिवेशानन्तरं गिरौ रैवतके रिरंसुं रन्तुमिच्छुं । रमेः सन्नन्तादुप्रत्ययः । एतेन ऋतुवर्णनप्रवृत्तेः प्रभुचित्तवृत्तिज्ञानपूर्व्वकत्वमुक्तम् । सतां साधूनां विपदामन्तं करोतीति विपदन्तकृत् । क्विप् । तं विपदन्तकृतं सेव्य मिति भावः । अमुं हरिं निषेवितुं स्वतरून् स्वस्वनियतवृत्तान् अनतिक्रम्य यथास्वतरु । यथार्थेऽव्ययीभावः । यथास्वतरु स्थिता प्रसवश्रीः पुष्पफलसम्पत्तिः यथास्वतरुप्रसवश्रीः । प्रसवस्तु फले पुष्पे इत्यमरः । शाकपार्थिवादिषु द्रष्टव्यः । सा कृता येन तेन कृतयथास्वतरुप्रसवश्रिया यथास्वतरुकृतप्रसवश्रियेत्यर्थः । ऋतुगणेन युगपद्भुवि पदमादधे आहितं युगपदृतुगणः प्रादुरभू दित्यर्थः । नह्यवसरं सेवकाः क्षिपन्तीति भावः । अत्र सर्गे सर्व्वत्र यमकशब्दालङ्कारः । तल्लक्षणं तूक्तं चतुर्थे । अर्था लङ्कारस्तु यथासम्भवमूह्यः । अस्मिन्सर्गे द्रुतविलम्बितं वृत्तम् । द्रुतविलम्बितमाह नभौ भराविति लक्षणात् ॥ १ ॥

अथ लोकवेदयोः प्राथम्येन व्यवहारात् वसन्तमादौ वर्णयति । नवेति । स हरिः पुरोऽग्रे प्रथमं वा नवपलाशानि नूतनपर्णानि पलाशवनानि किंशुककाननानि यस्मिंस्तं नवपलाशपलाशवनं । बहु व्रीहिपूर्व्वपदो बहुव्रीहिः । पलाशः किंशुके पत्रे पलाशमिति विश्वः ।

नवपलाशपलाशवनं पुरः
स्फुटपरागपरागतपङ्कजम्।
मृदुलतान्तलतान्तमलोकय
त्स सुरभिं सुरभिं सुमनोभरैः ॥ २ ॥

विलुलितालकसंहतिरामृशन्
मृगदृशां श्रमवारि ललाटजम्।
तनुतरङ्गततिं सरसां दल
त्कुवलयं वलयन्मरुदाववौ ॥ ३ ॥

स्फुटानि विकचानि परागैरजोभिः परागतानि व्याप्तानि च पङ्कजानि यस्मिन् तं स्फुटपरागपरागतपङ्कजं मृदुलाः कोमलाः अतएव तान्ताः आतपसमये किञ्चित् म्लानाः लतान्ताः पल्लवा यस्मिन् तं मृदुलतान्तलतान्तं सुमनोभरैः पुष्पसमृद्धिभिः सुरभिं सुगन्धिं सुरभिं वसन्तमलोकयदपश्यत्। सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः। सुगन्धौ च मनोज्ञे च वाच्यवदिति विश्वः। इह प्रतिपादमाद्यमाचरद्वयात्परतोऽचरत्रयावृत्तिरूपयमकप्रक्रमा चतुर्थपादेऽपि तदेव यमकं। एकस्मादप्यपरमिति सजातीय संसृष्टिः ॥ २ ॥

विलुलितेति। विलुलितालकसंहतिर्विधुतचिकुरनिकरः सन् मृगदृशां ललाटजं श्रमवारि स्वेदमामृशन्परिमृजन्मन्ददति भावः। सरसान्तनुतरङ्गतति दलन्ति विकसन्ति कुवलयानि यस्मिन् कर्मणि तद्यथा तथा वलयन् चालयन् शीतलइति भावः। मरुद्वसन्तवायुराववौ आवाति स्म ॥ ३ ॥

च

तुलयन्ति स्म विलोचनतारकाः
कुरवकस्तवकव्यतिषङ्गिणि ।
गुणवदाश्रयलब्धगुणोदये
मलिनिमालिनि माधवयोषिताम् ॥ ४ ॥

स्फुटमिवोज्ज्वलकाञ्चनकान्तिभि
र्युतमशोकमशोभत चम्पकैः ।
विरहिणां हृदयस्य भिदाभृतः
कपिशितं पिशितं मदनाग्निना ॥ ५ ॥

तुलयतीति । कुरवकस्तवके व्यतिषङ्गिणि लग्ने अतएव गुणवतः शुक्लगुणस्य कुरवकस्तवकस्याश्रयेणाश्रयणेन लब्धोगुणोदयोनिजनीलिमगुणोत्कर्षोयेन तस्मिन् धवले नीलस्य स्फुरणादिति भावः । अलिनि भ्रमरे मलिनस्य भावोमलिनिमा कृष्णत्वं माधवयोषितां हरिवधूनां विलोचनानान्तारकाः कनीनिकाः । तारकाक्ष्णः कनीनिकेत्यमरः । तुलयति स्म समीचकार तद्वद्बभाविवित्यर्थः । तुलाशब्दात्सदृशपर्यायात्तत्करोतीति ण्यन्ताल्लट् स्मइति भूते लट् । उपमालङ्कारः ॥ ४ ॥

स्फुटमिति । उज्ज्वलकाञ्चनकान्तिभिः शुद्धसुवर्णप्रभैश्चम्पकैर्युतञ्चम्पकसमूहमध्यगतमित्यर्थः स्फुटं विकचमशोकपुष्पम्भिदा भेदः । षिद्भिदादिभ्योऽङ् । तां बिभर्त्ति यस्तस्य भिदाभृतो भिन्नस्य विरहिणां हृदयस्य हृदयपिण्डस्य सम्बन्धि मदनाग्निना कपिशितं कपिशीकृतम्पिशितं मांसमिवाशोभतेत्युत्प्रेक्षा ॥ ५ ॥

स्मरहुताशनमुर्मुरचूर्णतां
दधुरिवाम्रवणस्य रजःकणाः ।
निपतिताः परितः पथिकव्रजा
नुपरि ते परितेपुरतोऽभ्रशम् ॥ ६ ॥

रतिपतिप्रहितेव कृतक्रुधः
प्रियतमेषु वधूरनुनायिका ।
वकुलपुष्परसासवपेशल
ध्वनिरगान्निरगान्मधुपावलिः ॥ ७ ॥

स्मरेति । आम्रवणस्य चूतवनस्य । आम्रश्चूतो रसालश्चेत्यमरः । प्रनिरन्तः शरेत्यादिना वननकारस्य णत्वम् । रजःकणाः पराग चूर्णाः स्मरहुताशनः कामाग्निः स एव मुर्मुरस्तुषाग्निः । मुर्मुरस्तु तुषानलइति वैजयन्ती । तस्य चूर्णतान्दधुरिवेत्युत्प्रेक्षा । अतो मुर्मुरचूर्णत्वादेव परितउपरि निपतिताः ते रजःकणाः पन्थानं गच्छन्तीति पथिकाः । पथः ष्कन्निति ष्कन्प्रत्ययः । तेषां व्रजान् भृशम्परितेपुः परितापयामासुः । अतामुर्मुरचूर्णत्वोत्प्रेक्षणमिति भावः ॥ ६ ॥

रतिपतीति । प्रियतमेषु विषये कृतक्रुधः कृतरुषः प्रतिघा रुट्क्रुधौ स्त्रियामित्यमरः । वधूरनुनायिकाः कुपित स्त्रीरनुनेष्यन्ती । तुमुण्ण्वुलौ क्रियायां क्रियार्थायामिति भवि ष्यदर्थे ण्वुल् प्रत्ययः अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीप्रति षेधाद्वधूरिति द्वितीया । रतिपतिना कामेन प्रहिता प्रेषितेव तद्वाणीश्रवणानन्तरमेव तासां कोपत्यागदर्शनादियमुत्प्रेक्षा ।

प्रियसखीसदृशं प्रतिबोधिताः
किमपि काम्यगिरा परपुष्टया ।
प्रियतमाय वपुर्गुरुमत्सर
च्छिदुरयादुरयाचितमङ्गनाः ॥ ८ ॥

मधुकरैरपवादकरैरिव
स्मृतिभुवः पथिका हरिणा इव ।
कलतया वचसः परिवादिनी
स्वरजिता रजिता वशमाययुः ॥ ९ ॥

वकुलपुष्पाणां रसो मकरन्दः स एवासवस्तेन तत्पानेन पेशल ध्वनिर्मधुरस्वरा मधुपावलिः कर्त्री न गच्छतीत्यगा हृद्यात्रिरगान्निर्गता । इणोगा लुङीति गादेशः ॥ ७ ॥

प्रियसखीति । गुरोर्महतो मत्सरस्य द्वेषस्य छिदुरया छेत्त्र्या । विदिभिदिच्छिदेः कुरच् । काम्यगिरा ग्राह्यवाचा परपुष्टया कोकिलया प्रियसख्या सदृशं यथा तथा किमपि परैर्दुर्बोधं रहस्यं हितं प्रतिबोधिता उपदिष्टा अङ्गनाः प्रियतमाय अयाचितं अप्रार्थितमेव वपुर्निजाङ्गमदुरर्पयामासुः । ददातेर्लुङि गातिस्थे त्यादिना सिचो लुक् । कोकिलाकूजितश्रवणानन्तरमेवाङ्गार्पणा दौत्सुक्यहेतुकार्य्यन्तरङ्गयेव तया किमपि बोधिता इत्युत्प्रेक्षा ॥ ८ ॥

मधुकरैरिति । मधुकरैः कर्तृभिः अपवादं मृगवञ्चनाय घण्टादिकुत्सितवाद्यं कुर्वन्तीत्यपवादकराः व्याधास्तैरिव पथिकाः

समभिसृत्य रसादवलम्बितः
प्रमदया कुसुमावचिचीषया ।
अविनमन्न रराज वृथोच्चकै
रनृतया नृतया वनपादपः ॥ १० ॥

हरिणाइव परिवादिनीस्वरजिता वीणाविशेषध्वनिजयिन्या । सप्तभिः परिवादिनीत्यमरः । जेः क्विपि तुक् । वचसोगीतस्य कलतया माधुर्येण करणेन रजिताआकृष्टाः सन्तइत्यर्थः । रञ्जेर्ण्यन्तात्कर्मणि क्तः रञ्जेर्णौ मृगरमणइति उपधानकार लोपः । इहोपमानमृगसादृश्यादौपचारिकं मृगत्वं उप मेयेषु पथिकेष्वस्तीत्यविरोधः स्मृतिभुवः स्मरस्य मृगपातचिन्ता विषयत्वान्मृगग्रहणगर्त्तदेशस्य च वशमाययुः यथा व्याधगाना सक्त्या गर्त्ते मृगाः पतन्ति तद्वन्मधुकरझङ्काराकृष्टाः पान्थाः स्मर पारवश्यमीजुरित्यर्थः । अनेकैवेमुपमा ॥ ९ ॥

समभिसृत्येति । प्रमदया कर्त्र्या कुसुमानामवचिचीषयावचेतु मिच्छया रिरंसयेति भावः । चिनोतेः सन्नन्तादप्रत्ययादिति स्त्रियामकारप्रत्ययः विभाषाचेरिति विकल्पात्कुत्वाभावः । रसा द्रागात्समभिसृत्य समागत्यावलम्बितोहस्तेन गृहीतस्तथाप्यवि नमन् वशमगच्छन् अतएव वृथोच्चकैर्व्यर्थमुन्नतोवनपादपः न तु नागरिकइति भावः न ऋतेत्यनृता असत्या तया अनृतया नर्भावे नृता तया नृतया पुंस्त्वेन रराज । स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषानरइत्यमरः । यः कान्ताकरगृहीतोऽपि न द्रवति स नपुंसकएव लौकिकस्तु पुंस्त्वव्यपदेशोमिथ्यैवेति भावः ॥ १० ॥

इदमपास्य विरागि परागिणी
रलिकदम्बकमम्बुरुहान्ततीः ।
स्तनभरेण जितस्तवकानम
न्नवलते वलतेऽभिमुखं तव ॥ ११ ॥
सुरभिनिश्वसिते दधतस्तृषं
नवसुधामधुरे च तवाधरे ।
अलमलेरिव गन्धरसावम
मम न सौमनसौ मनसो मुदे ॥ १२ ॥

अथ कश्चित्स्वयङ्ग्रहाश्लेषसुखार्थम्प्रियामलिपातेन भीषयन् त्रिभिः कुलकेनाह । इदमित्यादि । स्तनभरेण साधनेन जिताभ्यां स्तवकाभ्यामानमन्ती नवलता यया सा तथोक्ता तस्याः सम्बुद्धिर्जित स्तवकानमन्नवलते स्तवकानमन्नवलतोपमे इत्यर्थः । अतएवेदं विरागि विरक्तिमदलिकदम्बकं परागिणीः परागवतीरिति विरक्ति हेतूक्तिः अम्बुरुहान्ततीरपास्य तवाभिमुखं वलते चलति विशिष्ट लताभ्रमादिति भावः । तथा च भ्रान्तिमदलङ्कारोऽभ्यज्यते ॥ ११ ॥

अथालेस्तदभिमुखागमने कारणमाह । सुरभीति । तव सुरभि निश्वसिते निश्वासमारुते नवसुधावन्मधुरे अधरे च तृषं तृष्णान्दधतोदधानस्यालेर्भ्रमरस्य ममेवाम् उपलभ्यमानौ सुमनसां पुष्पाणां सम्बन्धिनौ सौमनसौ गन्धरसौ सौरभमाधुर्य्ये मनसोऽन्तः करणस्य मुदे नालं न पर्याप्तौ अतस्त्वददनरसगन्धलोभादागच्छतीत्यर्थः । नमः स्वस्तीत्यादिना चतुर्थी । अत्र कान्ताकर्तृकस्वयङ्ग्रहाश्लेषसुखार्थिनः प्रियस्य तद्भयहेतोरलेरेवागमनहेतुत्वेनात्र

इति गदन्तमनन्तरमङ्गना
भुजयुगोन्नमनोच्चतरस्तनी ।
प्रणयिनं रभसादुदरश्रिया
वलिभयालिभयादिव सस्वजे ॥ १३ ॥

दृष्टान्तेन मुखसौरभरमलोभकुसुमवैराग्ययोर्वर्णयितुमौचित्याद्यम कानुसारेण विप्रकृष्टेनापि समशब्देनेवशब्दस्यान्वयः वलतेऽभि मुखन्तव अलिभयादिव सस्वजइत्युपक्रमोपसंहाराभ्यामलेः प्रकृत त्वेनोपमेयत्वावगमात् । अन्यथा मध्ये तद्वैपरीत्ये तद्विरोधादि त्यलमहिचलनाध्वमार्गणेन अत्रोपमानुप्रासयमकानान्तावद्विजा तीयानां संसृष्टिः स्पष्टैव तथा यमकानां त्रयाणां चतुर्थपादादा वेकस्मादक्षरात् द्वाभ्यास्त्रिभ्यश्च परतोऽक्षरत्रयावृत्तिलक्षणानां स्थितत्वात् सजातीयसंसृष्टिरिष्टा ॥ १२ ॥

इतीति । इतीत्यङ्गदन्तं प्रणयिनं अनन्तरं भुजयुगस्योन्नमनेनो च्चतरावत्युन्नतौ स्तनौ यस्याः सा । स्वाङ्गाच्चोपसर्ज्जनादसंयोगोपधा दिति ङीष् । वलिभया वलयोविद्यन्ते यस्यास्तया वलिमत्या । तुन्दिवलिवटेर्भइति भप्रत्ययः । उदरश्रिया मध्यशोभया उप लक्षिता अङ्गना अलिभयादिव रभसात्सस्वजे आलिलिङ्ग । वस्तुतस्तु रागादेवेति भावः । ष्वञ्ज परिष्वङ्गे इतिधातोः कर्त्तरि लिट् । लज्जामन्मथमध्यस्था मध्येयं नायिका मता ॥ १३ ॥

वदनेति । वदनस्य सौरभे सौगन्ध्ये लोभेन परिभ्रमता भ्रमरेण हेतुना यः सम्भ्रमस्तेन संभृतशोभया सम्पादितश्रिया चलितया अलिसम्भ्रमात् प्रस्थितया अतएवालकैरलकपातैर्लोलदृशा चञ्च

वदनसौरभलोभपरिभ्रम
द्भ्रमरसम्भ्रमसम्भृतशोभया।
चलितया विदधे कलमेखला
कलकलोऽलकलोलदृशान्यया ॥ १४ ॥
अजगणन् गणशः प्रियमग्रतः
प्रणतमप्यभिमानितया न याः।
सति मधावभवन्मदनव्यथा
विधुरिताधुरि ताः कुकुरस्त्रियः ॥ १५ ॥

लाद्धा अन्यया स्त्र्यन्तरेण कलोमेखलायाः कलकलः कोलाहलो विदधे विहितः अलिभयादपसरन्त्याः काञ्चीगुणध्वनिरजनीत्यर्थः। एतेन चकितत्वमुक्तम्। चकितम्भयसम्भ्रमः। अनुप्रासयमकयोः सजातीयशब्दालङ्कारयोः संसृष्टिः स्पष्टैव तावत् तथा यमकयोश्च द्वयोः सजातीययोः चतुर्थपादादावेकस्मादक्षरात् द्वाभ्यां च परतोऽक्षरत्रयावृत्तिलक्षणयोः स्थितत्वात् संसृष्टिः ॥ १४ ॥

अजगणन्निति। याः कुकुरस्त्रियो यादवाङ्गनाः गणशो बहुशः। बह्वल्पार्थाच्छस् कारकादन्यतरस्यामिति शस् प्रत्ययः। अग्रतः प्रणतमपि प्रियञ्जातावेकवचनं प्रियानित्यर्थः। अभिमानिनीना भावोऽभिमानिता तया। त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः। नाजगणन्नगणयन्ति स्म। गणेश्चौरादिकाणौ चङि ई च गणइत्यभ्यासस्य पाक्षिकइत्वाभावः। ताः कुकुरस्त्रियो मधौ वसन्ते सति प्रवर्त्तमाने। मधुश्चैत्रे वसन्ते चेति विश्वः। मदनव्यथाविधुरिताः

कुसुमकार्मुककार्मुकसंहित
द्रुतशिलीमुखखण्डितविग्रहाः ।
मरणमप्यपराः प्रतिपेदिरे
किमु मुहुर्मुमुहुर्गतभर्तृकाः ॥ १६ ॥
रुरुदिषा वदनाम्बुरुहश्रियः
सुतनु सत्यमलङ्करणाय ते ।
तदपि सम्प्रति सन्निहिते मधा
वधिगमं धिगमङ्गलमश्रुणः ॥ १७ ॥

विक्लिताः सत्यः धुरि अग्रेऽभवन्नवर्त्तन्त स्वयमेव पुरः प्रवृत्ता इत्यर्थः ॥ १५

कुसुमेति । गतभर्तृकाः वियोगिन्यः । नद्यृतश्चेति कप् । अपराः काश्चिदङ्गनाः कुसुमकार्मुकस्य कामस्य कार्म्मुके संहितैः द्रुतैर्जवनैः शिलीमुखैः शरैः खण्डितविग्रहाः पाटितशरीराः सत्यो मरणमपि प्रतिपेदिरे मुहुः पुनः पुनः मुमुहुर्मूर्छुरिति किमु वक्तव्यमित्यर्थः ॥ १६ ॥

अथ कस्याश्चित्प्रोषितभर्तृकायाबन्धुजनसमाश्वासनं विशेषकेणाह । रुरुदिषेति । हे सुतनु सुभाङ्गि । अम्बार्थनद्योर्ह्रस्व इति ह्रस्वत्वं दीर्घोत्तरपदो बहुव्रीहिः अन्यथा गुणः स्यात् । रुरुदिषा रोदनेच्छा अश्रुविमोचनमित्यर्थः । रुदः सन्नन्तादप्रत्यये टाप् । ते तव वदनाम्बुरुहश्रियः अलङ्करणाय सत्यं रम्याणां विकृतिरपि श्रियन्तनोतीति न्यायादिति भावः । गम्यमानक्रियापेक्षत्वाच्चतुर्थी । तदपि तथापि सम्प्रति मधौ वसन्ते सन्निहिते सन्निहितोत्सवे सति

त्यजति कष्टमसावचिराद्सून्
विरहवेदनयेत्यघशङ्किभिः।
प्रियतया गदितास्त्वयि बान्धवै
रवितथावितथाः सखि मा गिरः॥ १८ ॥

अश्रुणोऽधिगमम्प्राप्तिमम्मङ्गलं धिक्। धिङ्निर्भर्त्सननिन्दयोरित्य मरः। धिगुपर्य्यादिषु त्रिष्विति द्वितीया। अतोमारुदद्दूत्यर्थः॥ १७॥

त्यजतीति। प्रियतया इष्टतया अघशङ्किभिरनर्थोत्प्रेक्षिभिः। प्रेम पश्यति भयान्यपदेऽपीति भावः। बान्धवैस्त्वयि विषये गदिताः उच्चारिताः कष्टं बत असौ बाला विरहवेदनया अचिरादसून् प्राणांस्त्यजति त्यक्ष्यति। वर्त्तमानसामीप्ये वर्त्तमानवद्वेति लट्। इत्येवंविधागिरउक्तीः हे सखि। विगतन्तथात्वं यासान्ताः वितथाः अन्टताः। वितथं त्वन्टतं वचइत्यमरः। बहुव्रीहौ विशेष्य लिङ्गता ब्राह्मणादिलाङ्गलः ततो नञ्समासः। अवितथाः सत्याः मा वितथाः मा कृथाः वृथातिशोकेन मा म्रियाद्दूत्यर्थः। विपूर्व्वात्तनोतेर्लुङि थास् तनादिभ्यस्तथासोरिति विभाषासिचो लुक् अनुदात्तोपदेशेत्यादिनानुनासिकलोपः न माङ्योगे इत्यडा गमप्रतिषेधः॥ १८॥

नेति। किञ्चासौ ते प्रणयी दूरगतोदूरस्थोऽपि महं वसन्तो त्सवं। महउद्धवउत्सवइत्यमरः। नातिवर्त्तते नातिक्रामति खलु इति बन्धुतया बन्धुसमूहेन। ग्रामजनबन्धुसहायेभ्यस्तल् इति तल्प्रत्ययः। उदितैरुक्तैः। वदेः कर्मणि क्तः। ऋतैः सत्यवचनैः। सत्यन्तथ्यमृतं सम्यगित्यमरः। वह्निः प्रणयिनस्तदैव दैवादागतस्य

न खलु दूरगतोऽप्यतिवर्त्तते
महमसाविति बन्धुतयोदितैः।
प्रणयिनोनिशमय्य वधूर्वहिः
स्वरमृतैरमृतैरिव निर्ववौ॥ १९ ॥

॥ विशेषकम् ॥

मधुरया मधुबोधितमाधवी
मधुसमृद्धिसमेधितमेधया।
मधुकराङ्गनया मुहुरुन्मद
ध्वनिभृता निभृताक्षरमुज्जगे॥ २०॥

प्रियस्य स्वरं कण्ठगतं शब्दं निशमय्य श्रुत्वा। शमु अदर्शने इति चौरादिकात् ल्यप् मित्त्वाद्ध्रस्वः ल्यपि लघुपूर्व्वादित्ययादेशः। बधूरमृतैः सुधाभिरिव निर्ववौ निर्ववार। वातेर्लिट्। निर्वाणं निर्वृतिः सुखमिति॥ १९॥

मधुरयेति। मधुरया मनोहरया मधुना वसन्तेन बोधिताः विकासितास्च तामाधव्यस्च। पुष्पधर्मः पुष्पितास्वपचर्यते। तासां माधवीनामतिमुक्तलतानां। अतिमुक्तः पुंड्रकः स्याद्वासन्ती माधवी लतेत्यमरः। मधुसमृद्ध्या मकरन्दसम्पदा समेधितमेधया संवर्द्धित प्रतिभया अतएवोन्मदयतीत्युन्मदोमदकरः। पचाद्यच्। तं ध्वनिं बिभर्त्ति इत्युन्मदध्वनिभृत् तया मधुकराङ्गनया मुहुर्निभृताक्षरं लक्षणया स्थिरनादं यथा तथेत्यर्थः। अथवा सर्वः शब्दो वर्णात्मकएव व्यञ्जकविशेषाभावादस्फुटइति मतमाश्रित्योक्तं सर्व्वं पयोनाः कत्रयइति। उज्जगे उच्चैर्गीतम्। गायतेरविवक्षित

अरुणिताखिलशैलवना मुहु-
र्विदधती पथिकान्परितापिनः।
विकचकिंशुकसंहतिरुच्चकै-
रुदवहद्दवहव्यवहश्रियम् ॥ २१ ॥

रवितुरङ्गतनूरुहतुल्यतां
दधति यत्र शिरीषरजोरुचः।
उपययौ विदधन्नवमल्लिकाः
शुचिरसौ चिरसौरभसम्पदः ॥ २२ ॥

कर्मत्वाद्भावे लिट्। बन्धवैषम्यराहित्यं समता पदगुम्फने इति लक्षणात्समताख्यो गुणः ॥ २० ॥

अरुणितेति। अरुणितान्यरुणीकृतानि अखिलानि शैलवनानि यया सा मुहुः पथिकानध्वगान् विरहिणश्च परितापिनः सन्तापवतो विदधती उच्चैरेवोच्चकैरुन्नता। अव्ययसर्वनाम्नामकच् प्राक् टेरित्यकच् प्रत्ययः। विकचा विकसिता या किंशुकसंहतिः पलाशकुसुमराशिः सा दवहव्यवहश्रियं दवाग्निशोभामुदवहत्। निदर्शनालङ्कारः। इति वसन्तवर्णनम् ॥ २१ ॥

अथ ग्रीष्मवर्णनमारभते। रवीत्यादि। यत्र शुचौ शिरीषरजसां रुचः कान्तयो रवितुरङ्गतनूरुहतुल्यतां सूर्याश्वरोमसावर्ण्यन्दधति हरिद्वर्णाभवन्तीत्यर्थः। असौ शुचिर्ग्रीष्मः। शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोस्तथा ग्रीष्मे ऊतवहेऽपि स्यादिति विश्वः। नवमल्लिकाः। पुष्पे जातीप्रभृतयः स्वलिङ्गाइत्यमरः। पुष्पमूलेषु बहुलमिति बहुलग्रहणात् लुप् लुपि युक्तवद्व्यक्तिवचने

दलितकोमलपाटलकुड्मले
निजवधूश्वसितानुविधायिनि ।
मरुति वाति विलासिभिरुन्मद
भ्रमदलौ मदलौल्यमुपाददे ॥ २३ ॥
निदधिरे दयितोरसि तत्क्षण
स्नपनवारितुषारभृतस्तनाः ।
सरसचन्दनरेणुरनुक्षणं
विचकरे च करेण वरोरुभिः ॥ २४ ॥

भवतः । चिरश्चिरावस्थायिनी सौरभसम्पद्यासाम्ताः स्थिरगन्धा इत्यर्थः विदधत्कुर्वन्नुपययौ प्राप्तः ॥ २२ ॥

दलितेति । पाटलायाः अवयवाः पाटलाः । लुक्प्रकरणे पुष्पमूलेषु बहुलमिति बहुलग्रहणादलुक् । ते च ते कुड्मलाश्च दलिताविभिन्नाः कोमलाः पाटलकुड्मला येन तस्मिन् निजवधूनां श्वसितं निःश्वासमनुविधत्तेऽनुकरोतीति तथोक्ते तादृशीत्यर्थः उन्मदाभ्रमन्तश्चालयो यस्मिन् तस्मिन् उन्मदभ्रमदलौ मरुति शीतानिले वाति वहति सति । वातेर्लटः शत्रादेशः । विलासिभि र्विलसनशीलः कामिभिः । वौ कषलसकत्थस्रम्भइति घिनुण् प्रत्ययः । मदेन लौल्यञ्चापल्यमुपाददे सञ्जातमित्यर्थः ॥ २३ ॥

निदधिरइति । वरोरुभिः स्त्रीभिः तत्क्षणस्नपनेन सद्यःसेकेन वारितुषारभृतोजलशीकरधारिण इत्यर्थः । तुषारौ हिमशीकरा विति शाश्वत. । स्तनादयितोरसि निदधिरे निहिताः तेषां सन्ताप शान्तये स्तनार्द्राङ्गाएव आलिङ्गन्नित्यर्थः । किञ्च करेण पाणिना

स्फुरदधीरतडिन्नयना मुहुः
प्रियमिवागलितोरुपयोधरा ।
जलधरावलिरप्रतिपालित
स्वसमयासमयाज्जगतीधरम् ॥ २५ ॥

सरस आर्द्रश्चन्दनरेणुः घृष्टचन्दनपङ्कस्तानुचूर्णं विचकरे विकीर्णः ।
किरतेः कर्म्मणि लिट् ऋच्छत्यृतामिति गुणः । करेणुकरोरुभि
रिति पाठस्तु ऊरूत्तरपदादौपम्यइत्युङ् प्रसङ्गाद्धेयः । इति
ग्रीष्मवर्णनम् ॥ २४ ॥

अथ वर्षावतारमाह। स्फुरदिति । स्फुरन्ती अधीरे चञ्चले
तडितौ नयने इव तडिन्नयने यस्याः सा अगलिता अरिक्ता उरु
पयोधरा मेघा यस्यां अन्यत्र ऊरू च पयोधरौ च ऊरुपयो
धरम् । प्राण्यङ्गत्वाद्द्वन्द्वैकवद्भावः । न गलितं न पतितं यस्यां सा
जलधरावलिर्मेघपङ्क्तिः अत्र जलधरावलेः पयोधराणाञ्चावयवा
वयविभावात् पृथङ्निर्देशः । अप्रतिपालितस्वसमया अनपेक्षित
निजवेला सतो एकत्र यौगपद्यादन्यत्राधैर्याच्चेति भावः । जगती
धरं रैवतकभूधरम्प्रियमिव समयात् समागच्छत् । यातेर्लिङ् ।
पयोजगतोशब्दयोः पचाद्यजन्तेन धरशब्देन षष्ठीसमासः । अत्र
विशेषणमहिम्ना जलधरावलौ नायिकात्वप्रतीतेः समासोक्तिः
सा तु प्रियमिवेत्युपमयाङ्गेन सङ्कीर्यते ॥ २५ ॥

गर्जेति । नभसि श्रावणमासे । नभः श्रावणिकश्च सइत्यमरः ।
अम्बरे व्योम्नि गजकदम्बकमिव मेचकं श्यामलम् । कालश्यामल
मेचकाइत्यमरः । उच्चैरेवोच्चकैरुन्नतं नवाम्बुदं वीक्ष्य अङ्गना

गजकदम्बकमेचकमुच्चकै
र्नभसि वीक्ष्य नवाम्बुदमम्बरे।
अभिससार न वल्लभमङ्गना
न चकमे च कमेकरसं रहः ॥ २६ ॥

अनुययौ विविधोपलकुण्डल
द्युतिवितानकसंवलितांशुकम्।
धृतधनुर्वलयस्य पयोमुचः
शवलिमा वलिमानमुषोवपुः ॥ २७ ॥

एकः एकायनः रसोरागोयस्य तं एकरसं तिरस्कृतरसान्तर मित्यर्थः । कं वल्लभम्प्रियं रहएकान्ते न चकमे न कामयते स्म तथा नाभिससार च सर्व्ववल्लभं सर्व्वापि तत्तदङ्गना चकमे अभिससार चेति। नवाम्बुदस्योद्दीपकत्वातिशयोक्तिः इह कामना पूर्व्वकत्वादभिसरणस्य तयोरर्थक्रमवलीयस्त्वन्यायेन यमकवशा यातपाठक्रमबाधेन योजना न्याय्यैव ॥ २६ ॥

अनुययाविति। धृतधनुर्वलयस्य धृतेन्द्रचापमण्डलस्य पयो मुचोमेघस्य सम्बन्धी शवलस्य भावः शवलिमा विचित्रता । पृथ्वादिभ्यइमनिज्वा । विविधानानावर्णा उपलामणयोययो स्तयोः कुण्डलयोः द्युतिवितानकेन कान्तिपुञ्जेन संवलितामिलिता अंशवोनिजनोलभासोयस्य तत्तथोक्तम्। शेषाद्विभाषेति कप्प्रत्ययः। बलिमानमुषोवल्यसुराहङ्कारापहरस्य हरेर्वपुरनुययौ अनुचकार तद्वद्बभावित्यर्थः। उपमालङ्कारः ॥ २७ ॥

त्यजति कष्टमसावचिरादसून्
विरहवेदनयेत्यघशङ्किभिः ।
प्रियतया गदितास्त्वयि बान्धवै
रवितथा वितथाः सखि मा गिरः ॥ १८ ॥

अश्रुणोऽधिगमन्याप्तिममङ्गलं धिक् । धिङ्निर्भर्त्सननिन्दयोरित्य मरः । धिगुपर्य्यादिषु त्रिष्विति द्वितीया । अतो मारुदइत्यर्थः ॥ १७ ॥

त्यजतीति । प्रियतया इष्टतया अघशङ्किभिरनर्थोत्प्रेक्षिभिः । प्रेम पश्यति भयान्यपदेऽपीति भावः । बान्धवैस्त्वयि विषये गदिताः उच्चारिताः कष्टं वत असौ वाला विरहवेदनया अचिरादसून् प्राणांस्त्यजति त्यक्ष्यति । वर्त्तमानसामीप्ये वर्त्तमानवद्वेति लट् । इत्येवंविधा गिर उक्तीः हे सखि । विगतन्तथात्वं यासान्ताः वितथाः अनृताः । वितथं त्वनृतं वचइत्यमरः । बहुव्रीहौ विशेष्य लिङ्गता ब्राह्मणादिलाङ्गत्वः ततो नञ्समासः । अवितथाः सत्याः मा वितथाः मा कृथाः वृथातिशोकेन मा मृषाइत्यर्थः । विपूर्व्वात्तनोतेर्लुङि थास् तनादिभ्यस्तथासोरिति विभाषासिचो लुक् अनुदात्तोपदेशेत्यादिनानुनासिकलोपः न माङ्योगे इत्यडा गमप्रतिषेधः ॥ १८ ॥

नेति । किञ्चासौ ते प्रणयी दूरगतोदूरस्थोऽपि महं वसन्तो त्सवं । महउद्धवउत्सवइत्यमरः । नातिवर्त्तते नातिक्रामति खलु इति बन्धुतया बन्धुसमूहेन । ग्रामजनबन्धुसहायेभ्यस्तल् इति तल्प्रत्ययः । उदितैरुक्तैः । वदेः कर्म्मणि क्तः । ऋतैः सत्यवचनैः । सत्यन्तथ्यमृतं सम्यगित्यमरः । वहिः प्रणयिनस्तदैव दैवादागतस्य

गजकदम्बकमेचकमुच्चकै
र्नभसि वीक्ष्य नवाम्बुदमम्बरे।
अभिससार न वल्लभमङ्गना
न चकमे च कमेकरसं रहः ॥ २६ ॥

अनुययौ विविधोपलकुण्डल
द्युतिवितानकसंवलितांशुकम्।
धृतधनुर्वलयस्य पयोमुचः
शवलिमा बलिमानमुषोवपुः ॥ २७ ॥

एकः एकायनः रसोरागोयस्य तं एकरसं तिरस्कृतरसान्तर मित्यर्थः। कं वल्लभम्प्रियं रहएकान्ते न चकमे न कामयते स्म तथा नाभिससार च सर्व्ववल्लभं सर्व्वापि तत्तदङ्गना चकमे अभिससार चेति। नवाम्बुदस्योद्दीपकत्वातिशयोक्तिः इह कामना पूर्व्वकत्वादभिसरणस्य तयोरर्थक्रमवलीयस्त्वन्यायेन यमकवशा यातपाठक्रमबाधेन योजना न्याय्यैव ॥ २६ ॥

अनुययाविति। धृतधनुर्वलयस्य धृतेन्द्रचापमण्डलस्य पयो मुचोमेघस्य सम्बन्धी शवलस्य भावः शवलिमा विचित्रता। पृथ्वादिभ्यइमनिज्वा। विविधानानावर्णाउपलामणयोययो स्तयोः कुण्डलयोः द्युतिवितानकेन कान्तिपुञ्जेन संवलितामिलिता अंशवोनिजनोलभासोयस्य तत्तथोक्तम्। शेषाद्विभाषेति कप्प्रत्ययः। बलिमानमुषोवल्यसुराहङ्कारापहरस्य हरेर्वपुरनुययौ। अनुचकार तद्वद्बभावित्यर्थः। उपमालङ्कारः ॥ २७ ॥

द्रुतसमीरचलैः क्षणलक्षित
व्यवहिता विटपैरिव मञ्जरी ।
नवतमालनिभस्य नभस्तरो
रचिररोचिररोचत वारिदैः ॥ २८ ॥

पटलमम्बुमुचां पथिकाङ्गना
सपदि जीवितसंशयमेष्यती ।
सनयनाम्बुसखीजनसंभ्रमा
द्विधुरबन्धुरबन्धुरमैक्षत ॥ २९ ॥

द्रुतेति । द्रुतसमीरेण शीघ्रमारुतेन चलैर्वारिदैः क्षणं लक्षिता च व्यवहिता च सा क्षणलक्षितव्यवहिता क्षणिकाविर्भावतिरोधानेत्यर्थः । स्नातानुलिप्तवत्पूर्वकालैकेत्यादिना समासः । अचिरं रोचिर्यस्याः सा अचिररोचिर्विद्युत् द्रुतसमीरचलैः विटपैः शाखाभिः क्षणलक्षितव्यवहिता नवतमालनिभस्य नवतमालेन सदृशस्य तद्वन्नीलस्येत्यर्थः । नित्यसमासः । नभस्तरुरिव तस्य नभस्तरो मञ्जरी गुच्छ इवारोचत । उपमालङ्कारः । अत्र नभस्तरोर्नभःश्रेष्ठस्येति व्याख्याने तरुशब्दस्य व्याघ्रादिवच्छ्रेष्ठार्थगोचरत्वात्तमालशब्देन विशेषवाचिना तन्नीलसामान्येन पौनरुक्त्यमिति वल्लभः । तमालशब्दस्येन्द्रनीलवन्नैल्यमात्रोपमानत्वात्तरुशब्दस्य स्वार्थवृत्तित्वेऽपि न पौनरुक्त्यमित्यन्ये ॥ २८ ॥

पटलमिति । पथिकाङ्गना काचित्प्रोषितभर्तृका अतएव सपदि जीवितसंशयं मरणमेष्यती निश्चितमरणेत्यर्थः । आच्छीनद्योर्नुमिति विकल्पान्नुमभावः । अतएव सनयनाम्बोः सवाष्पस्य सखीजनस्य

प्रवसतः सुतरामुदकम्पय
द्विदलकन्दलकम्पनलालितः।
नमयति स्म वनानि मनस्विनी
जनमनोनमनो घनमारुतः ॥ ३० ॥

सम्भ्रमात्क्षोभात् विधुरबन्धुः सम्भ्रमदर्शनात् विक्लवबन्धुजना सती अम्बुमुचाम्पटलं अबन्धुरमशोभनं सदैन्यरोषमिति यावत । ऐक्षत । ईक्षतेर्लङ् आडजादीनामिति वृद्धिः। इह विरहवेदनाक्षमा या नायिका सा मरणाधनमेघपटलावेक्षणवर्णनायां तदुद्योगलक्षणा मरणावस्थोक्ता सा हि द्विविधा तदुद्योगस्तद्योगश्चेत्याहुः । दृङ्मनःसङ्कसङ्कल्पाजागरः क्षमता रतिः । ह्रीत्यागोन्मादमूर्च्छान्तादृत्यनङ्गदशादशेत्यवस्थासङ्ग्रहः ॥ २९ ॥

प्रवसतइति। कन्दली भूकन्दली । द्रोणपर्णी स्निग्धकन्दा कन्दली भूनिकन्दलीति शब्दार्णवः । तस्याः पुष्पाणि कन्दलानि । फले लुगित्यणो लुक् । विदलानां विकचानां कन्दलानां कम्पनेन अवधूननेन लालितः उपलालितः मनस्विनीजनस्य मनसां नमनो नमयिता मानिनीमानभञ्जनइत्यर्थः । कर्त्तरि ल्युट् । घनमारुतोमेघवायुः वनानि नमयति स्म प्रवसतः प्रोषितान् सुतरामुदकम्पयत् उद्वेजितवान् मनस्विनीमानमर्दनस्य वननमनं प्रोषितकम्पनं वा कियदिति भावः ॥ ३० ॥

जलदेति । निजया आत्मीयया स्तनसम्पदा कृतः समार्ज्जनस्य मार्ज्जनाख्यसंस्कारसहितस्य मर्दलमण्डलस्य ध्वनेर्जयोयया सा तथोक्ता मार्ज्जनं नाम मर्द्दलानां ध्वननार्थमभ्रसम्मृदिताम्भःपुष्कर

जलदपङ्क्तिरनर्त्तयदुन्मदं
कलविलापि कलापिकदम्बकम्।
कृतसमार्ज्जनमर्द्दलमण्डल
ध्वनिजया निजया स्वनसम्पदा ॥ ३१ ॥

नवकदम्बरजोरुणिताम्बरै
रधिपुरन्ध्रि शिलीन्ध्रसुगन्धिभिः।
मनसि रागवतामनुरागिता
नवनवा वनवायुभिराददधे ॥ ३२ ॥

लपनं। जलदपङ्क्तिरुन्मादमुत्कटमदं कलविलापि मधुरालापि कलापिकदम्बकम्मयूरवृन्दमनर्त्तयत् ॥ ३१ ॥

नवेति। नवकदम्बरजोभिररुणितमरुणीकृतमम्बरमाकाशं यैस्तैः शिलीन्ध्राणां कन्दलीकुसुमानां यः सुगन्धस्तएषामस्तीति शिलीन्ध्रसुगन्धिनः तैः। गन्धस्येत्वे तदेकान्तग्रहणादिन्प्रत्यया श्रयणम्। कदल्याञ्च शिलीन्ध्रः स्यादिति शब्दार्णवे। वनवायुभिः पुरन्ध्रीषु स्त्रीषु विषये अधिपुरन्ध्रि। विभक्त्यर्थेऽव्ययीभावः। रागवतां कामिनां मनसि नवनवा नवप्रकारा। प्रकारे गुण वचनस्येति द्विर्भावः कर्म्मधारयवद्भावात्सुपोलुक्। अनुरागिता आददधे अनुरागउत्पादितइत्यर्थः ॥ ३२ ॥

शमितेति। अम्बुमुचोमेघाः प्रविरलैरम्भसाम्प्रथमबिन्दुभिः शमिततापमपोढमहीरजोनिरस्तधूलिकं न तु पङ्कितमिति भावः। सुगन्धि सन्तप्तसेकादुद्भूतसौरभं। इह तदेकान्तत्वाद्गन्धस्येत्वम्।

शमिततापमपोढमहीरजः
प्रथमबिन्दुभिरम्बुमुचोऽम्भसाम् ।
प्रविरलैरचलाङ्गनमङ्गना
जनसुगं न सुगन्धि न चक्रिरे ॥ ३३ ॥

द्विरददन्तवलक्षमलक्ष्यत
स्फुरितभृङ्गमृगच्छवि केतकम् ।
घनघनौघविघट्टनया दिवः
कृशशिखं शशिखण्डमिव च्युतम् ॥ ३४ ॥

अचलाङ्गनं रैवतकाङ्गनम् । अङ्गनञ्चत्वराजिरइत्यमरः । अङ्गना जनस्य सुखेन गच्छत्यस्मिन्निति सुगं सुखसञ्चारमित्यर्थः । सुदुरो रधिकरणे इति गमेर्डप्रत्यये टिलोपः । न न चक्रिरे चक्रिरे इत्यर्थः । द्वौ नञौ प्रकृतमर्थङ्गमयतः ॥ ३३ ॥

द्विरदेति । द्विरददन्तवलक्षङ्गजदन्तधवलम् । वलक्षोधवलो ऽर्जुनइत्यमरः । भृङ्गोमृगइव भृङ्गमृगः तस्य छविः सा स्फुरिता यस्मिन् तत्तथोक्तं केतक्याः पुष्पं केतकं । पुष्पमूलेषु बहुलमित्य णोलुक् नादिवृद्धिः लुक्तद्धितलुकीति स्त्रीप्रत्ययस्यापि लुक् । घनघनौघविघट्टनया निबिडमेघसङ्घोपघातेन दिवोऽन्तरिक्षात् च्युतं कृशशिखं सूक्ष्माग्रं शशिखण्डमिवालक्ष्यतेत्युत्प्रेक्षा ॥ ३४ ॥

दलितेति । दलितमौक्तिकानां निष्पिष्टमुक्ताफलानाञ्चूर्णं इव विपाण्डवोऽतिशुभ्राः स्फुरिताये निर्झराणां शीकराः कणा स्तइव चारवः कुटजपुष्पपरागकणाः स्फुटन्दधिरेणुविडम्बना

दलितमौक्तिकचूर्णविपाण्डवः
स्फुरितनिर्झरशीकरचारवः ।
कुटजपुष्पपरागकणाः स्फुटं
विदधिरे दधिरेणुविडम्बनाम् ॥ ३५ ॥

नवपयःकणकोमलमालती
कुसुमसन्ततिसन्ततसङ्गिभिः ।
प्रचलितोडुनिभैः परिपाण्डिमा
शुभरजोभरजोऽलिभिराददे ॥ ३६ ॥

निजरजः पटवासमिवाकिर
द्धृतपटोपमवारिमुचां दिशाम् ।
प्रियवियुक्तवधूजनचेतसा
मनवनी नवनीपवनावलिः ॥ ३७ ॥

न्दधिचूर्णानुकारं विदधिरे चक्रिरे तद्वद्बभुरित्यर्थः । पूर्वोप मानद्वयानुप्राणितेयमुपमेति सङ्करः ॥ ३५ ॥

नवेति । नवपयःकणवन्नवोदकबिन्दुवत् कोमलानां मालती कुसुमानाञ्जातीपुष्पाणां सन्ततिषु सन्ततसङ्गिभिर्निरन्तरासक्तैः । सुमना मालती जातीत्यमरः । अतएव प्रचलितोडुनिभैः पराग भूषणात्सञ्चरन्नक्षत्रकल्पैरिवेत्युत्प्रेक्षा । अलिभिः शुभाद्रजोभरा त्परागपुञ्जाज्जातः शुभरजोभरजः परिपाण्डिमा धवलिमा आददे स्वीकृतः ॥ ३६ ॥

निजेति । प्रियवियुक्तवधूजनचेतसां । कर्मणि षष्ठी । अनवनी अरक्षणी किन्तु हन्त्रीत्यर्थः । अवतेः कर्त्तरि ल्युटि ङीप् ।

प्रणयकोपभृतोऽपि पराङ्मुखाः
सपदि वारिधरारवभीरवः ।
प्रणयिनः परिरब्धमथाङ्गना
ववलिरे वलिरेचितमध्यमाः ॥ ३८ ॥

विगतरागगुणोऽपि जनोन कः
चलति वाति पयोदनभस्वति ।
अभिहितेऽलिभिरेवमिवोच्चकै
रनन्तेते ननृते नवपल्लवैः ॥ ३९ ॥

नवनीपवनावलिः नवकदम्बकाननपङ्क्तिः धृताः पटोपमाः पट कल्पावारिमुचोमेघायाभिस्ताः मेघपटावृताइत्यर्थः । तासान्दिशां निजरजः स्वपरागम्पटवासं पिधानमिवेत्युत्प्रेक्षा अकिरत् अक्षिपत् सखीवदिति भावः ॥ ३७ ॥

प्रणयेति । प्रणयकोपभृतः अतएव पराङ्मुखाः विमुखाअपि । स्वाङ्गाचोपसर्ज्जनादसंयोगोपधादिति विकल्पादाकारः। सपदि वारिधरारवेभ्योगर्ज्जितेभ्योभीरवोभीताः स्त्रियइति शेषः। अथ अनन्तरङ्गर्ज्जिताकर्णनानन्तरमेव प्रणयिनः प्रियान्परिरब्धुमालिङ्गितुम्वलिरेचितान्यालिङ्गनार्थमङ्गप्रसारणात्त्रिवलिरिक्तीकृतानि मध्यामान्यत्र लग्नानि यासान्ताः सत्योववलिरे प्रवृत्ताः । वलतेर्वकारादित्वान्न शसददवादिगुणानामित्येत्वाभ्यासलोपप्रतिषेधः ॥ ३८ ॥

विगतेति । पयोदनभस्वति मेघमारुते वाति वहति सति। वातेर्लटः शत्रादेशः । विगतरागगुणोविरक्तोऽपि कोनरोन चलति सर्व्वोऽपि चलत्येवेत्यर्थः । एवमलिभिरुच्चकैरुच्चैस्तरामन्तत

अरमयन् भवनादचिरद्युतेः
किल भयादपयातुमनिच्छवः ।
यदुनरेन्द्रगणन्तरुणीगणा
स्तमथ मन्मथमन्थरभाषिणः ॥ ४० ॥

ऋसत्यं न भवतीत्यनृतं तस्मिन् अनृते सत्यवचने अभिहिते सति नवपल्लवैर्नन्टतइव नृत्यं कृतमिवेत्युत्प्रेक्षा । नृतेर्भावे लिट् ॥ ३९ ॥

अरमयन्निति । अचिरद्युतेर्विद्युतोभयात्किल भयादिव न तु तथा किन्तु रागादेवेति भावः । किलेत्यलीके । भवनाद्भवन गृहादपयातुं निर्गन्तुमनिच्छवः भयव्याजात्तत्रैव स्थिताइति भावः । विन्दुरिच्छुरित्युप्रत्ययान्तो निपातः । मन्मथेन मन्थरमलस भाषन्तइति मन्मथमन्थरभाषिणः कामवशादित्यर्थः तरुणीगणाः तमप्रकृतं यदवएव नरेन्द्रास्तेषाङ्गणमरमयन् रमयन्ति स्म । अत्र भयेन रागनिगूहनान्मीलनालङ्कारः । मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनमिति लक्षणात् । सोप्यागन्तुकेन भयेन सहज रागतिरोधानादागन्तुकेन सहजतिरोधानरूपः ॥ ४० ॥

अथ शरदर्शनमारभते । ददतमिति । रथावयवायुधस्चक्रा युधोहरिरन्तरिताहिमदीधितिन्तिरोहितोष्णांशुस्तया खगकुलाय पक्षिसंघाय कुलायेषु नीडेसु निलीयन्तइति कुलायनिलायिनः । कुलाये नीडमस्त्रियामित्यमरः । तेषाम्भावस्तत्ता तान्ददत मयच्छन्तं पक्षिसञ्चारप्रतिबध्नन्तमित्यर्थः । नाभ्यस्ताच्छतुरिति नुम्प्रतिषेधः । दिशामिति । कर्मणि षष्ठी । अबोधकृतं अबोध

ददतमन्तरिताहिमदीधितिं
खगकुलाय कुलायनिलायिताम् ।
जलदकालमबोधकृतं दिशा
मपरथाप रथाचयवायुधः ॥ ४१ ॥

स विकचोत्पलचक्षुषमैक्षत
क्षितिभृतोऽङ्कगतां दयितामिव ।
शरदमच्छगलद्वसनोपमा
क्षमघनामघनाशनकीर्त्तनः ॥ ४२ ॥

कारिणं मेघावरणेन प्राच्यादिविवेकं लुम्पन्तमित्यर्थः जलदकालं प्रावृट्कालं अपरथा प्रकारान्तरेण आप प्राप । मेघोदयोपाधिना प्रावृट्व्यवहारभाजन्तमेव कालं मेघात्ययोपाधिना शरत्संज्ञयोपलेभे इत्यर्थः कालोहि एकएव सन्ननेकोपाधिसम्बन्धान्नानालेनोपचर्य्यतइति तद्विदः ॥ ४१ ॥

सइति । अघानां नाशनं निवर्त्तनं कीर्त्तनं यस्य सोऽघनाशनकीर्त्तनः स हरिर्विकचमुत्पलमेव चक्षुर्यस्यास्तामच्छं शुभ्रङ्गलत् स्रंसमानं यद्वसनं तस्योपमा सादृश्यन्तस्याः क्षमायोग्याघनामेघा यस्यां सा तां अतएव क्षितिभृतोऽङ्कगतामुत्सङ्गगतान्दयितामिवेत्युत्प्रेक्षा । शरदमैक्षत ॥ ४२ ॥

जगतीति । अशीतकर उष्णांशुः करैः स्वांशुभिः जगति लोके निशायाभवं नैशं । निशाप्रदोषाभ्याञ्चेति विकल्पादण् प्रत्ययः । तमस्तिमिरमदिद्रवत् द्रावयति स्म निरस्तवानित्यर्थः । द्रुगतौ णौ चङि उपधाया ह्रस्वः सन्वद्भावः स्रवतिशृणोतिद्रवति

जगति नैशमशीतकरः करै
र्वियति वारिदवृन्दमयन्तमः।
जलजराजिषु नैद्रमदिद्रव
न्न महतामहताः क्व च नारयः ॥ ४३ ॥
समयएव करोति बलाबलं
प्रणिगदन्तइतीव शरीरिणाम्।
शरदि हंसरवाः परुषीकृत
स्वरमयूरमयूरमणीयताम् ॥ ४४ ॥

स्रवतिप्रवतिच्यवतीनां वेत्यभ्यासस्य विकल्पादित्वं। वियत्याकाशे वारिदवृन्दमयं मेघसङ्घरूपम्। स्वार्थे मयट्। तमः अदिद्रवत् जलजराजिषु निद्रामेव नैद्रं निमीलनं तदेव तमः अदिद्रवत्। तथा हि महतां महात्मनां। अरयः क्व च क्व वा न नाहताः अहता न किन्तु सर्व्वत्र हताभवन्तीत्यर्थः द्वितीयनिषेधप्रापितस्य प्रकृतार्थस्य हननस्य तृतीयेन निषधः पुनः क्वेति क्वशब्दसामर्थ्यात्प्रकृतार्थपर्य्यवसानम्। वैधर्म्म्येण सामान्याद्विशेषसमर्थनरूपोऽर्थान्तरन्यासः। ॥ ४३ ॥

समयइति। समयः कालएव शरीरिणां बलाबलं बलाबले। विप्रतिषिद्धं चानधिकरणवाचीति विकल्पात् द्वन्द्वैकवद्भावः। करोतीति प्रणिगदन्तः प्रतिपादयन्तइवेत्युत्प्रेक्षा। नेर्गदनदपते त्यादिना णत्वं। शरदि हंसरवाः परुषीकृतस्वरानिष्ठुरीकृत नादामयूरायस्मिन् कर्म्मणि तत् परुषीकृतस्वरमयूरं यथा तथा रमणीयतामयुः प्राप्ताः। यातेर्लङि लङः शाकटायनस्यैवेति

तनुरुहाणि पुरोविजितध्वने-
र्धवलपक्षविहङ्गमकूजितैः ।
जगलुरक्षमयेव शिखण्डिनः
परिभवोऽरिभवो हि सुदुःसहः ॥ ४५ ॥

शेर्जुमादेशः उस्यपदान्तादिति पररूपं संहितायां रलोपे पूर्वस्य दीर्घोऽणः । शरत्प्रावृषोर्हंसमयूरकूजिते माधुर्य्यामाधुर्यविपर्यय दर्शनात्काल एव प्राणिनां बलाबलनिदानं व्यक्तमभूदित्यर्थः ॥ ४४ ॥

तनुरुहाणीति । पुरोऽग्रे धवलपक्षविहङ्गमाः हंसपक्षिणः । हंसास्तु श्वेतगरुतइत्यमरः । तेषां कूजितैर्विजितध्वनेः शिखण्डिनो मयूरस्य तनौ रुहाणि रूढानि तनुरुहाणि वर्हाणि । इगु पधलक्षणः कप्रत्ययः । अक्षमया हंसकूजितेर्ष्ययेव जगलुर्गलन्ति स्म । कालप्रयुक्तस्य वर्हगलनस्याक्षमाहेतुकत्वमुत्प्रेक्ष्यतइति गुण हेतूत्प्रेक्षा । युक्तञ्चैतदित्याह । अरिभवः परिभवः सुदुःसहः अत्य सह्योहि । पराजयदुःखितस्याङ्गसादोयुज्यतइति भावः । कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः स च अक्षमोत्प्रेक्षया सङ्कीर्य्यते ॥ ४५ ॥

अनुवनमिति । अनुवनम्प्रतिवनं वहलोरागोयस्याः सा चासौ जवा च । ओड्रपुष्पं जवेत्यमरः । पुष्पेषु जातीप्रभृतित्वात् स्त्रलिङ्गता । सैवाधरस्तेन चारुणि रम्ये वनराजिरेव वधूस्तस्या मुखम्प्राग्भागः तदेव मुखं वक्त्रमिति श्लिष्टरूपकन्तस्मिन् रुचिराण मीक्षणानां विभ्रमइव विभ्रमः शोभा यासान्ताः विकचवाण

अनुवनं वनराजिवधूमुखे
बहुलरागजवाधरचारुणि ।
विकचबाणदलावलयोऽधिकं
रुरुचिरे रुचिरेक्षणविभ्रमाः ॥ ४६ ॥

कनकभङ्गपिशङ्गदलैर्दधे
सरजसारुणकेशरचारुभिः ।
प्रियविमानितमानवतीरुषां
निरसनैरसनैरवृथार्थता ॥ ४७ ॥

दलावलयो नीलझिण्टीपत्रपङ्क्तयः । बाणोऽस्त्री नीलझिण्ट्यां चेति वैजयन्ती । अधिकं रुरुचिरे शुशुभिरे । उपमारूपकयोः सङ्करः ॥ ४६ ॥

कनकेति । कनकभङ्गाः स्वर्णखण्डा इव पिशङ्गानि दलानि येषान्तैः सह रजसा सरजसं सरजस्कादृत्यर्थः अत एव । न सरजसमित्यव्ययीभावइति वामनः । अथ वा महाकविप्रयोगप्राचुर्य्यदर्शनादव्ययीभावदर्शनं प्रायिकमिति पक्षाश्रयणाद्बहुव्रीह्यर्थाऽपि साधुरेव । तथा च सरजसं सरजसा वा ये अरुणकेशराः तैश्चारुभिः तथा प्रियैः विमानिता अवमानिता मानवत्यो मानिन्यः तासां या रुषो रोषास्तासान्निरसनैर्निरासकैः । अस्यतेः कर्त्तरि ल्युट् । असनैः प्रियकप्रसूनैः। सर्जकासनबन्धूकपुष्पप्रियकजीवकादृत्यमरः। अवृथार्थता मानिनिरासकत्वादस्यन्तीत्यसनानीत्यन्वर्थनामकत्वं दधे दध्रे। दधातेः कर्म्मणि लिट् ॥ ४७

मुखसरोजरुचं मदपाटला
मनुचकार चकोरदृशां यतः ।
धृतनवातपमुत्सुकतामतो
न कमलं कमलम्भयदम्भसि ॥ ४८ ॥

मुखेति । धृतानवातपेयेन तद्धृतनवातपं बालातपताम्रमित्यर्थः अम्भसि कमलं अम्भःस्थं कमलम् । अम्भोग्रहणं स्थलकमलनिवृत्त्यर्थं अम्लानताद्योतनार्थं वा यतोमदपाटलाच्चकोरदृशां स्त्रीणां मुख सरोजरुचं मुखारविन्दशोभामनुचकार । अनुपराभ्यां कृञ इति परस्मैपदनियमः । अतोऽनकरणाद्धेतोः कम्पुमांसमुत्सुकतामेयसी मुखावलोकनकौतुकितां नालंभयत् नागमयत् सर्वञ्चालम्भयदेव तत्स्मारकत्वादित्यर्थः । एतेनौत्सुक्यवस्तुना कार्य्येण कारणभूता कमलदर्शनोत्था मुखस्मृतिर्व्यज्यतइति वस्तुनालङ्कारध्वनिः । एतेन स्त्रीमुखसादृश्यात् कमलं स्वाधारेऽम्भसि पुंसउत्सुकतामलम्भय दिति रङ्गराजव्याख्यानं काकस्य कार्ष्ण्याद्धवलः प्रसादइति वदसङ्गतं मन्तव्यमिति । अलम्भयदिति लभेर्ण्यन्ताल्लङ् लभेश्चेति नुमागमः लभेश्चात्र प्राप्त्युपसर्ज्जनकगत्यर्थत्वाद्गतिबुद्धीत्यादिना अणिकर्त्तुः कर्म्मत्वे द्विकर्म्मता । गत्युपसर्ज्जनकप्राप्त्यर्थत्वे तु वैपरीत्य मित्युक्तं सितं सितिम्नेत्यत्र ॥ ४८ ॥

विगतेति । इषे आश्वयुजमासे । स्यादाश्विनइषोऽप्याश्व युजइत्यमरः । कलमगोपी शालिगोप्त्री सा चासौ वधूश्च कलमगोपवधूः । स्त्रियाः पुंवदित्यादिना पुंवद्भावः । श्रुत आकर्णितस्तया वध्वा ईरितस्य आलापितस्य कोमलगीतकस्य मधुर

विगतशस्यजिघत्समघट्टय
त्स्वनगोपवधूर्न मृगव्रजम्।
श्रुतवदीरितकोमलगीतक
ध्वनिमिषेऽनिमिषेक्षणमग्रतः ॥ ४९ ॥

कृतमदं निगदन्त इवाकुलो
कृतजगत्त्रयमूर्जमतङ्गजम्।
ववुरयुक्छदगुच्छसुगन्धयः
सततगास्ततगानगिरोऽलिभिः ॥ ५० ॥

गानस्य ध्वनिर्येन तं श्रुतवदीरितकोमलगीतकध्वनिं अतएवाग्रतोऽग्रे न निमिषति विस्मयानन्दाभ्यामित्यनिमिषं । इगुपधलक्षणः कप्रत्ययः। तदीक्षणं यस्य तमनिमिषेक्षणम्। घस्तुमत्तुं वेच्छा जिघत्सा। घसेरदादेशाद्वा सन्नन्तादप्रत्ययादिति स्त्रियामप्रत्ययः विगता शस्यस्य जिघत्सा यस्य तं विगतशस्यजिघत्सं। उपसर्ज्जनाद्ध्रस्वः। मृगव्रजं नाघट्टयत् नाताडयत् सिद्धे साधनाप्रयोगादिति भावः। अत्र दण्डसाध्ये मृगनिवारणे काकतालीयन्यायेन सुखार्थस्य गानस्य कारणत्वकथनात्समाधिरलङ्कारः । कारणान्तरयोगात कार्य्यसुकरत्वं समाधिरिति सूत्रात्॥ ४९ ॥

कृतेति । अयुजो विषमाश्छदा येषान्ते अयुक्छदाः सप्तपर्णास्तेषां गुच्छैः स्तवकैः सुगन्धयः शोभनगन्धा गजमदगन्धिन इति भावः अलिभिर्भृङ्गैः तता विस्तृता गानगिरो येषान्ते अलिभिर्गीयमाना इत्यर्थः। सततङ्गच्छन्तीति सततगाः सदागतयो वायव इति यावत् कृतमदं जनितमदं अतएवाकुलीकृतगजत्त्रयं ऊर्ज्जः

विगतवारिधरावरणाः क्वचि
द्दृशुरुल्लसितासितासिताः ।
क्वचिदिवेन्द्रगजाजिनकञ्चुकाः
शरदि नीरदिनीर्यदवो दिशः ॥ ५१ ॥

विलुलितामनिलैः शरदङ्गना
नवसरोरुहकेशरसम्भवाम् ।
विकरितुं परिहासविधित्सया
हरिबधूरिव धूलिमुदक्षिपत् ॥ ५२ ॥

कार्त्तिकः । बाहुलोर्जौ कार्त्तिकिकइत्यमरः । सएव मतङ्गजइति रूपकम् । तं निगदन्तइव अयमागच्छतीत्यावेदयन्तइव ववुः वान्ति स्म । मत्तमातङ्गगमनेऽप्येवंविधवायुवहनसम्भवादियमुत्प्रेक्षा रूपकं त्वङ्गमस्याः ॥ ५० ॥

विगतेति । शरदि यदवोयादवाः यदुशब्देन रघुशब्दवत् तदपत्य लक्षणा जनपदशब्दानामेव तद्राजस्य बहुष्विति लुक्सम्भवादिति । क्वचिद्विगतवारिधरावरणाः निवृत्तमेघावरणाः अतएवोल्लसिता कोशादुद्धृतासिलतेवासिलता तद्वदसिताः श्यामाइत्युपमा क्वचि न्नीरदिनीर्मेघवतीः शुभ्राभ्रपटलच्छन्नाइत्यर्थः अतएवेन्द्रगजा जिनं ऐरावतचर्म तदेव कञ्चुकः कूर्पासकोयासान्ताइव स्थिता इत्युत्प्रेक्षा । दिशोददृशुः । उक्तालङ्कारयोः संसृष्टिः ॥ ५१ ॥

विलुलितामिति । शरदेवाङ्गनाइति रूपकं अनिलैर्विलुलितां विक्षोभितां नवसरोरुहकेशरसम्भवां धूलिं परागं परिहास विधित्सया नर्म्मरीतिचिकीर्षया । दधातेः सन्नन्तात् स्त्रियामप्रत्यय

हरितपत्त्रमयीव मरुद्गणैः
स्रगवनद्धमनोरमपल्लवा।
मधुरिपोरभिताम्रमुखी मुदं
दिवि तता विततान शुकावलिः॥ ५३॥

टाप्। हरिवधूः विकरितुं विक्षेप्तुमिव। तुमुण्ण्वुलौ क्रियायां क्रियार्थायामिति तुमुन्प्रत्ययः। उदक्षिपत् प्रेरितवती। रूपको ज्जीवितेयमुत्प्रेक्षा। किरतिरयं कीर्य्यमाणकर्म्मा। यथा रजः किरति मारुतः। क्वचित्तत्कारकोद्देश्यकर्म्मा यथाऽत्रैवेति विवेकः ॥ ५२ ॥

हरितेति। अभिताम्रमुखी अरुणमुखी। स्वाङ्गाच्चोपसर्जना दित्यादिना विकल्पात् ङीष्। शुकावलिर्मरुद्गणैः सुमनोगणै र्दिवि तता हरिप्रियार्थमाकाशे वितता हरितानां हरिद्वर्णानां पत्त्राणां विकारोहरितपत्त्रमयी। टिड्ढाणञित्यादिना विकल्पात् ङीप्। तयाऽवनद्धाः ग्रथिताः मनोरमाः पल्लवा यस्यां सा स्रगि वेत्युत्प्रेक्षा। मधुरिपोः कृष्णस्य मुदं विततान॥ ५३॥

स्मितेति। स हरिः स्मितानि विकसितानि सरोरुहाण्येव नेत्राणि येषु तानि सरोजलानि यस्यास्तान्तथोक्तामतिसिताङ्गाः धवलपक्षाये विहङ्गाहंसास्तैर्हसन्ती स्मयमानेव स्थिता द्यौर्यस्यां तान्तथोक्तां शरैस्तृणविशेषैर्दन्तुराण्युन्नतदन्तानि हासात्प्रकाश दशनानीति यावत्। दन्तउन्नतउरजित्युरच् प्रत्ययोमत्वर्थीयः। तानि दिङ्मुखानि यस्यां तां शरदन्तुरदिङ्मुखां शरदं सर्व्वतो मुदितामिवाकलयत् सर्व्वत्र नेत्रविकाशादिलिङ्गैर्हृष्टामिवामन्यत

स्मितसरोरुहनेत्रसरोजला
मतिसिताङ्गविहङ्गहसद्दिवम् ।
अकलयन्मुदितामिव सर्वतः
स शरदं शरदन्तुरदिङ्मुखाम् ॥ ५४ ॥
गजपतिद्वयसीरपि हैमन
स्तुहिनयन् सरितः पृषताम्पतिः ।
सलिलसन्ततिमध्वगयोषिता
मतनुतातनुतापकृतं दृशां ॥ ५५ ॥

इत्यर्थः । अत्र सरोजहंसशरेषु नेत्रहासदन्तत्वारोपणाद्रूपका लङ्कारः । तद्वशात्प्रतीयमानाङ्गनाभेदाध्यवसायाच्छरदि मुदितलो लेचेति सङ्करः ॥ ५४ ॥

अथ हेमन्तं वर्णयति । गजपतीति । गजपतिः प्रमाणमासा ङ्गजपतिद्वयसीः महागजप्रमाणाः । प्रमाणे द्वयसज्दघ्नञ्मात्रच् इति प्रमाणार्थे द्वयसच्प्रत्ययः टिड्ढाणञित्यादिना ङीप् । ता अपि सरितस्तुहिनयन् हिमीकुर्व्वन् । तत्करोति एयन्ताल्लटः शत्रादेशः । हेमन्ते भवो हैमनः । सर्व्वत्राण् च तलोपश्चेति हेमन्तशब्दाच्छैषिको ऽण्प्रत्ययः तकारलोपश्च । पृषतां विन्दूनां पतिर्वायुः । पृषन्ति विन्दुपृषताइत्यमरः । अध्वानङ्गच्छन्तीत्यध्वगाः पथिकाः अन्ता त्यन्ताध्वदूरपारसर्व्वानन्तेषु डः । तद्योषिताम्प्रोषितभर्त्तृकाणां दृशा मतनुतापकृतं महासन्तापकारिणीं सलिलसन्ततिं अतनुत । उष्णमश्रूत्पादयामासेत्यर्थः । हेमन्तमारुतोविरहिणीदुःसहो जनोति भाव. ॥ ५५ ॥

इदमयुक्तमहो महदेव य
द्वरतनोः स्मरयत्यनिलोऽन्यदा ।
स्मृतसयौवनसोष्मपयोधरा
न्सतुहिनस्तु हिनस्तु वियोगिनः ॥ ५६ ॥

सर्व्वथापि वियोगिनामुद्दीपकत्वायोर्हेमन्ते वैशिष्ट्यमाचष्टे । इद मिति । अनिलोवायुरन्यदाऽन्यस्मिन् काले ग्रीष्मादावित्यर्थः । सर्वैकान्येत्यादिना दाप्रत्ययः । वियोगिनोवियुक्तान् । गतिबुद्धी त्यादिना अणिकर्त्तुः कर्म्मत्वं । वरतनोर्वरतनुमित्यर्थः । अधीग र्थत्यादिना कर्म्मणि शेषे षष्ठी । स्मरयतीति यत् स्मरतेराध्याने मित्त्वाद्ध्रस्वत्वं । इदं स्मारकत्वमपि महदत्यन्तमयुक्तमेव सहकारि विरहादिति भावः । अहो अत्यन्ताकिञ्चित्करत्वाद्विस्मयः । हेमन्ते तु हन्तृत्वमप्यस्य सम्भवतीत्याह । सतुहिनस्तुहिनसहितस्तु सयौवना यौवनयुक्ताः अतएव सोष्माणोये पयोधराः कुचास्ते स्मृतायै स्तान् स्मृतसयौवनसोष्मपयोधरान् . वियोगिनोवियुक्तान् । तथा युक्तं चानीप्सितमिति कर्म्मत्वम् । हिनस्तु हन्तु । सम्भावनायां लोट् । हेमन्ते हि हिमसहकारात्कुचोष्मैकसाध्यदुःखोत्पादन सामर्थ्याद्वियोगिमारकत्वमपि सम्भाव्यते ग्रीष्मादौ तु तादृक्सहकारि विरहात् स्मारकत्वमप्ययुक्तमित्यर्थः । अमारके मारकसम्बन्धोक्ते रतिशयोक्तिभेदः इह सहजकविप्रौढोक्तिसिद्धयोरभेदाध्यवसाय इति रहस्यम् ॥ ५६ ॥

प्रियतमेति । अनाद्यपर्य्याये सहसा इति त्रेधा विभागः अन्यत्र सहसेत्येकं पदं सरुषा सरोषया यया स्त्रिया कर्त्र्या प्रिय

प्रियतमेन यया सरुषा स्थितं
न सहसा सहसा परिरभ्य तम्।
श्लथयितुं क्षणमक्षमताङ्गना
न सहसा सहसा कृतवेपथुः ॥ ५७ ॥

म्लपसदूयत याधरपल्लव
क्षतिरनावरणा हिममारुतैः।
दशनरश्मिपटेन च शीत्कृतै
र्निवसितेव सितेन सुनिर्वृतौ ॥ ५८ ॥

तमेन सह न स्थितम्। नपुंसके भावे क्तः। सा अङ्गना स्त्री सहसा मार्गशीर्षमासेन। मार्गशीर्षे सहामार्गइत्यमरः। कृतवेपथुः जनितकम्पा सती। ट्वितोऽथुजित्यथुच् प्रत्ययः। तं पूर्वमगणितमेव प्रियं हसेन सह वर्त्ततइति सहसा सहास्या सती। अथो हसो हासो हास्यं चेत्यमरः। स्वनहसोर्वेति विकल्पादप्प्रत्ययः। सहसा शीघ्रं। स्वरादिपाठादव्ययत्वम्। परिरभ्याश्लिष्य क्षणं क्षणमपीत्यर्थः। अन्यथा वैरं स्यात्। अतएव सामर्थ्यलभ्यार्थ त्वादपेरप्रयोगः। श्लथयितुं नाक्षमत शिथिलीकर्त्तुंनोत्सहते स्मेत्यर्थः। मानिनीमानभञ्जनक्षमोऽयं मासइति भावः। कल हान्तरितेयं नायिका। कोपात्कान्तं पराणुद्य पश्चात्ताप समन्वितेति लक्षणात् ॥ ५७ ॥

म्लपनिति। अनावरणा आवरणरहिता या अधरपल्लवस्य क्षतिर्व्रणो हिममारुतैर्म्लपमदूयत अतप्यत। दूङोदैवादिकात् कर्त्तरि लङ्। सा क्षतिर्यत्तदोर्नित्यसम्बन्धः। शीत्कृतैः शीत्कारैः

व्रणभृता सुतनोः कलशीत्कृत
स्फुरितदन्तमरीचिमयं दधे।
स्फुटमिवावरणं हिममारुतै
र्मृदुतया द्रुतयाधरलेखया ॥ ५९ ॥

धृततुषारकणस्य नभस्वत
स्तरुलताङ्गुलितर्ज्जनविभ्रमाः।
पृथु निरन्तरमिष्टभुजान्तरं
वनितयाऽनितया न विषेहिरे ॥ ६० ॥

कर्मभिः सितेन शुभ्रेण दशनरश्मय एव पटस्तेन करणेन निवसिते वाच्छादितेवेत्युत्प्रेक्षा। वसेराच्छादनार्थात्कर्म्मणि क्तस्येडागमः। सुनिर्व्ववौ सुष्ठु निर्ववार। शीतातुराच्छाद्यतइति भावः। हिमहताधरनिर्वाणस्य शीत्कारकारणकस्य दशनरश्मिपटाच्छादने हेतुत्वोत्प्रेक्षणाद्रूपकोत्प्रेक्षयोः सङ्करः॥ ५८ ॥

उक्तमेवार्थभङ्ग्यन्तरेणाह। व्रणेति। मृदुतया मार्द्दवेन हेतुना हिममारुतैर्द्रुतया पीडितया। द्रु दूञ् उपतापे इति धातोर्भौवादिकात्कर्म्मणि क्तः। व्रणभृता दन्तव्रणवत्या सुतनोः स्त्रियाः अधरो लेखेव तया अधरलेखया कर्त्र्या कलशीत्कृतेन हेतुना स्फुरिताः प्रकाशिताये दन्तमरीचयस्तन्मयन्तद्रूपं स्फुटमावरणमाच्छादनं दधइव धृतमिवेत्युत्प्रेक्षा। दधातेः कर्म्मणि लिट्॥ ५९ ॥

धृतेति। धृतास्तुषारकणास्तुहिनशीकरायेन तस्य नभस्वतः पवनस्य सम्बन्धिनः तरुलताएवाङ्गुलयस्ताभिस्तर्जनानि यानि

हिमऋतावपि ताः स्म भृशस्विदो
युवतयः सुतरामुपकारिणि ।
प्रकटयत्यनुरागमकृत्रिमं
स्मरमयं रमयन्ति विलासिनः ॥ ६१

तान्येव विभ्रमाः विलासाः पृथुविशालमिष्टस्य दयितस्य भजान्तरं भुजमध्यं वक्षःस्थलं निरन्तरमनितया अप्राप्तया गाढालिङ्गनमलभमानया इत्यर्थः । इणः कर्त्तरि क्तः । वनितया स्त्रिया न विषेहिरे न सोढाः विरहिणस्तर्ज्जिता इव नभस्ततोबिभ्यतीति भावः ॥ ६० ॥

हिमेति । स्मरमयं स्मरादागतं स्मरप्रयुक्तमित्यर्थः । तत आगतइति मयट् । अकृत्रिममनुरागं सहजं प्रेम प्रकटयति प्रकटी कुर्वाणे तत्कार्य्येण स्वेदेनेति भावः । अतएव सुतरामुपकारिणि पुंसां रिरंसाजननात्तेभ्यः स्वानुरागप्रकाशनाचात्यन्तोपकर्त्तरीत्यर्थः । एवम्भूते हिमऋतौ हेमन्तेऽपि स्वेदसम्भावनारहितकालेऽपीत्यर्थः । सांहितः ऋत्यकइति प्रकृतिभावः । भृशं स्विद्यन्ति रागोष्मणा भृशस्विदइति सात्विकोक्तिः । क्विप् । हेमन्तोऽपि रागिणां स्वेदहेतुरेव तद्धेतुरागहेतुत्वादिति भावः । तास्तथा धीरायुवतयो विलासिनः प्रियान् रमयन्ति स्म हेमन्तस्योद्दीपकत्वादिति पीडाक्षमत्वात् दीर्घरात्रित्वाचोभयेच्छासद्दृशमरमन्तेत्यर्थः ॥ ६१ ॥

अथ शिशिरं वर्णयति । कुसुमयन्नित्यादिना । उपवनं वनइत्यर्थः । विभक्त्यर्थेऽव्ययीभावः तृतीयासप्तम्योर्बहुलमिति विकल्पादम्भावः । फलिनीः प्रियङ्गुलताः । प्रियङ्गुः फलिनी फली

कुसुमयन फलिनीरलिनीरवै
र्मदविकाशिभिराहितहुङ्कृतिः ।
उपवनं निरभर्त्सयत प्रियान्
वियुवतीर्युवतीः शिशिरानिलः ॥ ६२ ॥
उपचितेषु परेष्वसमर्थतां
व्रजति कालवशाद्बलवानपि
तपसि मन्दगभस्तिरभीषुमा
न्नहि महाहिमहानिकरोऽभवत् ॥ ६३ ॥

त्यमरः । कुसुमयन् कुसुमवतीः कुर्वन् । इत्युद्दीपनसामग्री वर्णनं । कुसुमयतेर्मत्वन्तप्रकृतिकात्तत्करोतीति ण्यन्तात् लटः शत्रादेशः णाविष्टवद्भावे विन्मतोर्लुक् । मदविकाशिभिर्मदेन विजृम्भमाणैरलिनीरवैः भृङ्गीझङ्कारैराहितहुङ्कृतिः कृतहुङ्कारः माधुर्याद्युद्दीपकत्वातिशयद्योतनार्थमलिनीति स्त्रीलिङ्गनिर्देशः शिशिरानिलः प्रियान्वियुवतीः कोपाद्वियुञ्जानाः । यौतेः शतरि धातोरुवङादेशः उगितश्चेति ङीप् । युवतीः बधूः यूनस्तिरिति तिप्रत्ययः । निरभर्त्सयत अतर्ज्जयत । तर्जिभर्त्स्यौ स्वौरादिकयोरनुदात्तत्वादात्मनेपदम् । अत्र वायौ अचेतने चेतनधर्मो निर्भर्त्सनमुत्प्रेक्ष्यते सा चालिनीझङ्काररझङ्काराज्जीवितेति रूपकसङ्कीर्णा व्यञ्जकाप्रयोगाद्गम्या च ॥ ६२ ॥

उपचितेष्विति । कालवशाद्बलवानपि परेषु शत्रुषु उपचितेषु प्रवृद्धेषु सत्सु असमर्थतां दौर्बल्यं व्रजति । हि यस्मात्तपसि माघमासे । तपामाघे इत्यमरः । मन्दगभस्तिर्मृदुरश्मिरभीषुमा

अभिषिषेणयिषुम्भुवनानि यः
स्मरमिवाख्यत लोध्ररजश्चयः ।
क्षुभितसैन्यपरागविपाण्डुर
द्युतिरयं तिरयन्नुदभूद्दिशः ॥ ६४ ॥

मंशुमान् । अभीषुः प्रग्रहे रश्मावित्यमरः । महतउपचितस्य हिमस्य हानिं नाशं करोतीति महाहिमहानिकरस्तद्धेतुर्नाभवत् । कृञोहेत्वित्यादिना हेत्वर्थे टप्रत्ययः । विशेषेण सामान्यसमर्थन रूपोऽर्थान्तरन्यासः ॥ ६३ ॥

अभीति । क्षुभितउद्धूतोयः सैन्यपरागः सेनारजःसइव विपाण्डुर द्युतिः शुभ्रवर्णः योलोध्ररजश्चयः भुवनान्यभिषिषेणयिषुं सेनया अभियातुमिच्छन्तं । यत्सेनयाभिगमनमरौ तदभिषेणनमित्यमरः । सत्यापपाशेत्यादिना सेनाशब्दात् णिचि सनि सनाशंसभिक्षभ्य उरिति उप्रत्ययः । स्थादिष्वभ्यासेनेति धात्वभ्याससकारयोः षत्वं । स्मरमाख्यतेव ख्यातवानित्युत्प्रेक्षा । चक्षिङः ख्याञ्अस्यतिवक्ति ख्यातिभ्योऽङिति च्लेरङादेशः । अयं लोध्ररजश्चयो दिशः तिरयन् तिरस्कुर्वन् । तिरःशब्दात्तत्करोतीति ण्यन्ताल्लटः शत्रादेशः णाविष्ठवद्भावे टिलोपः । उदभूत् ॥ ६४ ॥

शिशिरेति । शिशिरमासमपास्यापहाय शीतं हरतीति शीत हरस्य । हरतेरनुद्यमनेऽजित्यच् प्रत्ययः । नोऽस्माकमस्य कुचोष्मणः कुचोष्णस्य कदत्र गुणः किम्फलं सम्पाद्यत इति शेषः । गम्यमान क्रियापेक्षया क्वानिर्देशः । इवशब्देवाक्यालङ्कारे इतिधियातो ऽस्मिन् शिशिरमासे । सार्व्वविभक्तिकस्तसिः । प्रियाः कान्ताअस्तरुषो

शिशिरमासमपास्य गुणोऽस्य नः
क इव शीतहरस्य कुचोष्मणः ।
इति धियास्तरुषः परिरेभिरे
घनमतोनमतोऽनुमतान् प्रियाः ॥ ६५ ॥

अधिलवङ्गममी रजसाधिकं
मलिनिताः सुमनोदलतालिनः ।
स्फुटमिति प्रसवेन पुरोहस
त्सपदि कुन्दलता दलतालिनः ॥ ६६ ॥

निरस्तरोषाः सत्योनमतः प्रणताननुमतान् स्वप्रियान् घनं निविडं परिरेभिरे आश्लिष्टवत्यः इतिधियेति सुखार्थस्य परिरम्भस्य कुचोष्मसाफल्यार्थत्वमुत्प्रेक्ष्यते व्यञ्जकाप्रयोगाद्गम्यत्वञ्च ॥ ६५ ॥

अधीति । लवङ्गेष्वधिलवङ्गं । विभक्त्यर्थेऽव्ययीभावः । सुमनसां पुष्पाणां दलेषु तालयन्ति प्रतितिष्ठन्ति इति सुमनोदलतालिनः । ताच्छील्ये आभीक्ष्ण्ये वा णिनिः । अमी अलिनोमधुपाः रजसा परागेणार्त्तवेन च अधिकं मलिनाः मलीमसाः पापिनश्च कृताः मलिनिताः इति हेतोः पुरोऽग्रे सपदि कुन्दलता माघ्यवल्ली । माघ्यं कुन्दमित्यमरः । दलता विकसता प्रसवेन निजकुसुमेन अहसत् जहास स्फुटमित्युत्प्रेक्षायां रजस्वलाक्रन्तारं कामिनं सपत्न्यो हसन्तीति भावः । कुन्दकुसुमस्य धावल्याद्धासत्वेनोत्प्रेक्षा ॥ ६६ ॥

अतिसुरभिरभाजि पुष्पश्रिया
मतनुतरतयेव सन्तानकः ।
तरुणपरभृतः स्वनं रागिणा
मतनुत रतये वसन्तानकः ॥ ६७ ॥
नोज्झितुं युवतिमाननिरासे
दक्षमिष्टमधुवासरसारम् ।
चूतमालिरलिनामतिरागा
दक्षमिष्ट मधुवासरसारम् ॥ ६८ ॥

अथ यमकविशेषकौतुकितया कविः पुनर्द्वादशभिर्वृत्तैर्वर्णय न्नादौ ऋतुर्भिर्वसन्तं वर्णयति । अतिसुरभिरिति । अतिसुरभि रत्यन्तसुगन्धिः सन्तानकः कल्पवृक्षः पुष्पश्रियां पुष्पसम्पदां अतनुतरतया महत्त्वेन । अतनुशब्दात्तरबन्तात्तल्प्रत्ययः । अभाजीवाभञ्जीवेत्युत्प्रेक्षा । तथा नम्र इत्यर्थः । भञ्जेश्च चिणीति विभाषा नलोपे उपधावृद्धिः चिणोलुक् । किञ्च वसन्तस्यानकोवसन्तानकः दुन्दुभिरिति रूपकन्तरुणपरभृतस्तरुणकोकिलोरागिणां कामिनां रतये रागवर्द्धनाय स्वनमतनुत मधुरं चुकूजेत्यर्थः । प्रभा वृत्तम् । स्वरशरविरतिर्ननौ रौ प्रभेति लक्षणात् ॥ ६७ ॥

नोज्झितुमिति । अरमत्यन्तमिष्टेष्वीप्सितेषु मधुषु मकरन्देषु वासे वसतौ रसोरागोयस्याः सा इष्टमधुवासरसा मधुपान प्रियेत्यर्थः अतएवालिनामालिर्भृङ्गश्रेणिर्युवतिमाननिरासे दक्षं कुशलं उद्दीपकत्वादिति भावः । मधुवासरेषु वसन्तदिनेषु सारं श्रेष्ठं मधुवासरसारन्तत्कालसाध्यमित्यर्थः चूतं सहकारं

जगद्वशीकर्त्तुमिमाः स्मरस्य
प्रभावनीकेतनवैजयन्तीः
इत्यस्य तेने कदलीर्मधुश्रीः
प्रभावनी केतनवैजयन्तीः ॥ ६९ ॥

अतिरागादतिलौल्यादुज्झितुं हातुन्नाचमिष्ट नासहिष्ट । चमे र्भौवादिकाल्लुङ् । स्वागता वृत्तम् । स्वागतेति रनभाद्गुरुयुग्म मिति लक्षणात् ॥ ६८ ॥

जगदिति । प्रभावयतीति प्रभावनी समर्थयित्री । कर्त्तरि ल्युटि ङीप्। मधुश्रीः कर्त्री जगद्वशीकर्त्तुम्प्रभौ समर्थे अस्य स्मरस्या नीके सैन्ये जयन्तीर्जिलरीः केतनवैजयन्ती ध्वजपताकाः तनवै करवाणि । तनोतेः प्राप्तकाले लेट् टेरेत्वमित्येकारः आडुत्तमस्य पिच्चेति आटि आटश्चेति वृद्धिः । इति मनीषयेति शेषः । इमाः कदलीः रम्भातरून् तेने वितस्तार । कदली वारणवुशा रम्भा मोचांशुमत्फलेत्यमरः । कदलीषु कामवैजयन्तीत्वोत्प्रेक्षा । वृत्त मुपजातिः ॥ ६९ ॥

स्मरति । अमतो दृष्ट्वा स्मरेण कामेन निमित्तेन योरागो रमणेच्छा सएव तन्मयी तमिस्रा तमस्तोमः । तमिस्रा तिमिरे रोगे तमिस्रा तु तमस्ततौ । कृष्णपक्षनिशायां चेति विश्वः । रवे र्वपुर्मण्डलं परितस्तार आवव्रे अहनि रजनीधियञ्जनयामासे त्यर्थः । परिपूर्व्वात् स्तृणातेर्लिट् । अत्रयं सत्यमित्यर्थः । कुतः परितः समन्तात्ताररवे उच्चतरध्वनौ कोकिले रसति कूजति सति इत्युद्दीपकोक्तिः । स्त्री स्त्रियइत्यर्थः । जातावेकवचनम् । दिवेति

स्मररागमयी वपुस्तमिस्रा
परितस्तार रवेरसत्यवश्यम्।
प्रियमाप दिवापि कोकिले स्त्री
परितस्ताररवे रसत्यवश्यम् ॥ ७० ॥

वपुरम्बुविहारहिमं शुचिना
रुचिरं कमनीयतरा गमिता।
रमणेन रमण्यचिरांशुलता
रुचिरङ्कमनीयत रागमिता ॥ ७१ ॥

सप्तम्यर्थेऽव्ययं वशङ्गतोवश्यः। वशङ्गतइति यत् प्रत्ययः। न वश्यस्त मवश्यमनवशङ्गतमपीत्यर्थः प्रियमाप स्वयमभिससारेत्यर्थः। यदव गणयन्तमपि प्रियन्दिवापि मानमवगणय्य निषेधञ्चोल्लङ्घ्य सम गच्छन् तत्सत्यं रागतिमिरतिरोहितमानभानुमण्डलामानिन्यइति रूपकानुप्राणिता प्रियाप्तिक्रियानिमित्ता परिस्तरणक्रियास्वरूपो त्प्रेक्षा अवश्यमिति व्यञ्जकप्रयोगाद्वाच्या। औपच्छन्दसिकं वृत्तम्। विषमे ससजागुरू समे चेत् सभरयाश्छन्दसिकन्तदौपपूर्व्वमिति लक्षणात् ॥ ७० ॥

अथैकेन ग्रीष्ममाह। वपुरिति। शुचिना ग्रीष्मेण प्रयोजक कर्त्रा अम्बुविहारेण जलक्रीडया हिमं शीतलं अतएव रुचिर मुज्ज्वलं वपुर्देहङ्गमिता प्रापिता। गतिबुद्धीत्यादिना अणि कर्त्तुः कर्म्मत्वं। प्रधानकर्म्मण्याख्येये लादीनाहुर्द्दिकर्म्मणामिति अभिहितत्वं च। अतएव कमनीयतरा रमणीयतरा अचिरांशु र्लतेवाचिरांशुलता विद्युल्लता तस्यारुचिरिव रुचिर्यस्याः सा

मुदमब्दभुवामपां मयूराः
सहसायन्त नदी पपाट लाभे ।
अलिना रमतालिनी शिलीन्ध्रे
सह सायन्तनदीपपाटलाभे ॥ ७२ ॥

अचिरांशुलतारुचिः इत्युपमाद्वयन्तथा रागमनुरागमिता प्राप्ता । इणः कर्त्तरि क्तः । रमणी रमणेन प्रियेणाङ्कमुत्सङ्गमनीयत नीता । नीहृकृषमथिवहिग्रहामिति नयतेर्द्विकर्म्मकता शेषम्पूर्व्ववत् । तोटकं वृत्तम् ॥ ७१ ॥

अथ द्वाभ्यां वर्षर्त्तुं वर्णयति । मुदमित्यादि । अब्दभुवां मेघप्रभवानां अपां लाभे मेघे वर्षति सतीत्यर्थः । सहसा मयूरामुद मानन्दमायन्तालभन्त । अय गतौ लुङि आडजादीनामित्याडा गमे वृद्धिः । नदी पपाट नद्यः प्रावहन्नित्यर्थः । अट पट गतौ लिट् । जातावेकवचनम् । अलिना भृङ्गेण सह सायन्तनः सायम्भवः । सायश्चिरमित्यादिना ट्युप्रत्ययः तुडागमश्च । सचासौ दीपश्च तद्वत्पाटलाभे पाटलप्रभे । इत्युपमालङ्कारः । तस्मिन् शिलीन्ध्रे कन्दलीकुसुमे अलिनी अरमत । अत्र मयूरमोदप्राप्त्याद्यनेक कर्त्तृकक्रियायौगपद्याद्भिन्नाधिकरणक्रियासमुच्चयरूपः समुच्चया लङ्कारभेदः । गुणक्रियायौगपद्यं समुच्चयइति सामान्यलक्षणम् औपच्छन्दसिकं वृत्तम् ॥ ७२ ॥

कुटजानीति । शिखरीन्द्रं समया रैवताद्रेः समीपे । अभितः परितः समयेत्यादिना द्वितीया । अवनौ प्रदेशे घनमदाभ्रमरा येषु तानि घनमदभ्रमराणि कुटजानि कुटजकुसुमानि वनौघेन

कुटजानि वीक्ष्य शिखिभिः शिखरीन्द्रं
समयावनौ घनमदभ्रमराणि ।
गगनं च गीतनिनदस्य गिरोच्चैः
समया वनौघनमदभ्रमराणि ॥ ७३ ॥

अभीष्टमासाद्य चिराय काले
समुद्धृताशं कमनी चकाशे ।
योषिन्मनोजन्मसुखोदयेषु
समद्धृताशङ्कमनीचकाशे ॥ ७४ ॥

पयःपूरेण नमन्त्यभ्राणि मेघा यस्मिन् तत् वनौघनमदभ्रम् । पयःकीलालममृतं जीवनं भुवनं वनमित्यमरः । गगनञ्च वीक्ष्य शिखिभिर्मयूरैर्गीतनिनदस्य गानध्वनेः समया तुल्यया । तुल्यार्थैरित्यादिना वैकल्पिकी षष्ठी । गिरा वाचा केकयेत्यर्थः । उच्चैरराणि रणितं । रण शब्दे भावे लुङ् चिणोलुक् । कुटजा वृत्तम् । सजसाभवेदिह सगौ कुटजाख्यमिति लक्षणात् ॥ ७३ ॥

अथ त्रिभिः शरदं वर्णयति । अभीष्टमित्यादि । कामयत इति कमनी कामयित्री । कम्रः कामयिताभीकः कमनः कामनोऽभिकइत्यमरः । कमेः कर्त्तरि ल्युटि ङीप् । योषित् । जातावेकवचनम् । अनीचाउन्नताः काशाश्रस्वबालायस्मिन् अनीचकाशे काले शरदीत्यर्थः । मनोजन्मसुखोदयेषु कामसुखाविर्भावेषु धृता आशा अभिलाषोयेन तं अभीष्टम्प्रियञ्चिराय चिरकालेन । चिराय चिररात्रायेत्यमरः । सम्यगुद्धृता उत्सृष्टा आशङ्का सङ्कोचोयस्मिन कर्म्मणि तत्समुद्धृताशङ्कं विस्रब्धं यथा तथा आसाद्य

स्तनयोः समयेन याङ्गनाना
मभिनद्धारसमा न सा रसेन ।
परिरम्भरुचिं ततिर्जलाना
मभिनद्धा रसमानसारसेन ॥ ७५ ॥

शाघ मुदा सह वर्त्तत इति समुत् सानन्दा सती चकाशे विललासे त्यर्थः । अत्र समुच्चकाशइति योषितः प्रियप्राप्तिनिमित्तहर्षाख्य भावनिबन्धनात्प्रेयोऽलङ्कारः । रसभावतदाभासतत्प्रकाशसमानानां निबन्धे रसवत्प्रेयऊर्ज्जस्विसमाहितानीति लक्षणात् । वृत्तमुप जातिः ॥ ७४ ॥

स्तनयोरिति । रसमानाः कूजनशीलाः । ताच्छील्यवयोवचन शक्तिषु चानशिति ताच्छील्ये चानश् प्रत्ययः । रसतेः परस्मैपदित्वा न शानच् प्रत्ययः । ते सारसाः पक्षिविशेषाः यस्मिन् तेन रसमान सारसेन समयेन शरत्कालेनेत्यर्थः सारसानां तत्रैव सम्भवात् । सारसो मैथुनी कामी गोनर्द्दः पुष्कराह्वयइति यादवः । अङ्गनानां स्तनयोर्या जलानां ततिः शारदोष्मजन्मा स्वेदोदविन्दु सन्दोहः अभितोनद्धाअभिनद्धा । नह्यतेरभिपूर्ब्बात्कर्म्मणि क्तः नहोधइति धत्वं । हारसमा मुक्ताहारतुल्या कुचमण्डलमण्डनाय मानेति भावः सा जलानां ततिः रसेन रागेण हेतुना बलीयसेति भावः परिरम्भरुचिमालिङ्गनेच्छां नाभिनत् न बिभेद । शारद स्वेदस्याप्यलङ्कारतया उद्दीपकस्याजुगुप्सितत्वान्निःसपत्नशृङ्गारा विजयन्तइत्यर्थः । अतएव रसनिबन्धनाद्रसवदलङ्कारः । लक्षण मुक्तं पूर्ब्बश्लोके । औपच्छन्दसिकं वृत्तम् ॥ ७५ ॥

जातप्रीतिर्या मधुरेणानुवनान्तं
कामे कान्ते सारसिका काकुरुतेन ।
तत्सम्पर्कम्प्राप्य पुरा मोहनलीलां
कामेकान्ते सा रसिका का कुरुते न ॥ ७६ ॥

कान्ताजनेन रहसि प्रसभं गृहीत
केशे रते स्मरसहासवतोषितेन ।
प्रेम्णा मनःसु रजनीष्वपि हैमनीषु
के मेरते स्म रसहासवतोषितेन ॥ ७७ ॥

जातेति । या स्त्री अनुवनान्तम् । विभक्त्यर्थेऽव्ययीभावः । मधुरेण श्राव्येण सारसिकाकाकुरुतेन सारस्य एव सारसिकाः सारसाङ्गनाः । कात्पूर्व्वस्येत्वम् । तासां काकुरुतेन विकृतशब्देन । काकुः स्त्रियां विकारोयः शोकभीत्यादिभिर्ध्वनेरित्यमरः । काकुश्च तद्रुतञ्च तेन । कामे कामकल्पे । सिंहोदेवदत्तइतिवद्गौणप्रयोगः । कान्ते प्रिये जातप्रीतिः जातस्नेहा अभूत् । रसिका रसवती राग वतीत्यर्थः । अतइनिठनाविति ठन्प्रत्ययः ॥ सा का स्त्री एकान्ते रहसि तस्य कान्तस्य सम्पर्कम्प्राप्य पुरा पुरुषप्रेरणात्पूर्व्वमेव कां मोहनलीलां सुरतक्रीडां न कुरुते सर्व्वापि स्त्री सर्व्वानपि सुरत विशेषान् कामतन्त्रप्रसिद्धान् विस्रब्धश्चकारेत्यर्थः । तेन शृङ्गारस्य परा काष्ठाप्राप्तेत्युम् । मत्तमयूरं वृत्तम् ॥ ७६ ॥

अर्थकेन हेमन्तमाह । कान्तेति । सहतइति सहः । पचाद्यच् । स्मरस्य सहः कामोद्दीपकइत्यर्थः । तेनासवेन तोषितः तेन स्मरसहासवतोषितेन अतएव रसहासावस्य स्तइति रसहास

गतवतामिव विस्मयमुच्चकै
रसकलामलपल्लवलीलया।
मधुकृतामसकृद्गिरमावली
रसकलामलपल्लवलीलया॥ ७८ ॥

क्ता रागहास्यवता अतएव प्रेम्णा मनस्सु पुंसां चित्तेषु उषितेन वसता। वसतेः कर्त्तरि क्तः वसतिक्षुधोरिडिति इडागमः। गति बुद्धीत्यादिसूत्रे चकाराद्वर्त्तमानार्थता। कान्तैव जनस्तेन कान्ता जनेन। जातावेकवचनम्। प्रसभं रहसि बलाद्गृहीतकेशे आकृष्ट शिरोरुहे रते सुरते हेमन्ते भवा हैमन्त्यस्तासु हैमनीषु अपि द्राघीयसीष्वपीति भावः। सर्वत्राण् च तलोपश्चेति हेमन्तशब्दा दण्प्रत्ययः तकारलोपश्च टिड्ढाणञित्यादिना ङीप्। रजनीषु के युवानः शेरते स्म स्वपन्ति स्म न केऽपीत्यर्थः। लट् स्मे इति भूते लट्। एतेनातिभूमिङ्गतः शृङ्गारइति व्यज्यते। वसन्त तिलका वृत्तम्॥ ७७॥

अथैकेन शिशिरं वर्णयति। गतवतामिति। असकलामल पल्लवलीलया असकला असमग्रविकासिनोऽमला निर्मलाश्च ये पल्लवास्तेषां लीला तया नृत्यरूपयेत्यर्थः विस्मयङ्गतवतामिव स्थितान्यसिवेत्युत्प्रेक्षा मधुकृतां मधुकराणां सम्बन्धिनी लवलीषु लताविशेषेषु लयोलयनं स्थितिर्यस्याः सा लवलीलया आवलिः पङ्क्तिः रसकलां रसेन मध्वास्वादेन कलामव्यक्तमधुराम्। ध्वनौ तु मधुरास्फुटे कल इत्यमरः। गिरं वाचमसकृदुच्चैरलपत्। मधुमदहेतुकस्य मधुकरालापस्य पल्लवलीलया जनितविस्मय

कुर्वन्तमित्यतिभरेण नगानवाचः
पुष्पैर्विराममलिनां च न गानवाचः ।
श्रीमान्समस्तमनुसानु गिराविहर्त्तुं
म्बिभ्रत्यचोदि स मयूरगिराविहर्त्तुम् ॥ ७९ ॥
इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
ऋतुवर्णनं नाम षष्ठः सर्गः ॥ ६ ॥

हेतुकत्वमुत्प्रेक्ष्यत इति गुणहेतूत्प्रेक्षा । द्रुतविलम्बितं वृत्तम् ॥ ७८ ॥

कुर्वन्तमिति । इतीत्थं पुष्पैरेवातिभरेण महाभरेण तत्कृतेन वा गौरवेण नगान्वृक्षानवाञ्चन्तीत्यवाचोनम्रान् । अञ्चेरनपूर्वा इत्विगित्यादिना क्विन्प्रत्ययः । कुर्वन्तमलिनां गानवाचोगीतध्वने र्झङ्कारस्य च न विराममविराममसमाप्तिं कुर्वन्तं समस्तमृतुं सर्वान्ऋतून् अनुसानु सानुष्वित्यर्थः। विभक्त्यर्थेऽव्ययीभावः । बिभ्रति बिभ्राणे इह गिरौ रैवतकाद्रौ विहर्त्तुं क्रीडितुं श्रीमान्स हरिः मयूरगिरा केकया अचोदि प्रेरितः । भगवन्निह विहर ऋतुगणमनुगृहाणेति प्रार्थितइवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । वृत्तमुक्तम् ॥ ७९ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्ये षष्ठः सर्गः ॥ ६ ॥

---

अनुगिरमृतुभिर्वितायमाना
मथ स विलोकयितुं वनान्तलक्ष्मीम्
निरगमदभिराद्धुमादृतानां
भवति महत्सु न निष्फलः प्रयासः ॥ १ ॥

इत्थं ऋतुगणप्रादुर्भावमभिधाय तत्फलतया भगवतः सानुचरस्य वनविहारलीलावर्णनमारभते। अनुगिरमिति । अथर्त्तुप्रादुर्भावानन्तरं स हरिः गिरावित्यनुगिरं। विभक्त्यर्थेऽव्ययीभावः। गिरेश्च सेनकस्येति समासान्तः। ऋतुभिर्वितायमानां वितन्यमानां । तनोतेः कर्म्मणि लटः शानजादेशः। तनोतेर्यकीति वैभाषिक आकारादेशः। वनान्तलक्ष्मीं विलोकयितुं निरगमत् निर्गतः। पुषादीत्यादिना गमेर्लुङि च्लेरङादेशः। ऋतुगणभक्तिं स्वीकर्त्तुमिति भावः। तथाहि। अभिराद्धुमाराधयितुमादृतानामादरं कुर्व्वतामास्थावतामित्यर्थः। कर्त्तरि क्तः। प्रयासः सेवायासः महत्सु विषये निष्फलो न भवति नहि भक्तानुकम्पिनो महान्तस्तत्सेवां व्यर्थयन्तीति भावः। अतो हरेरप्यृतुगणानुग्रहणार्थं निर्गमो युक्त इति । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । सामान्यविशेषकार्य्यकारणभावाभ्यां निर्द्दिष्टप्रकृतार्थसमर्थनादर्थान्तरन्यास इति सर्व्वस्वसूत्रम्। अत्र सर्गे पुष्पिताग्रा वृत्तम्। अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रेति लक्षणात् ॥ १ ॥

दधतीति। यदवो यादवाः। व्याख्यातं चैतत्। बह्वीर्बह्वः बहुविधा इत्यर्थः । बह्वादिभ्यश्चेति विकल्पादीकारः । सुमनसः पुष्पाणि । स्त्रियः सुमनसः पुष्पमित्यमरः। दधति दधन्ति। वा नपुंसकस्येति

दधति सुमनसो वनानि बह्वी-
र्युवतियुता यदवः प्रयातुमीषुः ।
मनसिशयमहास्त्रमन्यथामी
न कुसुमपञ्चकमप्यलं विसोढुम् ॥ २ ॥

अवसरमधिगम्य तं हरन्त्यो
हृदयमयत्नकृतोज्ज्वलस्वरूपाः ।
अवनिषु पदमङ्गनास्तदानीं
न्यदधत विभ्रमसम्पदोऽङ्गनासु ॥ ३ ॥

अभ्यस्तात्क्तुर्वैकल्पिकोनुम्प्रतिषेधः । वनानि युवतियुताः स्त्रीसमेताः एव प्रयातुमीषुरिच्छन्ति स्म । अत्र हेतुमाह । अन्यथा युवतिजनाभावे अमी यदवा मनसि शेते इति मनसिशयः कामः । अधिकरणे शेतेरित्यच्प्रत्ययः हलदन्तात्सप्तम्याः संज्ञायामित्यलुक् । तस्य महास्त्रभूतं कुसुमपञ्चकमपि पञ्चापि कुसुमानीत्यर्थः । पञ्चानां सङ्घः पञ्चकं । सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति कप्रत्ययः । विसोढुं नालं न शक्ताः । सकलसुमनसां सामर्थ्ये तत्रारविन्दादीनामेव पञ्चबाणबाणत्वप्रमाणसिद्धत्वादिति भावः । अतो युवतिभिः सह प्रयाणं युक्तमिति वाक्यार्थेन वाक्यार्थसमर्थनाद्वाक्यार्थसमर्थनरूपकाव्यलिङ्गमलङ्कारः । अरविन्दमशोकञ्च चूतञ्च नवमल्लिका नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः ॥२॥

अवसरमिति । तमवसरं सहजिगमिषाकालं अधिगम्य हृदयं हरन्त्यो हृदयङ्गमा भवन्त्यः सर्व्वं हि प्रार्थ्यमानमेव प्रियम्भवतीत्यर्थः यत्नेन कृतं न भवतीत्ययत्नकृतं तथाप्युज्ज्वलं स्वरूपं

नखरुचिरचितेन्द्रचापलेखं
ललितगतेषु गतागतं दधाना ।
मुखरितवलयं पृथौ नितम्बे
भुजलतिका मुहुरस्खलत्तरुण्याः ॥ ४ ॥

यासान्ताः स्वभावसुन्दरमूर्त्तय इत्यर्थः अङ्गनास्तदानीन्तस्मिन्नव सरे अवनिषु पदं न्यदधत निहितवत्यः पादचारेणैव चेलु रित्यर्थः । दधातेर्लङ्यात्मनेपदे झ्वनत इति झस्यादादेशः । अङ्गनासु विभ्रमसम्पदो विलाससम्पदः पदं न्यदधत तदानीं विलासाः प्रवृत्ता इत्यर्थः । अत्राङ्गनानां विलाससम्पदां चोभयीना मपि प्रकृतानामेव हृदयहरणादिना वर्णनासाम्येनौपम्यस्य गम्य मानत्वात्केवलप्रकृतविषया तुल्ययोगितालङ्कारः । वाच्यभेदेनाप्य ङ्गनाविलाससम्पदामुत्तरोत्तरस्य पूर्व्वपूर्व्वविशेषकत्वावगमादेका वलीभेदोव्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ३ ॥

न्यदधत विभ्रमसम्पदोऽङ्गनास्वित्युक्तं ता एव प्रपञ्चयति । नखेति । ललितगतेषु मन्दगमनेषु नखानां रुचिभिः प्रभाभिः रचिता इन्द्रचापलेखा यस्मिन् कर्म्मणि तद्यथा तथा गतागतं याता याते । विप्रतिषिद्धं चानधिकरणवाचीति वैभाषिको द्वन्द्वैक वद्भावः। दधाना तरुण्याः भुजलतिका मुखराः कृता इति मुखरिताः ध्वनितावलयायस्मिन् कर्म्मणि तद्यथा तथा । कटकोवलयो ऽस्त्रियामित्यमरः । पृथौ नितम्बे मुहुरस्खलत् चस्खाल । अत्र नख रुचीत्यालम्बनगुण उक्तः । गतागतं दधाना अस्खलदिति तच्चेष्टा । मुखरितवलयमिति तदलङ्कृतिः । तटस्थास्तु कावसन्तादयः

अतिशयपरिणाहवान् वितेने
बहुतरमर्पितरत्नकिङ्किणीकः ।
अलघुनि जघनस्थलेऽपरस्या
ध्वनिमधिकं कलमेखलाकलापः ॥ ५ ॥
गुरुनिविडनितम्बबिम्बभारा
क्रमणनिपीडितमङ्गनाजनस्य ।
चरणयुगमसुस्रुवत्पदेषु
स्वरसमसक्तमलक्तकच्छलेन ॥ ६ ॥

अन्यत्र विस्तारतइति चतुर्विधोऽप्युद्दीपनक्रमउक्तः । उक्तञ्च आलम्बनगुणास्चैव तच्चेष्टा तदलङ्कृतिः । तटस्थाश्चेति विज्ञेयाः चतुर्थ्योद्दीपनक्रमइति । तत्रालम्बनं रसस्य समवायिकारणं नायिका नायकश्च । तद्गुणा रूपलावण्यादिः । तच्चेष्टा भावहावादिः अन्यत्सुगमम् । एवमुत्तरत्रापि ॥ ४ ॥

अतिशयेति । अतिशयेन परिणाहवानतिविशालइत्यर्थः । अन्यथा तज्जघनस्यापर्य्याप्तेरिति भावः । परिणाहोविशालतेत्यमरः । उपसर्गादसमासेऽपि णोपदेशस्येति णत्वम् । बहुतरमर्पिताआहिता रत्नानां किङ्किण्योयस्मिन्सः । नद्यृतश्चेति कप्प्रत्ययः । कलोमधुरारावी मेखलाकलापोऽपरस्याः स्त्रियः अलघुनि जघनस्थले अधिकं ध्वनिं वितेने । तदलङ्कृतिरियम् ॥ ५ ॥

गुर्विति । गुरु गुरुत्वगुणयुक्तं निविडं दृढं च यन्नितम्बबिम्बन्तदेव भारस्तस्याः क्रमणेनाधिष्ठानेन निपीडितं निष्पीडितं अङ्गनाजनस्य चरणयुगं कर्तृ पदेषु पादन्यासस्थानेषु अलक्तकच्छलेन

तव सपदि समीपमानये ता
मह्मिति तस्य मयाग्रतोऽभ्यधायि।
अतिरभसकृतालघुप्रतिज्ञा
मनृतगिरं गुणगौरि मा कृथा माम् ॥७॥

लाक्षारसमिषेण स्वरसं स्वद्रवमेव। गुणो रागे द्रवे रस इत्यमरः। अथक्रमविच्छिन्नं यथा तथा असुस्रवत् स्रवति स्म। स्रवतेः चर णार्थाल्लुङि णिश्रीत्यादिना चङि धातोरुवङादेशः। द्रवद्रव्य कर्त्तृकएवायमकर्म्मकः अन्यकर्त्तृकत्वे तु सकर्म्मकः। अत्रालक्तक च्छलेनेत्यलक्तापह्नवेन स्वरसत्वारोपाच्छलादिशब्दैरसत्यत्वप्रति पादनरूपोऽपह्नवालङ्कारः ॥ ६ ॥

अथ कस्याश्चित्सख्याः कुपितनायिकानुनयवचनं पञ्चभिः कुलकेनाह। तवेत्यादि। तां मत्सखीं सपदि तव समीपमहमानये आनयिष्यामि। भविष्यत्सामीप्ये वर्त्तमानप्रत्ययः कर्त्तुरभिप्राये आत्मनेपदं। इति मया तस्याग्रतोऽभ्यधायि अभिहितं। दधातेः कर्म्मणि लुङ् आतो युक् चिण्कृतोरिति युगागमः। हे गुणगौरि गुणैः सौभाग्यदाक्षिण्यादिभिर्गौरि पार्वती।त रूपकम् अतिरभसे नातित्वरया कृता अलघुर्महती प्रतिज्ञा त्वदानयनार्था यया तां मामनृतगिरमसत्यवाचं मा कृथाः मा कार्षीः मद्वचनं सर्वथा कर्त्तव्यमित्यर्थः। करोतेः लुङि थास् न माङ्योगे इत्यडागम प्रतिषेधः ॥ ७ ॥

ननु मत्प्रतिज्ञापि दुस्त्याज्येति विप्रतिषेधमाशङ्क्याह। न चेति। हे सुतनु भ्रूभाङ्गि। दीर्घान्तोत्तरपदात्सम्बुद्धिः अन्यथा गणः

न च सुतनु न वेद्मि यन्महीया
नसुनिरसस्तव निश्चयः परेण ।
वितथयति न जातु मद्वचोऽसा
विति च तथापि सखीषु मेऽभिमानः ॥ ८॥

सततमनभिभाषणं मया ते
परिपणितं भवतीमनानयन्त्या ।
त्वयि तदिति विरोधनिश्चितायां
भवति भवत्वसुहृज्जनः सकामः ॥ ९ ॥

स्यात् । अहं न वेद्मीति न किन्तु वेद्म्येवेत्यर्थः । किन्तद्वेत्सीत्यत आह । महीयान्महत्तरस्तव निश्चयः त्वदनैक्ये प्रतिज्ञापरेण जनान्तरेण सुनिरसः सुखमोच्यः । अस्यतेः खल्प्रत्ययः । स न भवतीत्यसुनिरसइति यत् तदित्यर्थलभ्यं । उद्देश्येन विधेयाचेपाद्यच्छब्दस्योत्तरवाक्यस्थत्वाच्च न पूर्ब्ववाक्ये तच्छब्दप्रयोगइति निबन्धः । तथापि विदितत्वेऽपि असौ मत्सखी जातु कदाचिदपि मद्वचोन वितथयति नान्टतीकरोतीति सखीषु मध्ये मेऽभिमानः स्वप्रतिज्ञा भङ्गेऽपि मत्प्रतिज्ञामेव पालयसीत्यहङ्कारान्निःशङ्कम्प्रतिज्ञातमित्यर्थः ॥ ८ ॥

सततमिति । भवतीन्त्वामनानयन्त्या आनयितुमशक्नुवत्या इत्यर्थः । मया सततं सदा ते तव । कर्म्मणि षष्ठी । अनभिभाषणमसंभाषणं परिपणितं । भवतीति भातेर्डवतुरित्याणादिकोडवतुप्रत्ययः उगितश्चेति ङीप् । तस्याः सम्बुद्धिर्हे भवति सुभगे त्वयि तदिति तदसम्भाषणमस्तु इति विरोधनिश्चितायां

तव सपदि समीपमानये ता
मह्मिति तस्य मयाग्रतोऽभ्यधायि ।
अतिरभसकृतालघुप्रतिज्ञा
मनृतगिरं गुणगौरि मा कृथामाम् ॥७॥

लाक्षारसमिषेण स्वरसं स्वद्रवमेव । गुणेरागे द्रवे रसइत्यमरः । असक्तमविच्छिन्नं यथा तथा असुस्रवत् स्रवति स्म । स्रवतेः क्षर णार्थाल्लुङि णिश्रीत्यादिना चङि धातोरुवङादेशः । द्रवद्रव्य कर्त्तृकएवायमकर्म्मकः अन्यकर्त्तृकत्वे तु सकर्म्मकः । अत्रालक्तक च्छलेनेत्यलक्तापह्नवेन स्वरसत्वारोपाच्छलादिशब्दैरसत्यत्वप्रति पादनरूपोऽपह्नवालङ्कारः ॥ ६ ॥

अथ कस्याश्चित्सख्याः कुपितनायिकानुनयवचनं पञ्चभिः कुलकेनाह । तवेत्यादि । तां मत्सखीं सपदि तव समीपमहमानये आनयिष्यामि । भविष्यत्सामीप्ये वर्त्तमानप्रत्ययः कर्त्तुरभिप्राये आत्मनेपदं । इति मया तस्याग्रतोऽभ्यधायि अभिहितं । दधातेः कर्म्मणि लुङ् आतोयुक् चिण्कृतोरिति युगागमः । हे गुणगौरि गुणैः सौभाग्यदाक्षिण्यादिभिर्गौरि पार्वती।त रूपकम् अतिरभसे नातित्वरया कृता अलघुर्महती प्रतिज्ञा त्वदानयनार्था यया तां मामनृतगिरमसत्यवाचं मा कृथाः मा कार्षीः मद्वचनं सर्वथा कर्त्तव्यमित्यर्थः । करोतेः लुङि थास् न माङ्योगे इत्यडागम प्रतिषेधः ॥ ७ ॥

ननु मत्प्रतिज्ञापि दुस्त्याज्येति विप्रतिषेधमाशङ्क्याह । न चेति । हे सुतनु सुभ्रुभाङ्गि । दीर्घान्तोत्तरपदात्सम्बुद्धिः अन्यथा गणः

न च सुतनु न वेद्मि यन्महीया
न्सुनिरसस्तव निश्चयः परेण।
वितथयति न जातु मद्वचोऽसा
विति च तथापि सखीषु मेऽभिमानः ॥८॥
सततमनभिभाषणं मया ते
परिपणितं भवतीमनानयन्त्या।
त्वयि तदिति विरोधनिश्चितायां
भवति भवत्वसुहृज्जनः सकामः ॥ ९ ॥

स्यात्। अहं न वेद्मीति न किन्तु वेद्मि एवेत्यर्थः। किन्तद्वेत्सीत्यत आह। महीयान्महत्तरस्तव निश्चयः त्वदनैक्ये प्रतिज्ञापरेण जनान्तरेण सुनिरसः सुखमोच्यः। अस्यतेः खल्प्रत्ययः। स न भवतीत्यसुनिरसइति यत् तदित्यर्थलभ्यं। उद्देश्येन विधेयाक्षेपाद्यच्छब्दस्योत्तरवाक्यस्थत्वाच्च न पूर्ववाक्ये तच्छब्दप्रयोगइति निबन्धः। तथापि विदितत्वेऽपि असौ मत्सखी जातु कदाचिदपि मद्वचोन वितथयति नान्टतीकरोतीति सखीषु मध्ये मेऽभिमानः स्वप्रतिज्ञा भङ्गेऽपि मत्प्रतिज्ञामेव पालयसीत्यहङ्कारान्निःशङ्कम्प्रतिज्ञातमित्यर्थः॥ ८ ॥

सततमिति। भवतीन्त्वामनानयन्त्या आनयितुमशक्नुवत्या इत्यर्थः। मया सततं सदा ते तव। कर्म्मणि षष्ठी। अनभिभाषणमसंभाषणं परिपणितं। भवतीति भातेर्डवतुरित्याणादिकोडवतुप्रत्ययः उगितश्चेति ङीप्। तस्याः सम्बुद्धिर्हे भवति सुभगे त्वयि तदिति तदसम्भाषणमस्तु इति विरोधनिश्चितायां

गतधृतिरवलम्बितुं बतासू-
ननलमनालपनादहं भवत्याः ।
प्रणयिनि यदि न प्रसादबुद्धि-
र्भव मम मानिनि जीविते दयालुः ॥ १० ॥

निश्चितविरोधायां सत्यां । वाहिताग्न्यादिष्विति विकल्पान्निष्ठायाः परनिपातः । असुहृज्जनो विपक्षवर्गः सकामः फलितमनोरथो भवतु भवेत् । प्राप्तकाले लोट् । अस्मद्विरोधकाङ्क्षिणामयमानन्दकालः प्राप्त इत्यर्थः ॥ ९ ॥

न केवलमावयोर्विरोधः प्राणहानिरपि मम स्यादित्याह । गतेति । गतधृतिरधीरा अहम्भवत्यास्तवानालपनादसम्भाषणादालपनं विहायेत्यर्थः । ल्यब्लोपे पञ्चमी । असून् प्राणानवलम्बितुन्धारयितुमनलमशक्ता । अलम्भूषणपर्याप्तिशक्तिवारणवाचकमित्यमरः । बतेति खेदे अतएव हे मानिनि प्रणयिनि प्रिये प्रसादबुद्धिरनुग्रहबुद्धिर्न यदि नास्ति चेत्तथापि मम जीविते दयालुर्भव । स्पृहीत्यादिना आलुच् प्रत्ययः । स धूर्त्तोऽपि मत्प्राणत्राणार्थमनुग्राह्य इति भावः ॥ १० ॥

प्रियमिति । इतीत्थं नितान्तमागसोऽन्यासङ्गापराधस्य स्मरणेन सरोषे अतएव कषाये लोहिते कृते कषायिते आयते चाक्षिणी यस्याः सा तथोक्ता । निर्यासे च कषायोऽथ सौरभे लोहिते ऽन्यवदिति विश्वः । वनिता नायिका चरणगतायाः पूर्वोक्तवाक्यान्ते प्रणतायाः सख्यावचसोऽनुरोधादनुल्लङ्घनात्किल । किलेत्यपरमार्थे । वस्तुतस्तु अनुरागादेवेति भावः । प्रियं कथमपि

प्रियमिति वनिता नितान्तमागः
स्मरणसरोषकषायितायताक्षी ।
चरणगतसखीवचोऽनुरोधात्
किल कथमप्यनुकूलयाञ्चकार ॥ ११ ॥

द्रुतपदमिति मा वयस्य यासी
र्ननु सुतनुं परिपालयानुयान्तीम् ।
न हि न विदितखेदमेतदीय
स्तनजघनोद्वहने तवापि चेतः ॥ १२ ॥

कथञ्चिदनुकूलयाञ्चकार अभिमुखीचकार अनुजग्राहेत्यर्थः । एषा खण्डिता नायिका । ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायितेति दशरूपकलक्षणात् । अत एव कविना आगःस्मरणसरोषकषायिताक्षीत्युक्तं । एषा चासंभाषणचिन्ताखेदाश्रुनिश्वासाद्यनुभाववती ॥ ११ ॥

अथ काचित्सखी कञ्चिदग्रे शीघ्रगामिनं दृग्मेनाह । द्रुतेति । हे वयस्य सखे इतीत्थं द्रुतपदं शीघ्रपदक्रमं यथा तथा मा यासीः मा गमः । यातेर्लुङि न माङ्योगइत्यट्प्रतिषेधः । अनुयान्तीमनुगच्छन्तीं सुतनुं सुभाङ्गीं प्रियामनुपालय प्रतीक्षस्व । असावपि शीघ्रमायातु तत्राह । न हीति । तव चेतोऽपि एतदीयस्तनजघनोद्वहने विदितखेदमनुभूतखेदन्नेति न किन्तु वेत्त्येवेत्यर्थः । अतः कथं शीघ्रमायास्यतीति भावः । सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधाविति वामनः ॥ १२ ॥

इति वदति सखीजनेऽनुरागा
द्दयिततमामपरश्चिरं प्रतीक्ष्य ।
तदनुगमवशादनायतानि
न्यधित मिमान इवावनिम्पदानि ॥ १३ ॥

यदि मयि लघिमानमागताया
स्तव धृतिरस्ति गतास्मि सम्प्रतीयम् ।
अनिभृतपदपातमापपात
प्रियमिति कोपपदेन कापि सख्या ॥ १४ ॥

इतीति ॥ सखीजने इति वदति सति अपरः कश्चिद्दयिततमां अनुरागात् स्नेहाच्चिरं प्रतीक्ष्य तदनुगमवशात् तस्याः प्रियायाः कर्त्र्याः अनुगमः पश्चाद्गमनं तस्य वशादनुसारादवनिं मिमानः मानं कुर्वाण इवेत्युत्प्रेक्षा । माङो लटः कर्त्तरि शानजादेशः श्लाविति द्विर्भावः ॥ अनायतान्यनन्तरालानि पदानि न्यधित निहितवान् । धाञो लुङि तङ् स्थाघ्वोरिच्चेतीकारः सिचः कित्त्वान्न गुणः ह्रस्वादङ्गादिति सकारलोपः । एषा च नायिका स्वाधीनपतिका । स्वाधीनपतिका सा तु या न मुञ्चति वल्लभमिति लक्षणात् । हृष्टा चेयम् ॥ १३ ॥

अथ काचित्पुरः प्रयातप्रियमेलनाय शीघ्रानुधावनं प्रार्थयमानां सखीमाह । यदीति । हे सखि मयि लघिमानमागतायां स्वयङ्गमनेन लाघवं प्राप्तायान्तव धृतिरस्ति यदि सन्तोषोभवति चेत् । धृतिः सन्तोषधैर्ययोरित्यमरः । इयमेतदवस्थैव सम्प्रत्यस्मिन् क्षण

अविरलपुलकः सह व्रजन्त्याः
प्रतिपदमेकतरस्तनस्तरुण्याः ।
घटितविघटितः प्रियस्य वक्ष-
स्तटभुवि कन्दुकविभ्रमं बभार ॥ १५ ॥

एव गतास्मि इति वदन्तीति शेषः। इतिना गम्यमानार्थत्वादप्रयोगः अन्यथा पौनरुक्त्यादित्यालङ्कारिकाः । सख्या सह कोपपदेन कोपव्याजेन वस्तुतस्तु रागादेवेति भावः व्याजोऽपदेशो लक्ष्यञ्च निमित्तं व्यञ्जनम्पदमिति चामरः। काचिन्नायिका द्रुततराः शीघ्रतराः पदपाताः पादन्यासा यस्मिन् कर्म्मणि तद्यथा तथा प्रियं वल्लभ मापपात अनुधावति स्म। एषा च स्वयम्प्रवृत्ता स्वलाघवशङ्कितया पूर्व्वं निर्वासितप्रिया अथेदानीं स्वयम्प्रवृत्तेः पश्चात्तप्ता चेति गम्यते। अतः कलहान्तरिता । कोपात्कान्तं परानुद्य पश्चात्तापसमन्वितेति लक्षणात् ॥ १४ ॥

अविरलेति । सह व्रजन्त्याः पार्श्वमाश्रित्य गच्छन्त्या इत्यर्थः तरुण्याः सम्बन्धी अविरलपुलकः प्रियाङ्गसङ्गात्सान्द्ररोमाञ्चः एकतरोऽन्यतरः द्वयोरन्यः सन्निकृष्टइति भावः। एकाच्च प्राचामिति द्वयोरेकस्य निर्द्धारणे तरच् प्रत्ययः । स्तनः प्रियस्य वक्षस्तट मिव तस्य भूः प्रदेशस्तस्यां वक्षस्तटभुवि प्रतिपदं घटितविघटितः संयुक्तवियुक्तः पतितोत्पतितः सन्निति यावत्। विशेषणयोरपि मिथो गुणप्रधानभावविवक्षया विशेषणं विशेष्येण बहुलमिति समासः। कन्दुकविभ्रमङ्कन्दुकशोभाम् । गेन्दुकः कन्दुकइत्यमरः। बभार। अन्यविभ्रमस्यान्यसम्बन्धायोगात्सादृश्याक्षेपे निदर्शना। एषा

अशिथिलमपरावसज्य कण्ठे
दृढपरिरब्धबृहद्वहिस्तनेन ।
हृषिततनुरुहा भुजेन भर्त्तु
र्मृदुममृदु व्यतिविद्धमेकबाहुम् ॥ १६ ॥

मुहुरसुसममाघ्नती नितान्तं
प्रणदितकाञ्चि नितम्बमण्डलेन ।
विषमितपृथुहारयष्टि तिर्य्यं
कुचमितरत्तदुरःस्थले निपीड्य ॥ १७ ॥

च प्रियपार्श्वगामिनी । इतः प्रभृति मदनरसेत्यतः प्राग्वक्ष्यमाणाः षट् नायिकाः स्वाधीनपतिकाः हृष्टाः प्रगल्भाश्चेत्यनुसन्धेयम् ॥ १५ ॥

अथापरस्याश्चपरङ्गतिविशेषं विशेषकेणाह । अशिथिलमित्यादि । अपरा स्त्री दृढं परिरब्धोगृहीतोबृहद्वहिस्तनोयेन तेन हृषिता न्युदञ्चितानि तनुरुहि रोमाणि यस्य तेन पुलकितेनेत्यर्थः । क्तिवन्तोत्तरपदोबहुव्रीहिः हृषेर्लोमस्वितीडागमः । भजेन भर्त्तु र्वामबाहुना अमृदु गाढं यथा तथा व्यतिविद्धं व्यतिषञ्जितं मृदु कोमलमेकबाहुन्निजदक्षिणबाहुम्भर्त्तुः कण्ठे अशिथिलं दृढम वसज्यासज्य जगामेति भाविना सम्बध्यते ॥ १६ ॥

मुहुरिति । पुनः किं कृत्वा नितम्बमण्डलेन करणेन नितान्तमतिशयेन प्रणदिता प्रकर्षेण नदन्ती काञ्ची यस्मिन् कर्म्मणि तद्यथा तथा । उपसर्गादसमासेऽपि णोपदेशस्येति णत्वम् । मुहुरसुसमं प्राणेशमाघ्नती ताडयन्ती । हन्तेराङ्पूर्व्वाल्लटः शत्रादेशे ङीप् सकर्म्मकत्वात् न आङोयमहनइत्यात्मनेपदम् । विषमिता विषमीकृता

गुरुतरकलनूपुरानुनादं
सललितनर्त्तितवामपादपद्मा ।
इतरदनतिलोलमादधाना
पदमथ मन्मथमन्थरं जगाम ॥ १८ ॥

॥ विशेषकम् ॥

लघुललितपदन्तदंसपीठ
द्वयनिहितोभयपाणिपल्लवान्या ।
सकठिनकुचचूचुकप्रणोदं
प्रियमबला सविलासमन्वियाय ॥ १९ ॥

पृथुहारयष्टिर्यस्मिन् कर्म्मणि तद्यथा तथा इतरं पूर्व्वश्लोकोक्तवद्भिः स्तनादन्यन्दक्षिणमित्यर्थः कुचन्तस्य भर्त्तुरुरःस्थले तिर्यक् निपीड्य पूर्व्ववत्सम्बन्धः ॥ १७ ॥

गुरुतरेति । पुनर्गुरुतरः सान्द्रतरः कलोमधुरस्य नूपुरस्यानुनादोध्वनिर्यस्मिन् कर्म्मणि तद्यथा तथा सललितं सलीलं नर्त्तितं व्यापारितं वामं सव्यम्पादपद्मं यया सा इतरद्दक्षिणम्पदमनतिलोलमर्द्धचरणस्खलनादनतिचपलं यथा तथा आदधाना निक्षिपन्ती सती मन्मथेन मन्थरमलसञ्जगाम । एषा च पार्श्वगामिनी ॥१८॥

अथान्यासामप्येकैकेन गतिविशेषमाह । लघ्वित्यादि अन्या अबला स्त्री तस्य प्रियस्यांसौ पीठे इव तयोर्द्वये निहितावुभौ पाणिपल्लवौ यया सा सती । उभादुदात्तोनित्यमिति ग्रहणस्येद प्रयोजनं वृत्तिविषये उभशब्दस्य प्रयोगोमाभूत् उभयशब्दस्यैव

जघनमलघुपीवरोरु कृच्छ्रा
दुरुनिबिरीसनितम्बभारखेदि ।
दयिततमशिरोधरावलम्बि
स्वभुजलताविभवेन काचिदूहे ॥ २० ॥

अनुवपुरपरेण बाहुमूल
प्रहितभुजाकलितस्तनेन निन्ये ।
निहितदशनवाससा कपोले
विषमवितीर्णपदं बलादिवान्या ॥ २१ ॥

यथा स्यादित्युभयत्रेत्यादि भवतीति । लघुनी द्रुते ललिते च पदे यस्मिन् कर्मणि तद्यथा तथा कठिनाभ्यां कुचचूचकाभ्यां स्तनाग्राभ्यां यः प्रणोदो निपीडनन्तेन सह यथा तथा । चूचुकन्तु कुचाग्रं स्यादित्यमरः । तेन सहेत्यादिना समासे वोपसर्जन स्येति सहशब्दस्य सभावः णोपदेशत्वात्प्रणोद इति णत्वं । सविलासं च प्रियमन्वियायानुजगाम । एषा पृष्ठगामिनी ॥ १९ ॥

जघनमिति । काचित् स्त्री अलघु गुरु पीवरौ पीनौ चारू यस्य तत् उरुर्महान् निबिरीसो निबिडः । निबिडं निबिरीसं च दृढं गाढं प्रचक्षते इति वैजयन्ती । नेर्बिड्जिरीसचाविति निशब्दादिरीसच् प्रत्ययः । स च यो नितम्बः स्त्रीकटिपश्चाद्भागः । पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुर इत्यमरः । स एव भार स्तेन खिद्यन्ति इति तथोक्तम् । आभीक्ष्ण्ये णिनिः । जघनं कटीपुरोभागं दयिततमस्य शिरोधरायां ग्रीवायामवलम्बिन्यो र्लम्बमानयोः स्वभुजलतयोर्विभवेन सामर्थ्येन कृच्छ्रादूहे उवाह ।

अनुवनमसितभ्रुवः सखीभिः
सह पदवीमपरः पुरोगतायाः ।
उरसि सरसरागपादलेखा
प्रतिमतयानुययावसंशयानः ॥ २२ ॥

वहेः स्वरितेत्त्वात्कर्त्रभिप्राय आत्मनेपदम् । द्वयञ्च पृष्ठगामिनी प्रियकण्ठावलम्बा ॥ २० ॥

अनुवपुरिति । अन्या स्त्री वपुषः पश्चादनुवपु: स्त्रीपृष्ठभाग: । अव्ययं विभक्तइत्यादिना पश्चादर्थेऽव्ययीभावः । बाहुमूलयो: स्त्रीकचयो: प्रहितावधःप्रसारितौ भुजौ ताभ्यां आकलितस्तनेन गृहीतस्तनेन कपोले निहितदशनवाससा न्यस्ताधरेण किञ्चिदा वृत्तमुख्याः सत्याः कपोलं चुम्बतेत्यर्थः अपरेण कामिना विषम श्रियाङ्घ्रिसङ्घर्षात् श्लिष्टं वितीर्णपदं न्यस्ताङ्घ्रि यथा तथा बला दिव निन्ये नीता आरोप्य नीयमानेव गमयाञ्चक्रइत्यर्थः । एषा पुरोगामिनी ॥ २१ ॥

अनुवनमिति । अपरः कामी अनुवनं वनं प्रति सखीभिः सह पुरोगतायाः असितभ्रुवः स्वकान्तायाः पदवीमुरसि वक्षसि सरसं आर्द्रः रागोलाक्षारञ्जनं यस्य तस्य पादस्य या रेखा विन्यासः सा प्रतिमा उपमानं यस्याः सा तत्प्रतिमा तस्य भावस्तत्ता तया तत्सदृशत येत्यर्थः असंशयानोऽसन्दिहानः । शीङोलटः कर्त्तरि शानजा देशः । अनुययौ । अत्र पादरेखाप्रतिमतयेति सादृश्यवस्तुना सुरत कालीनं पादताडनं वस्तु सरागपदार्थमहिम्ना प्रतीयतइति पदगतः स्वतःसिद्धार्थशक्तिमूलोवस्तुध्वनिः संलक्ष्यक्रमध्वनेभेदः ॥२२ ॥

मदनरसमहौघपूर्णनाभी
ह्रदपरिवाहितरोमराजयस्ताः ।
सरित इव सविभ्रमप्रयात
प्रणदितहंसकभूषणा विरेजुः ॥ २३ ॥

श्रुतिपथमधुराणि सारसाना
मनुनदि शुश्रुविरे रुतानि ताभिः ।
विदधति जनतामनःशरव्य
व्यधपटुमन्मथचापनादशङ्काम् ॥ २४ ॥

मदनेति । मदनस्य रसः शृङ्गारः अन्यत्र रसोजलं तस्य महौघेन महापूरेण पूर्णानाभ्यएव ह्रदास्तेषां परिवाहाः कृताः परिवाहिताजलोच्छ्वासीकृताः रोमराजयोयासान्ताः । जलोच्छ्वासाः परीवाहाइत्यमरः । सरिज्जलानि ह्रदानापूर्य परितः उच्छ्वसन्तीति प्रसिद्धिः । सविभ्रमैः सविलासैः प्रयातैः प्रकृष्टगमनैः प्रणदिताः शिञ्जिताः ये हंसकाः पादकटकाः । हंसकाः पादकटकाइत्यमरः । अन्यच्च हंसाएव हंसकाः मरालास्तएव भूषणानि यासान्ताः स्त्रियः सरितइव विरेजुः । मदनरसपूर्णेत्यनेन नाभीनां तदुद्बोधकत्वं व्यज्यते । परिवाहितरोमराजयइति रोमराजीनां परिवाहत्वरूपणान्नाभ्यएव ह्रदाइति रूपकाश्रयणान्ताः सरितएवेति श्लिष्टविशेषणेयमुपमाश्लेषएवेत्यन्ये ॥ २३ ॥

श्रुतिपथेति । अनुनदि नदीनां समीपे । समीपार्थेऽव्ययीभावः । अव्ययीभावश्चेति नपुंसकत्वे ह्रस्वत्वम् । ताभिः स्त्रीभिः जनानां समूहोजनता । ग्रामजनेत्यादिना सामूहिकस्तल् प्रत्ययः । तस्याः

मधुमथनवधूरिवाह्वयन्ति
भ्रमरकुलानि जगुर्यदुत्सुकानि ।
तदभिनयमिवावलिर्वनाना
मतनुत नूतनपल्लवाङ्गुलीभिः ॥ २५ ॥

मनांसि एव शरव्यं लक्ष्यम् । लक्ष्यं शरव्यं चेत्यमरः । तस्य व्यधः वेधः । व्यधजपोरनुपसर्गे इत्यप्प्रत्ययः । तत्र पटुः समर्थो यो मन्मथस्य चापनादः स इति शङ्कां भ्रमं विदधति विदधानानि । वा नपुंसकस्येति वैकल्पिको नुम्प्रतिषेधः । श्रुतिपथमधुराणि श्राव्याणीत्यर्थः सारसानां रुतानि शुश्रुविरे श्रुतानि । सारसरुतश्रवणान्मन्मथोद्दीपनमासीदित्यर्थः । अत्र सारसरुते मन्मथचापनादभ्रमाद्भ्रान्तिमदलङ्कारः । कविसम्मतसादृश्याद्विषये पिहितात्मनि । आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः इति लक्षणात् ॥ २४ ॥

मध्विति । उत्सुकान्युन्मनांसि भ्रमरकुलानि मधुमथनस्य हरेर्वधूराह्वयन्त्याकारयन्तीवेत्युत्प्रेक्षा । हूतिराकारणाह्वानमित्यमरः । शप्श्यनोर्नित्यमिति ह्वयतेः शतुर्नुमागमः । जगुरिति यत् । गायतेर्लिट् । वनानामावलिर्नूतनपल्लवा एवाङ्गुल्यस्ताभिरेकदेशवर्त्तिसावयवरूपकम् अस्यैव वनावलौ नर्त्तकीत्वरूपगमकत्वादिति । ताभिस्तदभिनयं व्यञ्जकचेष्टामतनुतेव । व्यञ्जकाभिनयौ समावित्यमरः । अङ्गैरालम्बयेद्गीतं हस्तेनार्थं प्रदर्शयेदिति वचनात् । गीतार्थस्याह्वानस्य व्यञ्जनमङ्गुलिभिरकार्षीदिवेति क्रियास्वरूपोत्प्रेक्षा । पूर्व्वोक्तरूपकानुप्राणिता साह्वानोत्प्रेक्षासापेक्षेति सजातीयसङ्करोऽपीति ॥ २५ ॥

असकलकलिकाकुलीकृतालि
स्खलनविकीर्णविकाशिकेशराणाम्।
मरुदवनिरुहां रजोवधूभ्यः
समुपहरन् विचकार कोरकाणि ॥ २६ ॥

असकलेति । मरुद्वनानिलः असकलाअसमग्राः अर्द्धविकचा इत्यर्थः ताभिः कलिकाभिः कोरकैराकुलीकृतानां संचोभितानामलिनां स्खलनेन विघट्टनेन विकीर्णाविच्छिन्नाः विकाशिनः केशराः किञ्जल्कायेषान्तेषामवनिरुहां । क्विप् । रजः पराग स्वधूभ्यः समुपहरन् प्रयच्छन् यथा कश्चित्कामीति भावः । धनमर्ज्जयन्वसतीतिवत् लक्षणहेत्वोः क्रियाया इति हेत्वर्थे शतृप्रत्ययः। कोरकाणि कुड्मलानि । कलिका कोरकः पुमानित्यमरकोषे पुंस्त्वाभिधानं प्रायिकाभिप्रायम् । कोरकं कुड्मलेऽपि स्यात्कक्कोलकमृणालयोरिति विश्वप्रकशादौ नपुंसकत्वस्याभिधानात्। विचकार विकाशयामासेत्यर्थः । विपूर्वात्किरतेः करोतेर्वा लिट् । अत्र कोरकविकाशकरणस्य समुपहरन्निति हेत्वर्थेन बधूसम्प्रदानकपरागोपहरणार्थत्वावगमात्फलोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥२६॥

उपवनेति । वने उपवनं । विभक्त्यर्थेऽव्ययीभावः । तत्र यः पवनस्तस्यानुपातेनानुसारेण दक्षैर्विचक्षणैरलिभिर्यद्यतः कारणात् अङ्गनाजनस्य सम्बन्धी परिमलोगन्धविशेषः। विमर्दोत्थे परिमलो गन्धे जनमनोहरे इत्यमरः। सएव विषयोभोग्यार्थः। रूपं स्पर्शो गन्धरसशब्दाश्च विषयाअमी इति । अलम्भि लब्धः। लभेः कर्म्मणि लुङ् विभाषाचिणमुलोरिति विकल्पान्नुम्भावः अतउपधाया

उपवनपवनानुपातदक्षै
रलिभिरलम्भि यदङ्गनागणस्य।
परिमलविषयस्तदुन्नताना
मनुगमने खलु सम्पदोऽग्रतःस्थाः ॥२७॥

रथचरणधराङ्गनाकराब्ज
व्यतिकरसम्पदुपात्तसौमनस्याः।
जगति सुमनसस्तदादि नूनं
दधति परिस्फुटमर्थतोऽभिधानम् ॥ २८ ॥

इति वृद्धिः। तस्मादुन्नतानां महतामनुगमने पश्चाद्धावने अनुवृत्तौ च सम्पदोऽग्रतःस्थाः पुरोवर्त्तिन्यः खलु। सुपि स्थ इति कप्रत्ययः। अत्रानुगमनयोर्द्वयोरभेदाध्यवसायात् श्लेषोत्थापितातिशयोक्त्यनुप्राणितोऽयमर्थान्तरन्यासः सामान्येन विशेषसमर्थनरूपः ॥ २७ ॥

रथेति। सुमनसः पुष्पाणि रथचरणं चक्रन्तस्य धरो धारयिता हरिः। पचाद्यच्। तस्याङ्गनास्तासां कराब्जैर्व्यतिकरः सम्पर्कः स एव सम्पत् तया उपात्तं लब्धं सौमनस्यं सुमनस्त्वं सन्तुष्टचित्तत्वं याभिस्ताः सत्यः अत एव सौमनस्यलाभआदिर्यस्मिन् कर्म्मणि तत्तदादि ततः प्रभृतीत्यर्थः अर्थतः पूर्व्वोक्तावयवार्थात् परिस्फुटप्रसिद्धावयवार्थं अभिधानं सुमनस इति नामधेयं दधति। पूर्व्वन्त्वग्यकर्णादिवद्रूढमिति भावः। आख्याह्वे चाभिधानं च नामधेयं च नाम चेत्यमरः। स्त्रियः पुष्पाण्यवचेतुम्प्रवृत्ता इति फलितोऽर्थः। नूनमित्युत्प्रेक्षायां। अत्रोपात्तसौमनस्याइति सौमनस्योपादानस्य पदार्थस्य

अभिमुखपतितैर्गुणप्रकर्षा
दवजितमुद्धतिमुज्ज्वलां दधानैः ।
तरुकिसलयजालमग्रहस्तैः
प्रसभमनीयत भङ्गमङ्गनानाम् ॥ २९ ॥

मुदितमधुभुजो भुजेन शाखा
श्चलितविशृङ्खलशृङ्खकं धुवत्याः ।
तरुरतिशयितापराङ्गनायाः
शिरसि मुदेव मुमोच पुष्पवर्षम् ॥ ३० ॥

विशेषणगत्या सुमनःपदार्थर्थताहेतुकत्वोक्त्या काव्यलिङ्गम् तदु त्थापिता चेयमुदात्तादिवोक्ष्येति सङ्करः तेन चाङ्गनाकराणामति श्लाघ्यत्वं व्यज्यते ॥ २८ ॥

अभिमुखेति । अभिमुखपतितैः भञ्जनार्थमभिमुखमागतैः उज्ज्वलामुत्कृष्टामुद्धतिमुपरिप्रसारमौद्धत्यञ्च दधानैरङ्गनाना मग्राणि च ते हस्ताश्चेति समानाधिकरणसमासः । अतएव हस्ता ग्रग्रहस्तयोर्गुणगुणिनोरभेदादिति वामनः । तैरग्रहस्तैः कर्तृभिः गुणप्रकर्षाद्धेतोरवजितमवधीरितन्तरुकिसलयजालं प्रसभम्बलात् भङ्गं छेदं पराजयञ्चानीयत नीतं । प्रधानकर्मण्याख्येये लादी नाद्धिकर्मणामिति किसलयजालस्य प्राधान्यादभिधानं । अत्रा ग्रहस्तेषु विशेषणमहिम्ना जिगीषुत्वस्य किसलयजाले जेतव्यत्वस्य च प्रतीतेः समासोक्तिरलङ्कारः ॥ २९ ॥

मुदितेति । मुदिता हृष्टामधुभुजो मधपायास्तु ताः शाखा भुजेन हस्तेन चलितानि विशृङ्खलानि अप्रतिहतरवाणि शृङ्खकानि

अनवरतरसेन रागभाजा
करजपरिक्षतिलब्धसंस्तवेन।
सपदि तरुणपल्लवेन वध्वा
विगतदयं खलु खण्डितेन मम्ले ॥ ३१ ॥

वलयानि यस्मिन् कर्म्मणि तद्यथा तथा धुवत्याः कम्पयन्त्याः। धूञ् विधूनने इति धातोः स्वादादिकाच्छतरि ङीप् क्ङिति चेति गुणवृद्धिप्रतिषेधादुवङादेशः। अतिशयिता सौन्दर्य्येणातिक्रान्ता अपराङ्गना यया सा तस्याः शिरसि तरुर्मुदेव तदभिसरणसन्तोषेणेवेति गुणहेतूत्प्रेक्षा पुष्पवर्षं पुष्पवृष्टिं मुमोच ॥ ३० ॥

अनवरतेति। अनवरतरसेनानवच्छिन्नद्रवेण अन्यत्रानुबद्धशृङ्गारेण रागभाजा रक्तेन प्रीतिभाजा च करजपरिक्षतिषु नखक्षतेषु लब्धसंस्तवेन प्राप्तपरिचयेन। संस्तवः स्यात्परिचय इत्यमरः। वध्वा विगतदयं निर्दयं यथा तथा खण्डितेन छिन्नेन निराकृतेन च तरुणपल्लवेन नवकिसलयेन युवविटेन च। पल्लवः किसलये विटे इति विश्वः। सपदि मम्ले म्लानं खलु प्रसिद्धौ। म्लायतेर्भावे लिट्। अत्राभिधायाः प्रकृतार्थे नियन्त्रितत्वादप्रकृतार्थप्रतीतेः शब्दशक्तिमूलो ध्वनिः न श्लेषः तेन चोभयोः पल्लवयोरौपम्यङ्गम्यते ॥ ३१ ॥

अथासां पुष्पावचये शृङ्गारचेष्टाः वर्णयन् कस्याश्चिच्चेष्टाविशेषमेकेनाह। प्रियमिति। अन्या स्त्री प्रियमभि प्रियस्याग्रत इत्यर्थः। अभिरभागे इत्यभेर्लक्षणार्थकर्मप्रवचनीयत्वात्तद्योगे द्वितीया। कुसुमेषूद्यतः कुसुमोद्यतः कुसुमग्रहणार्थमुत्क्षिप्त

प्रियमभि कुसुमोद्यतस्य बाहो
र्नवनखमण्डनचारु मूलमन्या ।
मुकुरितरकराहितेन पीन
स्तनतटरोधि तिरोदधेंऽशुकेन ॥ ३२ ॥
विततवलिविभाव्यपाण्डुलेखा
कृतपरभागविलीनरोमराजिः ।
कृशमपि कृशतां पुनर्नयन्ती
विपुलतरोन्मुखलोचनावलग्नम् ॥ ३३ ॥

इत्यर्थः । प्रकृतिविकारभावाभावान्न तादर्थ्ये चतुर्थीसमासः । तस्य बाहोर्नवं यन्नखं नखक्षतं तदेव मण्डनं तेन चारु सुन्दरं मूलं कक्षभागमित्यर्थः मुकुरितरकरेण सव्यपाणिना आहितेन निहितेनांशुकेनोत्तरीयेण पीनं स्तनतटं रुणद्धीति पीनस्तनतटरोधि तदावरणं यथा तथा तिरोदधे तिरस्कार । अथ चापलाख्यः सञ्चारिभावः । आत्मप्रकाशिनी चेष्टा रागादेश्चापलं मतमिति लक्षणात् । प्रौढा चेयम् ॥ ३२ ॥

अथापरस्याश्चेष्टाविशेषं षड्भिः कुलकेनाह । विततेत्यादि । काचिद्विततामिर्गात्रोन्नमनादिस्लिष्टाभिर्वलिभिस्त्रिवलिभिर्विभाव्याः संलक्ष्याः पाण्डुरेखाः रेखाकाराः वलीत्रयान्तरालभागाः ताभिः कृतपरभागाजनितवर्णोत्कर्षाः अतएव विशेषेण लीना विलीना रोमराजिर्यस्याः सा तथोक्ता कृशमपि स्वभावतएवेति भावः अवलग्नं मध्यं । मध्यमं चावलग्नं च मध्योऽस्त्रीत्यमरः । पुनः कृशतां नयन्ती अग्रपुष्पग्रहणाय गात्रविजृम्भणादिति भावः

प्रसकलकुचबन्धुरोद्धुरोरः
प्रसभविभिन्नतनूत्तरीयबन्धा।
अवनमदुदरोच्छ्लसद्दुकूल
स्फुटतरलक्ष्यगभीरनाभिमूला ॥ ३४ ॥
व्यवहितमविजानती किलान्त
र्वणभुवि वल्लभमाभिमुख्यभाजम्।
अधिविटपि सलीलमग्रपुष्प
ग्रहणपदेन चिरं विलम्ब्य काचित्॥३५॥

तथा विपुलतरे उन्मुखे ऊर्ध्वमुखे च लोचने यस्याः सा अग्र पुष्पग्रहणार्थमिति भावः ॥ ३३ ॥

प्रसकलेति। प्रसकलाभ्यामतिसमग्राभ्यां कुचाभ्यां बन्धुरमुन्नता नतम्। बन्धुरं तून्नतानतमित्यमरः। उद्धुरं निर्भरं दृढमिति यावत्। ऋक्पूरित्यादिना समासान्तः। तस्मादुरसः प्रसभाद्बला त्काराद्विभिन्नो विश्लिष्टस्तनूत्तरीयबन्धो यस्याः सा गात्रविजृम्भणा द्विस्रस्तकुचावरणेत्यर्थः। किञ्च अवनमतोऽन्तर्लीयमानादुदरादुच्छ्लसत् विश्लिष्यत् दुकूलं यस्य तत् अतएव स्फुटतरं यथा तथा लक्ष्यं गभीरमगाधं नाभेर्मूलमन्तरालं यस्याः सा ॥ ३४ ॥

व्यवहितमिति। काचित्पूर्व्वोक्तविशेषणविशिष्टा अङ्गना अन्तर्वण भुवि वनाभ्यन्तरप्रदेशे। प्रनिरन्तरित्यादिना वननकारस्य णत्वं। व्यवहितं तिरोहितं आभिमुख्यभाजं अभिमुखावस्थितमित्यर्थः तं वल्लभं प्रियं अविजानती किल जानानाप्यजानानेव अधि विटपि विटपिनि वृक्षे। विभक्त्यर्थेऽव्ययीभावः। सलीलं यथा

अथ किल कथिते सखीभिरत्र
क्षणमपरेव ससम्भ्रमा भवन्ती ।
शिथिलितकुसुमाकुलाग्रपाणिः
प्रतिपदसंयमितांशुकावृताङ्गी ॥ २६ ॥

कृतभयपरितोषसन्निपातं
सचकितसस्मितवक्त्रवारिजश्रीः ।
मनसिजगुरुतत्क्षणोपदिष्टं
किमपि रसेन रसान्तरं भजन्ती ॥ २७ ॥

तथा अग्रे वृक्षाग्रे यानि पुष्पाणि तेषां ग्रहणस्य पदेन मिषेण चिरं विलम्ब्य प्रियाय स्वाङ्गप्रकाशनार्थमिति भावः ॥ २५ ॥

अथेति । अथ विलम्बानन्तरं अत्रास्मिन्प्रिये सखीभिः कथिते सति किलायमत्रैवास्तइति निवेदिते सति क्षणं ससंभ्रमा अपरेव पूर्वविपरीतव्यापारकारणादन्येव भवन्ती बुद्धिपूर्वकारित्व मज्ञाननाटनेन वञ्चयन्तीत्यर्थः शिथिलितः पुष्पग्रहणान्निवर्त्तितः कुसुमाकुलः कुसुमव्याप्तोऽग्रपाणिर्यया सा तथोक्ता प्रतिपदं प्रतिस्थानं संयमितेन नियमितेनांशुकेन । अंशुकं सूक्ष्मवस्त्रे स्यादिति विश्वः । वस्त्रेणावृतमङ्गं यस्याः सा तथोक्ता सती ॥ २६ ॥

कृतभयेति । किञ्च कृतः भयपरितोषयोः भर्तृदर्शनात्यसाध्वस हर्षयोः सन्निपातः सङ्करोयेन तत् मनसिजातोमनसिजः स्मरः । सप्तम्यां जनेर्डः हलदन्तात्सप्तम्याः संज्ञायामित्यलुक् । सएव गुरुराचार्यस्तेन तत्क्षणे उपदिष्टन्तदेकहेतुकं इत्यर्थः ।

अवनतवदनेन्दुरिच्छतीव
व्यवधिमधीरतया यदस्थितास्मै ।
अहरत सुतरामतोऽस्य चेतः
स्फुटमभिभूषयति स्त्रियस्त्रपैव ॥ ३८ ॥

॥ षड्भिः कुलकम् ॥

किमप्यनिर्वाच्यं रसान्तरं लक्षणया भावान्तरं तच्चेह किलकिञ्चिताख्यं विवक्षितं कृतभयेत्यादिविशेषणेन क्रोधाश्रुहर्षभीत्यादेः सङ्करः किलकिञ्चितमिति लक्षणार्थस्य प्रतीतेः । रसेन रागेण हेतुना भजन्ती अत एव सचकिता सभयसम्भ्रमा । चकितभयसम्भ्रमद्दत्यमरः । सस्मिता हर्षात्समन्दहासा वक्त्रावारिजश्रीर्यस्याः सा सती । अत्र चकितस्मितयोः पूर्वोक्तभयहर्षानुभावत्वेनोक्तिः ॥ ३७ ॥

अवनतेति । अवनतवदनेन्दुः लज्जया नम्रमुखीत्यर्थः । अधीरतया अधृष्टतया व्यवधिं किञ्चिद्व्यवधानम् । उपसर्गे घोः किरिति किप्रत्ययः । इच्छती वाञ्छतीव तथा व्याकुला सतीत्यर्थः । आच्छीनद्योर्नुमिति विकल्पान्नुमभावः । अस्मै प्रियाय अस्थित आत्मानं प्रकाशयन्ती स्थितेत्यर्थः । तिष्ठतेः कर्त्तरि लुङ् । प्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदं स्थाघ्वोरिच्चेति सिचः कित्त्वमिकारश्च धातोरन्तादेशः कित्त्वान्न गुणः । इति यदतो हेतोरस्य प्रियस्य चेतः सुतरामहरत । तथाहि त्रपैव स्त्रियोऽभिभूषयति स्फुटम्प्रसिद्धमित्यर्थः । अतोऽस्यास्त्रपि त्रपाभूषितत्वादतिमनोहरत्वं युक्तमिति भावः । कुलकार्थान्तरन्यासौ । मध्या चेयं नायिका । लज्जामन्मथमध्यस्था मध्यमोदितयौवनेति लक्षणात् ॥ ३८ ॥

किसलयशकलेष्ववाचनीयाः
पुलकिनि केवलमङ्गके निधेयाः ।
नखपदलिपयोऽपि दीपितार्थाः
प्रणिदधिरे दयितैरनङ्गलेखाः ॥ ३९ ॥

कृतकृतकरुषा सखीमपास्य
त्वमकुशलेति कयाचिदात्मनैव ।
अभिमतमभि साभिलाषमाविः
कृतभुजमूलमबन्धि मूर्ध्नि माला ॥ ४० ॥

किसलयेति । किसलयशकलेषु वर्त्तमानाइति शेषः अवाचनीयाः प्रसिद्धलिपिवैलक्षण्याद्वाचयितुमनर्हाः किन्तु केवलं पुलकिनि दयितस्पृष्टत्वात्तत्स्पर्शादेव रोमाञ्चवत्यङ्गके वपुषि निधेयाविरहतापशान्त्यर्थमर्पणीयाः नखपदानि नखाङ्काएव लिपयोऽक्षराणि येषु ते न तु प्रसिद्धाक्षराः अतोऽवाचनीया इत्यर्थः । नैतावतानुतापकारित्वं चेत्याह तथापि दीपितार्थाः सङ्केतितसन्निवेशवशादेव द्योतिताभिधेयाःलिख्यन्तइति लेखाः । कर्म्मणि घञ्प्रत्ययः । अनङ्गस्य लेखाः तत्प्रयुक्ताइत्यर्थः । दयितैः दयिताभिः दयितैश्च । पुमांस्त्रियेत्येकशेषः । प्रणिदधिरे प्रणिहिता लिखिताइत्यर्थः । दधातेः कर्म्मणि लिट् । नेर्गदनदेत्यादिना नकारस्य णत्वम् । लोकप्रसिद्धलेख्यवैलक्षण्याद्व्यतिरेकालङ्कारः ॥ ३९ ॥

कृतेति । कृतकृतकरुषा कृतकृत्रिमरोषयाकया चिन्नायिकया त्वमकुशला माल्यग्रथने कुशला नासीति सखीमपास्य निरस्यात्मना

अभिमुखमुपयाति मा स्म किञ्चि
त्त्वमभिदधाः पटले मधुव्रतानाम् ।
मधुसुरभिमुखाब्जगन्धलब्धे
रधिकमधित्वदनेन मा निपाति ॥ ४१ ॥

स्वयमेवाभिमतमभिप्रायाभिमुखं साभिलाषमाविष्कृतभुजमूलं प्रकाशितकचप्रदेशं यथा तथा मूर्द्धि माला अबन्धि बद्धा । अयञ्च स्वाभिप्रायव्यञ्जकचेष्टारूपस्य।पलाख्यः सञ्चारिविशेषः । नायिका प्रौढैव । स्मरमन्दीकृतव्रीडा प्रौढा सम्पूर्णयौवनेति लक्षणात् ॥ ४० ॥

अथ काञ्चिन्नायिकाम्प्रति सखीवचनं विशेषकेणाह । अभिमुखमिति । मधु मकरन्दं व्रतयन्ति भुञ्जत इति मधुव्रताः मधुपाः । कर्मण्यण्प्रत्ययः । तेषां पटले अभिमुखमुपयाति आगते सति त्वं किञ्चिन्मा स्माभिदधाः न किञ्चिदालप मौनं भजेत्यर्थः । स्मोत्तरे लङ् न माङ्योग इत्यट्प्रतिषेधः । मौनस्य मधुकरबाधनिवृत्तिरेव फलमित्याह । मध्विति । मधुना मद्येन सुरभेर्मुखाब्जस्य यो गन्धस्तस्य लब्धेर्लाभात् । स्त्रियां क्तिन् । अनेन मधुव्रतपटलेन अधित्वत् त्वयि । विभक्त्यर्थेऽव्ययीभावः । त्वमावेकवचन इत्यत्रैकवचन इत्यर्थनिर्देशादिह विभक्त्यभावेऽप्येकार्थवृत्तेर्युष्मदोमपर्य्यन्तस्य त्वादेशः अतएव विभक्त्यभावाच्च त्वादेशोऽत्र चिन्त्य इति वल्लभवचनं चिन्त्यम् । अधिकमत्यन्तं सर्वत्रेत्यर्थः मा निपाति मा निपत्यताम् । भावे लुङि चिण्वृद्धिः । अत्रनिपातासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥ ४१ ॥

सरजसमकरन्दनिर्भरासु
प्रसवविभूतिषु भूरुहां विरक्तः।
ध्रुवममृतपनामवाञ्छया सा
वधरममुं मधुपस्तवाजिहीते ॥ ४२ ॥

सरजसेति। किञ्च मधु पिबतीति मधुपामधुलिट् मद्यपश्च। अतोऽनुसपर्गोकः। भुवि रोहन्ति जायन्तइति भूरुहाम्भूरुहाणां भैामानाञ्च देहिनां सम्बन्धिनीषु सह रजसा सरजसं। अचतुरेत्यादिना साकल्यार्थेऽव्ययीभावः समासान्तनिपातः। तेन सरजस्कइति बहुव्रीह्यर्थीलच्यः मुख्योवा महाकविप्रयोगबाहुल्यात् अव्ययीभावदर्शनं तु प्रायिकमित्युक्तं प्राक्। तथा च सरजसं सरजसोवायोमकरन्दस्तेन निर्भरासु पूर्णासु न तु त्वद धरामृतेन नाप्यरजस्केनेति भावः। अन्यच्च रजः स्त्रीपुष्पं। स्याद्रजः पुष्पमार्त्तवमित्यमरः। तस्माद्दचर्य्यान्मकरन्दशब्देन शुक्र प्रतीतिः तेन शुक्रशोणितसन्निपातप्रायास्वित्यर्थः प्रसवविभूतिषु पुष्पसमृद्धिषु जन्मपरम्परासु च विरक्तः निस्पृहः सन् अमृतं पिबतीति अमृतपइति नाम्नोवाञ्छयासावमुन्तवाधरमोष्ठं प्रति आजिहीते आगच्छति ध्रुवं सत्यमित्युत्प्रेक्षायां। अन्यच्च तु अमृतपोदेवइति नामवाञ्छया देवभूयापेक्षयेत्यर्थः। अथ वा निःश्रेयसप्राप्तीच्छयेत्यर्थः। श्रेयोनिःश्रेयसामृतमित्यमरः। ध्रुवं शाश्वतं अधरन्धरासम्बन्धरहितं अमुम्परलोकपथं। शुभमिह चामुत्र चान्वेति इत्यादौ लोके वेदे चेदमदसोर्लोकद्वये रूढिप्रदर्शनात्। आजिहीते अन्विष्यतीत्यर्थः। ओ हाङ्गताविति

इति वदति सखीजने निमील
द्विगुणितसान्द्रतराक्षिपक्ष्ममाला ।
अपतदलिभयेन भर्त्तुरङ्कं
भवति हि विक्लवता गुणोऽङ्गनानाम् ॥ ४२ ॥

॥ विशेषकम् ॥

धातोर्लिटि श्लाविति द्विर्भावः ई हल्घोरितीकारः । इह नायिका वदनसौरभहेतुकस्य मधुपानामागमनस्याम्लपनामवाञ्छाहेतुकत्वोत्प्रेक्षणाद्गुणहेतूत्प्रेक्षा सा च ध्रुवमिति व्यञ्जकप्रयोगाद्वाच्या सती मधुपस्याधरोद्देशस्यासम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्त्युत्थापितेति सङ्करः । पूर्व्वोक्ताप्रकृतार्थप्रतीतिस्तु मधुपादिशब्दानामभिधयाप्रकृतार्थनियन्त्रितत्वाच्छब्दशक्तिमूलो ध्वनिरेव न श्लेष इत्यलं विस्तरेणेति ॥ ४२ ॥

इतीति । इति इत्थं सख्येव जनस्तस्मिन्सखीजने वदति सति निमीलन्त्यौ भयान्मुकुलीभवन्त्यौ अतएव द्वे आवृत्ती ययोस्ते द्विगुणे द्विरावृत्ते । गुणास्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुष्विति वैजयन्ती । ते कृते द्विगुणिते अतएव सान्द्रतरे अक्षिपक्ष्ममाले नेत्रलोमपङ्क्ती यस्याः सा काचिदिति शेषः । अक्षिग्रहणस्य पक्ष्मद्वयद्वैगुण्यलक्ष्मीरक्ष्णोरेवेति द्योतनार्थत्वान्न पौनरुक्त्यम् । अलिभयेन भर्त्तुरङ्कमुत्सङ्गमपतत् प्राप्तवती । अहो महत्कष्टं यत्कीटकादपि भयमित्याशङ्क्याह । अङ्गनानां न तु पुंसामिति भावः विक्लवता भीरुता गुणोभवति हि न तु दोषइति भावः । अतएव जनसमक्षं भर्त्तुरङ्कारोहणमपि न दोषः पार्श्वस्थालम्बनादीनां भयानुभावत्वात् । कुलकेऽलङ्कारोऽयमर्थान्तरन्यासः ॥ ४२ ॥

मुखकमलकमुन्नमय्य यूना
यदभिनवोढवधूर्बलादचुम्बि ।
तदपि न किल बालपल्लवाग्र
ग्रहपरया विविदे विदग्धसख्या ॥ ४४ ॥
व्रततिविततिभिस्तिरोहितायां
प्रतियुवतौ वदनं प्रियः प्रियायाः ।
यदधयदधरावलोपनृत्य
त्करवलयस्वनितेन तद्विवव्रे ॥ ४५ ॥

मुखेति । यूना अभिनवोढवधूर्नवोढाङ्गनापि बलात् बला त्कारात् मुखं कमलमिवेत्युपमितसमासः । तदल्पं मुखकमलकम् । अल्पार्थे कन्प्रत्ययः । उन्नमय्य उद्यम्य । ल्यपि लघुपूर्वादित्य यादेशः । अचुम्बि चुम्बितेति यत् तच्चुम्बनं विदग्धसख्या चतुरसख्या बालपल्लवाग्राणां ग्रहोग्रहणम् । ग्रहवृद्दनिश्चिगमश्चे त्यप्प्रत्ययः । तत्परया तदासक्तया सत्या कश्चिद्व्यासङ्गं कल्पयन्त्ये त्यर्थः न विविदे अपि किल न प्रकाशितमिति किमुत वक्तव्य मित्यपिशब्दार्थः । किलेत्यलीके वस्तुतो विदित्वाप्यविदित्वेव स्थितं वैदग्ध्यात् अन्यथा तयोर्विश्रम्भविहारविघातादिति भावः । मुग्धेयं नायिका । उदयद्यौवना मुग्धा लज्जाविदित मन्मथेति लक्षणात् ॥ ४४ ॥

व्रततीति । प्रतिकूला युवतिः प्रतियुवतिः सपत्नी तस्यां व्रतति विततयोलताजालानि । वल्ली तु व्रततिर्लतेत्यमरः । ताभिस्तिरोहितायां सत्यां प्रियः प्रियायावदनमधयत् अपिवदिति यत् । धेटोभावा

विलसितमनुकुर्व्वती पुरस्ता
द्धरणिरुहाधिरुहोवधूर्लतायाः ।
रमणमृजुतया पुरः सखीना
मकलितचापलदोषमालिलिङ्ग ॥ ४६ ॥

सललितमवलम्ब्य पाणिनांसे
सहचरमुच्छ्रितगुच्छवाञ्छयान्या ।
सकलकलभकुम्भविभ्रमाभ्या
मुरसि रसादवतस्तरे स्तनाभ्याम् ॥ ४७ ॥

दिकाल्लङ् । तद्वदनपानं अधरावलोपेनाधरखण्डनेन तज्जनित व्यथयेत्यर्थः नृत्यतोस्खलतोः करयोर्वलयानां कङ्कणानां स्वनितेन ध्वनिना विवव्रे विवृतम् तदेव तस्यास्तदनुमापकमभूदित्यर्थः । अत्रैका दृष्टा अपरा त्वीर्ष्यानिर्वेदवतीत्यनुसन्धेयम् ॥ ४५ ॥

विलसितमिति । वधूः काचित् स्त्री पुरस्तादग्रे धरणिरुह मधिरोहतीति धरणिरुहाधिरुट् वृक्षाधिरूढा । रुहेः क्विप् । तस्यालतायाः विलसितं चेष्टितम् । भावे क्तः । अनुकुर्व्वती एव मित्याश्लेषप्रकारमभिनयन्ती ऋजुतया अकुटिलबुद्धितया सखीनां पुरोऽग्रे अकलितः अविचारितश्चापलमनुचितकरणमेव दोषो यस्मिन् कर्म्मणि तद्यथा तथा रमणं प्रियमालिलिङ्ग । एषा हर्षौत्सुक्यवती प्रौढा च ॥ ४६ ॥

सललितमिति । अन्या स्त्री उच्छ्रितगुच्छवाञ्छया उन्नतस्तवक जिघृक्षया सललितं सविलासं यथा तथा सहचरं प्रियम्पाणिना औचित्याद्वामेनेति शेषः अंसे अवलम्ब्यावष्टभ्य सकलयोः समग्रयोः

मृदुचरणतलाग्रदुःस्थितत्वा
दसहतरा कुचकुम्भयोर्भरस्य ।
उपरि निरवलम्बनं प्रियस्य
न्यपतदथोच्चतरोच्चिचीषयान्या ॥ ४८ ॥

कलभकुम्भयोः करिकुम्भयोर्विभ्रमइव विभ्रमः सौन्दर्य्यं ययो स्ताभ्यां स्तनाभ्यां रसाद्रागादुरसि अवतस्तरे आच्छादयामास सहचरमित्यनुषङ्गः । अभिमुखावस्थानादिति भावः । स्तृणातेः कर्त्तरि लिट् । ऋतश्च संयोगादेर्गुणः शर्पूर्व्वाः खयइत्यभ्याससकार लोपः । इयञ्च प्रौढैव ॥ ४७ ॥

मृद्विति । अन्या स्त्री उच्चतराणामत्यन्तकुसुमानामुच्चेतु मवचेतुमिच्छया उच्चतरोच्चिचीषया । चिनोतेः सनन्तात् स्त्रियाम प्रत्यये टाप् । विभाषा चेरिति कुत्वविकल्पः । मृदुचरणतलाग्रेण दुःस्थितत्वात् दुःखेन स्थितत्वात् कुचकुम्भयोर्भरस्य । पुंसि संज्ञायां घः प्रायेणेति घप्रत्ययः । न सहतेऽत्यन्तमित्यसहतरा । सहेः पचाद्यजन्तान्नञ्समासात्तरप्प्रत्ययः । भरमसहमानेत्यर्थः । कृद्योगात् कर्म्मणि षष्ठी । अथास्मिन्नवसरे निरवलम्बनं यथा तथा प्रियस्योपरि न्यपतत् निरवलम्बनत्वान्निपपातेत्यर्थः । एषा च प्रौढा । स्वभावोक्तिरलङ्कारः ॥ ४८ ॥

उपरिजेति । उपरिजानि उपरि जातानि तरोर्जातानि तरु जानि कुसुमानि तानि याचमानां अपचित्य देहीति प्रार्थयमानां प्रथितपृथुपयोधरां प्रशस्तपीवरकुचां मुग्धवधूं अकुटिलधियं स्त्रियं परिरम्भलोलुपः आश्लेषलालसोऽन्यः कुशलतया वञ्चना

उपरिजतरुजानि याचमानां
कुशलतया परिरम्भलोलुपोऽन्यः ।
प्रथितपृथुपयोधरां गृहाण
स्वयमिति मुग्धवधूमुदास दोर्भ्याम् ॥४९॥
इदमिदमिति भूरुहाम्प्रसूनै
र्मुहुरतिलोभयता पुरः पुरोऽन्या ।
अनुरहसमनायि नायकेन
त्वरयति रन्तुमहो जनं मनोभूः ॥ ५० ॥

पटुतया स्वयं गृहाण त्वमेवापचिनुष्वेत्यर्थः इति गम्यमानार्थत्वा दुक्तेति न प्रयुक्तं पौनरुक्त्यात् । दोर्भ्यामुदास उद्यच्छतिस्म । अयञ्चैकायत्तत्वादनुकूलनायकः नायिका तु स्वाधीनपतिका प्रौढा च ॥ ४९ ॥

इदमिदमिति । अन्या स्त्री इदमिदमिति इदं ग्राह्यमिदं ग्राह्यमित्युक्त्वेत्यर्थः भूरुहां वृक्षाणां प्रसूनैः पुष्पैः पुरः पुरो मुहुरतिलोभयता प्रलोभयता नायकेन रहोऽनु अनुरहसमेकान्तं । अन्ववतप्तमित्यव्ययीभावसमासान्तः । अनायि नीता । तथा हि मनोभूः कामोजनं रन्तुन्त्वरयति देशकालानपेक्षयेति भावः । अतएवाश्चर्यमहो इति । पूर्व्ववन्नायिकानायकविवेकः । अर्थान्तर न्यासः ॥ ५० ॥

विजनमिति । अन्या स्त्री विजनमेकान्तमिति हेतोरमुं वल्लभं क्षणं बलाद्गृहीत्वा आकृष्य अथान्तिके विपक्षं सपत्नीजनं वीक्ष्य लघुत्वभीतेस्तुच्छत्वभयादभिपतितुं मनो यस्याः सा अभिपतितुमनाः ।

विजनमिति बलादमुं गृहीत्वा
क्षणमथ वीक्ष्य विपक्षमन्तिकेऽन्या ।
अभिपतितुमनालघुत्वभीते
रभवदमुञ्चति वल्लभेऽतिगुर्व्वी ॥ ५१ ॥

अधिरजनि जगाम धाम तस्याः
प्रियतमयेति रुषा स्रजावनद्धः ।
पदमपि चलितुं युवा न सेहे
किमिव न शक्तिहरं ससाध्वसानाम् ॥ ५२॥

तुङ्काममनसोरपीति मकारलोपः । अपसर्त्तुकामेत्यर्थः वल्लभे अमुञ्चत्यत्यजति सति तस्य विपक्षानवेक्षणादिति भावः अति गुर्व्वी अतिगौरववत्यभवत् स्वयङ्ग्रहलाघवतिरोधानात् भर्तृवल्लभत्व प्रकाशनाच्चेति भावः । भाग्यवतां सर्व्वं श्रेयसे भवतीति रहस्यम् । एषा त्वतिप्रगल्भैव ॥ ५१ ॥

अधीति । अधिरजनि रजन्यां । विभक्त्यर्थेऽव्ययीभावः । तस्याः सपत्न्या इत्यर्थः । बुद्धिस्थत्वान्नामग्रहणासहत्वाच्च तच्छब्देन निर्देशः । धाम गृहं जगामेति रुषा हेतुना प्रियतमया कर्त्र्या स्रजा करणे नावनद्धो युवा पदमपि । अत्यन्तसंयोगे द्वितीया । चलितुं न सेहे न शशाक । तथा हि ससाध्वसानां भयग्रस्तानां किमिव किं वा । इवशब्दो वाक्यालङ्कार इवेतीषदर्थोपमोत्प्रेक्षावाक्यालङ्कारे ष्विति गणव्याख्याने । शक्तिं हरतीति शक्तिहरं । हरतेरनुद्यमने ऽजित्यच्प्रत्ययः । न भवतीति शेषः । अस्तिर्भवन्तीपरोऽप्रयु ज्यमानोऽप्यस्तीतिवचनात् । भवन्तीति लटः पूर्वाचार्य्याणां संज्ञा ।

न खलु वयममुष्य दानयोग्याः
पिबति च पाति च यासकौ रहस्त्वाम्।
व्रज विटपममुं ददस्व तस्यै
भवतु यतः सदृशोश्चिराय योगः॥ ५३ ॥

सर्व्वस्यापि भीरूणां शक्तिहरत्वादवलाहतः स्तम्भोऽपि यूनः शक्तिहरइति युक्तं इति सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। खण्डितेयं नायिका ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायितेति लक्षणात्। नायकस्तु दक्षिणः। भयसम्भ्रमसहनादिभिस्तुल्योनैकत्र दक्षिणइति लक्षणार्थप्रतीतेरिति॥ ५२ ॥

अथ काचित्खण्डिता निजकान्तमागस्कारिणं पल्लवदानेन प्रसादयन्तं चतुर्भिर्भर्त्सयितुमारभते। नेत्यादि। वयममुष्य दानयोग्यान भवामः खलु किन्तु या असावेवासकौ त्वत्प्रिया। अव्ययसर्व्वनाम्नामकच् प्राक्टेरित्यकच्। रहोरहसि। रहश्चोपांशुचालिङ्गे इत्यमरः। त्वां पिबति पानं करोति। पा पाने भौवादिकात् कर्त्तरि लिट् पाघ्रेत्यादिना पिबादेशः। पाति रक्षति च अन्यतोवारयति चेत्यर्थः। पा रक्षणे अदादित्वाच्छपोलुक्। तस्यै अमुं विटान्पातीति विटपं पल्लवं। विटपः पल्लवे षिड्गे इति विश्वः। ददस्व प्रयच्छ। दद दाने इतिं भौवादिकाल्लोट्। व्रज गच्छ यतोदानाच्चिराय चिरकालात् चिरार्थेऽव्ययं सदृशोरनुरूपयोर्योगोभवतु उभयोरपि विटपत्वादिति भावः। समालङ्कारोयम्। सा समालङ्कृतिर्योगोवस्तुनोरनुरूपयोरिति लक्षणात्॥ ५३ ॥

तव कितव किमाहितैर्वृथा नः
क्षितिरुहपल्लवपुष्पकर्णपूरैः ।
ननु जनविदितैर्भवद्व्यलीकै
श्चिरपरिपूरितमेव कर्णयुग्मम् ॥ ५४ ॥

तवेति । हे कितव धूर्त्त वृथा व्यर्थमेवाहितैः तत्कार्य्यस्यान्यथा सिद्धत्वादिति भावः तव सम्बन्धिभिः क्षितिरुहाणां पल्लवाः पुष्पाणि च तान्येव कर्णं पूरयन्तीति कर्णपूराः कर्णावतंसाः । कर्म्मण्यण् । तैर्नोऽस्माकं किं तत्साध्यं न किञ्चिदस्तीत्यर्थः । गम्यमानसाधनक्रियापेक्षया कर्णपूराणां करणत्वात्तृतीया । उक्तञ्च न्यासोद्योते न केवलं श्रूयमाणैव क्रिया निमित्तं कारकभावस्य अपि तु गम्यमानापीति । किन्तु नन्वङ्ग जनविदितैर्जनेष्वति प्रसिद्धैः । जनेषु विदितैरिति सप्तमीसमासः क्तस्य च वर्त्तमानइति क्तयोगे षष्ठीप्रतिप्रसवत्वेऽपि क्तेन च पूजायामिति षष्ठीसमास निषेधात् जनानामाधारत्वविवक्षायां तदप्राप्तेः । भवद्व्यलीकैस्त्वत्प्रियवचनैः कर्णयुग्मं चिरपरिपूरितं नित्यं पूर्णमेव अतः परिपूरितस्य पूरणायोगादलमेवैभिरित्यर्थः । अत्रोत्तरवाक्यार्थस्य पूर्व्ववाक्यार्थहेतुत्वेनोपनिवन्धाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ५४ ॥

मुहुरिति । अलिनादैर्मुहुरुपहसितां प्रतारणार्थेति प्रहस्यमानामिव स्थितामेनां कलिकां कोरकं अल्पङ्कलिङ्कलहञ्च । कलहे च युगे कलिरिति वैजयन्ती । स्त्रीप्रत्ययस्त्वविवक्षितः श्लेषे । नोऽस्माकं किमर्थं वितरसि हे शठ गूढविप्रियकारिन् तस्यास्त्व

मुकुरूपहसितामिवालिनादै
र्वितरसि नः कलिकां किमर्थमेनाम्।
वसतिमुपगतेन धाम्नि तस्याः
शठ कलिरेष महांस्त्वयाऽद्य दत्तः ॥५५॥
इति गदितवती रुषा जघान
स्फुरितमनोरमपक्ष्मकेशरेण।
श्रवणनियमितेन कान्तमन्या
सममसिताम्बुरुहेण चक्षुषा च ॥ ५६ ॥
॥ कलापकम् ॥

त्प्रियायाधाम्नि भवने वसतिं स्थितिमुपगतेन त्वयाद्यैष वर्त्तमानो महान् कलिः कलहोदत्तः स्वदत्त एव महति कलौ स्थिते किं कल्यन्तरेणेत्यर्थः। अत्रापि पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुत्वा द्वाक्यार्थहेतुकं काव्यलिङ्गम् कलिकामिति श्लेषोत्थापितया कोरक कलहयोर्भेदे अभेदरूपातिशयोक्त्यानुप्राणितमिति सङ्करः ॥५५॥

इतीति। इतीत्थं गदितवत्युक्तवती अन्या स्त्री रुषा कान्तं स्फुरितान्युज्ज्वलानि मनोरमाणि च पक्ष्माणीव केशराणि अन्यत्र केशराणीव पक्ष्माणि यस्य तेन श्रवणनियमितेन श्रोत्रे धृतेन निरुद्धेन च असिताम्बुरुहेण नीलोत्पलेन चक्षुषा च समं युगप ज्जघान ताडयामास। एषा खण्डिता नायकस्तु धृष्टः। व्यक्ताङ्गनि र्भयोधृष्टइति लक्षणात्। अत्र स्फुरितेत्यादितुल्यधर्मगम्योपमानयो रसिताम्बुरुहचक्षुषोरुभयोरपि ताडनसाधनतयोपात्तत्वेन प्रकृतत्वा त्केवलप्रकृतास्पदा तुल्ययोगिता। लक्षणं तूक्तम् ॥ ५६ ॥

विनयति सुदृशो दृशः पराग
प्रणयिनि कौसुममाननानिलेन ।
तदहितयुवतेरभीक्ष्णमक्ष्णो
र्द्वयमपि रोषरजोभिरापुपूरे ॥ ५७ ॥

स्फुटमिदमभिचारमन्त्रएव
प्रतियुवतेरभिधानमङ्गनानाम् ।
वरतनुरमुनोपहूय पत्या
मृदुकुसुमेन यदाहताप्यमूर्च्छत् ॥ ५८ ॥

विनयतीति । प्रणयिनि प्रिये सुदृशः प्रियायाः दृशोलोचनात् एकस्मादेवेति भावः कुसुमेषु भवं कौसुमम्पराग रजःकणञ्च चैकमेवेति भावः आननानिलेन निजमुखफूत्कारेण विनयत्य पनयति सति तदहितयुवतेः तत्सपत्न्याः अक्ष्णोर्द्वयमपि न त्वेकमे वेति भावः रोषाएव रजांसि तैरभीक्ष्णमापुपूरे नैकेन रजः कणेन किञ्चित् स्पृष्टमात्रमिति भावः । पूरयतेः कर्म्मणि लिट् । पूर्णमित्यर्थः ॥ ५७ ॥

स्फुटमिति । इदम्प्रतियुवतेः सपत्न्याः अभिधानं नामधेयं अङ्गनानामभिचारः परमारणकर्म्म यथा श्येनेनाभिचरन्यजेतेति तस्य मन्त्रोऽभिचारमन्त्रः सएव स्फुटमित्युत्प्रेक्षा यद्यस्माद्वरतनुः स्त्री पत्या भर्त्रा अमुना सपत्नीनामधेयेनोपहूय मृदुकुसुमेन मृदुग्रहणमचिरावचितत्वद्योतनाय दैवताभिचारमन्त्राणामनादि संस्कारभावं द्योतयति तेनाप्याहता अमूर्च्छत् यदुच्चारणपूर्व्वकं

समदनमवतंसितेऽधिकर्णं
प्रणयवता कुसुमे सुमध्यमायाः ।
व्रजदपि लघुतां बभूव भारः
सपदि हिरण्मयमण्डनं सपत्न्याः ॥ ५९ ॥

अवजितमधुना तवाहमक्ष्णो
रुचिरतयेत्यवनम्य लज्जयेव ।
श्रवणकुवलयं विलासवत्या
भ्रमरुतैरुपकर्णमाचचक्षे ॥ ६० ॥

कुसुमताडनमपि मारकं सोऽभिचारमन्त्र एव सत्यं अन्यथा केवलकुसुमेऽपि तत्प्रसङ्गादित्यर्थः ॥ ५८ ॥

समदनमिति । प्रणयवता प्रियेण सुमध्यमायाः प्रियायाः अधिकर्णं कर्णे । विभक्त्यर्थेऽव्ययीभावः । कुसुमे समदनं यथा तथा अवतंसिते अवतंसीकृते सति सपदि लघुतां हीनतामगुरुत्वं च व्रजदपि समान एकः पतिर्यस्यास्तस्याः सपत्न्याः । नित्यं सपत्न्यादिष्विति ङीप् नकारश्च तस्मादेव निर्देशात्समानशब्दस्य सभाव निपातः । हिरण्यस्य विकारो हिरण्मयं । दाण्डिनायनेत्यादिना निपातः । तन्मण्डनं भारो बभूव । यत्किञ्चिदपि प्रेम्णा कान्तेन स्वहस्तदत्तं श्लाघ्यं मण्डनं भवति अन्यन्महार्घमपि हीनं भारश्च न तु मण्डनमित्यर्थः । लघुगुरुत्वगुणविरोधस्य हीनार्थत्वेन परिहाराद्विरोधाभासभेदः ॥ ५९ ॥

अवजितमिति । विलासवत्याः स्त्रियः श्रवणकुवलयं श्रवणोत्पलं कर्तृ अहमधुना तवाक्ष्णोरुचिरतया रुचिरस्य भावः

अवचितकुसुमा विहाय वल्ली-
र्युवतिषु कोमलमाल्यमालिनीषु ।
पदमुपदधिरे कुलान्यलीनां
न परिचयो मलिनात्मनां प्रधानम् ॥ ६१ ॥

रुचिरता। भावे तल्। तया सौन्दर्य्येणावजितमिति वक्तव्यानुवादः।
अतएव लज्जया अवनम्य भ्रमरस्तैः तन्मिषेणेत्यर्थः उपकर्णं कर्णे।
विभक्त्यर्थेऽव्ययीभावः। आचचक्ष इवेत्युत्प्रेक्षा ॥ ६० ॥

अवचितेति । अलीनां कुलानि अवचितानि युवतिभिरपा-
त्तानि कुसुमानि यासां ताः रिक्तादूत्यर्थः वल्लीः पुष्पलताः
विहाय कोमलानि माल्यानि मलन्ते धारयन्तीति तासु कोमल-
माल्यमालिनीषु । मल मल्ल धारणे इति धातोर्णिनिः ऋन्नेभ्यो
ङीप् । युवतिषु पदमुपदधिरे निदधुः तथा हि मलिनात्मनां
कृष्णदेहानां दुष्टचित्तानां च परिचयश्चिरकालसाहचर्य्यन्न
प्रधानं न प्रयोजकं किन्तु भुक्तिरेवेति भावः । अतः परिचितलता-
त्यागो नाश्चर्य्यमित्यर्थः । अत्र मलिनात्मनामिति कृष्णाङ्गत्वस्य
दुष्टचित्तत्वेन सहाभेदाध्यवसायेनार्थान्तरन्यासस्योत्थापनात् श्लेषप्रति-
भोत्थापितातिशयोक्त्यनुप्राणितोऽयमिति सङ्करः ॥ ६१ ॥

अथोत्तरसर्गे जलक्रीडावर्णनाय तदुपोद्घातत्वेनासां वन-
विहारोद्भवं श्रमातिरेकं सप्तभिः कुलकेन दर्शयति । श्लथेत्यादि ।
शिरसि जाताः शिरोरुहाः । सप्तम्याञ्जनेर्डः हलदन्तादित्यादिना
सप्तम्या अलुक् । तेषां पाशः कलापः श्लथस्य तस्य यः पातः तस्य
भारादिवेति हेतूत्प्रेक्षा । न पादादौ खल्वादयदिति वामनीय

श्लथशिरसिजपाशपातभारा
दिव नितरां नतिमद्भिरंसभागैः।
मुकुलितनयनैर्मुखारविन्दै
र्घनमहतामिव पक्ष्मणाम्भरेण ॥ ६२ ॥
अधिकमरुणिमानमुद्वहद्भि
र्विकसदशीतमरीचिरश्मिजालैः।
परिचितपरिचुम्बनाभियोगा
दपगतकुङ्कुमरेणुभिः कपोलैः ॥ ६३ ॥

निषेधेऽपि इवशब्दस्य पादादौ प्रयोगः कवेः दोर्दण्डात्। नितरा अतिशयेन। अव्ययादामुप्रत्ययः। नतिमद्भिरंसभागैरुपलक्षिताभि र्नितम्बिनीभिरिति भाविना सम्बन्धः एवमुत्तरत्रापि योज्यम्। नतांसत्वमुत्तमस्त्रीलक्षणं। पुनर्घनमहतां सान्द्रदीर्घाणां पक्ष्मणां भरेणेवेति पूर्ब्ववद्धेतूत्प्रेक्षा मुकुलितनयनैर्मुखारविन्दैः। अत्रो त्प्रेक्षयोः संसृष्टिः॥ ६२ ॥

अधिकमिति। पुनः परिचितानां प्रणयिनां परिचुम्बनैरभि योगान्मर्दनादपगतकुङ्कुमरेणुभिः अतएव विकसन्ति वैमल्या त्प्रतिफलन्ति अशीतमरीचेरुष्णांशोरश्मिजालानि येषु तैः। असम्बन्धे सम्बन्धोक्त्यातिशयोक्तिः। अतएवाधिकमरुणिमानमुद्वहद्भिः कुङ्कुमा पायेऽप्यातपलङ्घनादतिलोहितैरित्यर्थः कपोलैर्गण्डस्थलैः ॥६३॥

अवसितेति। पुनरवसिताः श्रमेण परिसमाप्ताः ललिताः क्रियाः सुकुमारचेष्टाश्रपि यस्य तेन ललिततरेण मृदुतरेण

अवसितललितक्रियेण बाह्वो-
र्ललिततरेण तनीयसा युगेन ।
सरसकिसलयानुरञ्जितैर्वा
करकमलैः पुनरुक्तरक्तभाभिः ॥ ६४ ॥

सरसरसमुरःस्थलेन पत्यु-
र्विनिमयसङ्क्रमिताङ्गरागरागैः ।
भृशमतिशयखेदसम्पदेव
स्तनयुगलैरितरेतरं निषण्णैः ॥ ६५ ॥

तनीयसा तनुतरेण बाह्वोर्युगेन पुनः सरसैरार्द्रैः किसलयैरनुरञ्जितैर्वा अनुरञ्जनं प्रापितैरिव पुनरुक्ताद्विगुणाः रक्ताभासो येषान्तैः पुनरुक्तरक्तभाभिः । हलि सर्वेषामिति यकारलोपः । करकमलैः पाणिपङ्कजैः । अत्रेतरजनकरापेक्षया पुनरुक्तरक्तत्वं स्वाभाविकमेव तच्च किसलयरञ्जनहेतुकत्वमुत्प्रेक्ष्यते इवार्थे वा शब्दः तदुत्प्रेक्षायामप्रयुक्तः ॥ ६४ ॥

सरेति । पुनः सरेण सरसं सानुरागं यथा तथा पत्युरुरःस्थलेन कर्त्रा विनिमयेन व्यतिहारेण सङ्क्रमितोऽङ्गरागोऽनुलेपनं तेन रागो रञ्जनं येषु तैः अतिशयोऽतिशयितो यः खेदस्तस्य सम्पदा महिम्नेवेत्युत्प्रेक्षा भृशमितरेतरन्निषण्णैः परस्परं संश्रितैः स्तनयुगलैः ॥ ६५ ॥

अतन्विति । पुनः अतनुना महता कुचभरेणानतेन नम्रेण प्रागेवेति भावः । भूयः पुनश्च श्रमजनिता आनतिर्यस्य तेन शरीरकेण सुकुमारशरीरेण किञ्च अनुचिता ऽनभ्यस्ता । अभ्यस्ते

अतनुकुचभरानतेन भूयः
श्रमजनितानतिना शरीरकेण ।
अनुचितगतिसादनिःसहत्वं
कलभकरोरुभिरूरुभिर्दधानैः ॥ ६६ ॥
अपगतनवयावकैश्चिराय
क्षितिगमनेन पुनर्वितीर्णरागैः ।
कथमपि चरणोत्पलैश्चलद्भि
र्भृशविनिवेशवशात्परस्परस्य ॥ ६७ ॥

सोऽप्युचितं न्याय्यमिति यादवः । तया गत्या पादचारेण यः साद: कार्श्यन्तेन यन्निःसहत्वं अक्षमत्वं तद्दधानैः गन्तुमक्षमै रित्यर्थः । न सहन्तइति निःसहाः पचाद्यजन्तेनोपसर्गस्य समासे त्वप्रत्ययः । कलभकराः करिहस्ताद्वोरवोमहान्तस्तैरूरुभिः सक्थिभिः । सक्थि क्लीबे पुमानूरुरित्यमरः ॥ ६६ ॥

अपगतेति । पुनश्चिराय चिरं क्षितिगमनेनापगतोनवयावका नवलाक्षारागोयेषान्तैः पुनस्तेनैव वितीर्णरागैः सौकुमार्य्याद्रु त्यादितरागैः परस्परस्य भृशविनिवेशवशात् स्थिरन्यासबलात् एकं स्थिरं निवेश्य तदवष्टम्भेनेतरचालनक्रमेणेत्यर्थः कथमपि महता प्रयत्नेन । कथमादि तथाप्यन्तं यत्नगौरवभेदयोरित्युत्पलः । चलद्भिश्चरणोत्पलैः ॥ ६७ ॥

मुहुरिति । नितम्बिनीभिरुक्तधर्मोपलक्षिताभिः स्त्रीभिर्मुहु रित्येवं वनविभ्रमाभिषङ्गात् वनभ्रमणासङ्गात्तदा नितरामतमि तान्तम् । तमेर्ण्यन्ताङ्ग्लावे लुङ् नोदात्तोपदेशस्य मान्तस्यानाचमेरिति

मुहुरिति वनविभ्रमाभिषङ्गा-
दतमि तदा नितरां नितम्बिनीभिः ।
मृदुतरतनवोऽलसाः प्रकृत्या
चिरमपि ताः किमुत प्रयासभाजः ॥६८॥

प्रथममलघुमौक्तिकाभमासीत्
श्रमजलमुज्ज्वलगण्डमण्डलेषु ।
कठिनकुचतटाग्रपाति पश्चा-
दथ शतशर्करतां जगाम तासाम् ॥६९॥

वृद्धिप्रतिषेधः । युक्तं चैतदित्याह । मृदुतरतनवोऽतिकोमला- ङ्ग्यस्ताः स्त्रियः प्रकृत्या अलसाः जडाः अथ चिरमपि प्रयासभाजश्चेत् किमुत सुतरामलसाः स्युरित्यर्थः । अत्राप्रकृतनैसर्गिकालस्यस्य कथनेनागन्तुकस्य कैमुत्यन्यायतः सिद्धत्ववर्णनादर्थापत्तिरलङ्कारः । एकस्य वस्तुनोभावाद्यत्र वस्त्वन्यदापतेत् । कैमुत्यन्यायतः सा स्यादर्था- पत्तिरलङ्क्रियेति लक्षणात् । श्रमश्चात्र सञ्चारी वाच्यः । श्रमः खेदोऽध्वरत्योरिति लक्षणात् ॥ ६८ ॥

अथ श्रमानुभावं खेदं वर्णयति । प्रथममिति अथ तासां स्त्रीणां श्रमजलं प्रथममुज्ज्वलगण्डमण्डलेषु उज्ज्वलगण्ड- स्थलेषु अलघुमौक्तिकाभं स्थूलमुक्ताफलसदृशमासीत् । पश्चात्कठिन- तरकुचाग्रपाति सत् अथ पतनानन्तरं शतं शकराः शतशकरम् । समाहारे द्विगुरेकवचनं वा टावन्तइति नपुंसकत्वम् । तस्य भाव- स्तत्ता तां शतशर्करतां शतशकलत्वं जगाम । अत्रैकस्य श्रमजलस्य क्रमेणानेकाश्रयसम्बन्धनिबन्धनात्पर्यायालङ्कारभेदः क्रमेणैक

विपुलकमपि यौवनोद्धतानां
घनपुलकोदयकोमलं चकाशे ।
परिमलितमपि प्रियैः प्रकामं
कुचयुगमुज्ज्वलमेव कामिनीनाम् ॥ ७० ॥

अविरतकुसुमावचायखेदा
न्निहितभुजालतयैकयोपकण्ठम् ।
विपुलतरनिरन्तरावलग्न
स्तनपिहितप्रियवक्षसा ललम्बे ॥ ७१ ॥

मनेकस्मिन्नाधारे वर्त्तते यदि । एकस्मिन्नथ वानेकम्पर्यायालङ्कृति
मतेति लक्षणात् ॥ ६९ ॥

अन्येऽपि कुचमण्डलमविकृतशोभमित्याह । विपुलकमिति ।
यौवनोद्धतानां कामिनीनां कुचयुगं विपुलकं पुलकरहितमपि
घनपुलकोदयेन सान्द्ररोमोद्गमेन कोमलं सदिति विरोधः
विपुलं विस्तृतं तदेव विपुलकमित्यविरोधः प्रियैः प्रकामत्यर्थं
मलमस्येति परिमलं तत्कृतं परिमलितं मलिनीकृतं तथाप्यु
ज्ज्वलं विमलमेव चकाशइति विरोधः परिमलवत्कृतं परिमलित
मित्यविरोधः । मलन्तात्तत्करोतीति णिचि कर्मणि क्तः णाविष्ट
वद्भावे विन्मतोर्लुक् । अपिर्विरोधे । विरोधाभासालङ्कारयोः
संसृष्टिः ॥ ७० ॥

अथैकस्याः प्रियकण्ठावलम्बने अनानुभावमेकेनाह । अवि
रतेति । अविरतोऽयः कुसुमानामवचायोहस्तेन लवनं । हस्ता
दाने चेरस्तेयइति घञ् । तेन यः खेदस्तस्माद्धेतोरुपकण्ठं

अभिमतमभितः कृताङ्गभङ्गा
कुचयुगमुन्नतिवित्तमुन्नमय्य ।
तनुरभिलषितं क्लमच्छलेन
व्यवृणुत वेल्लितबाहुवल्लरीका ॥ ७२ ॥

कण्ठे । विभक्त्यर्थेऽव्ययीभावः । निहिते भुजालते यया तया । दोः प्रकोष्ठो भुजो वा बाहुर्भुजा च स्मर्यते बुधैरिति वैजयन्ती । विपुलतरौ निरन्तरमवलग्नौ संश्लिष्टौ च यौ स्तनौ ताभ्यां पिहितस्छादितम्प्रियस्य वक्षो यया तयैकया स्त्रिया ललम्बे लम्बितम् । भावे लिट् ॥ ७१ ॥

अथापरस्याः अङ्गभङ्गाख्यमपरमनुभावमाह अभिमतमिति । तनुः काचित्तन्वी । वोतागुणवचनादिति विकल्पादनोकारः । अभिमतमभितः प्रियमभीत्यर्थः उन्नतिवित्तं औन्नत्येन प्रतीतम् । विदेर्भावार्थाद्वित्तो भोगप्रत्यययोरिति प्रत्ययार्थे निष्ठानत्वाभाव निपातः । कुचयुगमुन्नमय्य उत्तुङ्गीकृत्य कृतोऽङ्गभङ्गो गात्रविजृम्भणं यया सा तथा वेल्लिते मिथस्त्वेष्टिते बाहुवल्लर्यौ भुजलते यया सा । नद्यृतश्चेति कप् । क्लमच्छलेन श्रमापनोदकचेष्टाव्याजेनेत्यर्थः अभिलषितमालिङ्गनाद्यभिलषितं व्यवृणुत प्रकटितवती । वृणोतेर्लङ् । प्रौढेयमुत्सुका च ॥ ७२ ॥

अथ कस्याश्चिन्मुग्धायाः प्रियचापलोक्तिद्वारा स्वेदोद्गममप्रकटयति । हिमेति । हिमलवसदृशो हिमकणनिभान् श्रमोदबिन्दून् स्वेदबिन्दूनित्यर्थः । मन्थौदनेत्यादिना उदकस्योदादेशः । अपनयता किल प्रमार्जतेव न तु तत्र तात्पर्यमिति भावः तरुणेन

हिमलवसदृशः श्रमोदबिन्दू
नपनयता किल नूतनोढबध्वाः ।
कुचकलशकिशोरकौ कथञ्चि
त्तरलतया तरुणेन पस्पृशाते ॥ ७३ ॥

गत्वोद्रेकं जघनपुलिने रुद्धमध्यप्रदेशः
क्रामन्नूरुद्रुमभुजलताः पूर्णनाभीह्रदान्तः ।
उल्लङ्घ्योच्चैः कुचतटभुवं प्लावयन्रोमकूपान्
स्वेदापूरो युवतिसरितां व्याप गण्डस्थलानि ॥७४॥

यूना नूतनोढबध्वाः कुचौ कलशाविव तौ च किशोरकाविव उल्ललनसाम्यादश्वशावाविव। अश्वशावः किशोरकइत्यमरः । तौ कुचकलशकिशोरकौ । उभयत्राप्युपमितसमासः। कथञ्चित् क्लेशेन सप्रतिषेधमेवेत्यर्थः तरलतया चपलतया उत्सुकतयेत्यर्थः पस्पृशाते स्पृष्टौ। स्पृशेः कर्म्मणि लिट्। मुग्धेयम्॥ ७३ ॥

अथ सर्व्वासामेव स्वेदोद्रेकं वर्णयति । गत्वेति। युवतयएव सरितस्तासां स्वेदएवापूरः प्रवाहः जघनमेव पुलिनं तत्रोद्रेकं गत्वा रुद्धः आवृतोमध्यप्रदेशोऽवलग्नभागः प्रवाहदेशश्च येन सः पूर्णनाभीह्रदान्तः। रेफान्तमकरान्तं वा। पूर्णेति पूरेर्ण्यन्तात्कर्म्मणि क्तः वा दान्तेत्यादिनाणि लुगिट्प्रतिषेधनिपातः । उच्चैरुन्नतौ कुचावेव तटौ तयोर्भुवम्प्रदेशमुल्लङ्घ्य रोमकूपान् रोमाणि रोमरन्ध्राणि तान्येव कूपान् प्लावयन् पूरयन् गण्डस्थलानि कपोलभागान् उन्नतभूभागांश्च प्राप । अत्र युवतिषु सरित्त्वस्य तदवयवेष्ववयवानां च निरूपणात्समवस्तुविषयसावयवरूपकं श्लेषानुप्राणितम् ।

प्रियकरपरिमार्गाद्ङ्गनानां यदाभू
त्पुनरधिकतरैव स्वेदतोयोदयश्रीः ।
अथ वपुरभिषेक्तुन्तास्तदाम्भोभिरीषु
र्वनविहरणखेदम्लानमम्लानशोभाः ॥ ७५ ॥

इति श्रीमाघकृतौ शिशुपालबधे महाकाव्ये
वनविहारोनाम सप्तमः सर्गः ॥७ ॥

मन्दाक्रान्ता वृत्तम्। मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेदिति लक्षणात् ॥ ७४ ॥

एवमध्वश्रमानुभावं स्वेदोद्रेकं वर्णयित्वा तत्फलभूतां जलविहारेच्छामासान्दर्शयति । प्रियेति । यदा अङ्गनानां प्रियकरपरिमार्गात् प्रियकरस्पर्शात् । मृजेर्घञ् प्रत्ययः । स्वेदतोयोदयश्रीः स्वेदोद्गमसम्पत् पुनर्भूयोऽप्यधिकतरैवाभूत् तदा अम्लानशोभाः अक्षीणकान्तयः वपुषि म्लानेऽपीति भावः ता अङ्गनावनविहरणखेदेन म्लानम् । म्लायतेः कर्त्तरि क्तः संयोगादेरातोधातोर्यण्वतइति निष्ठानत्वम्। वपुरङ्गं अथ कार्त्स्न्येन । मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथेत्यमरः । अम्भोभिरभिषेक्तुं ईषुः इच्छन्ति स्म । इषेर्लिट्। अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थसमर्थनहेतुकत्वेनोपनिबन्धाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। मालिनी वृत्तम् ॥ ७५ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्ये सप्तमः सर्गः ॥ ७ ॥

---

आयासादलघुतरस्तनैः स्तनद्भिः
श्रान्तानामविकचलोचनारविन्दैः ।
अभ्यम्भःकथमपि योषितां समूहै
स्तैरुर्व्वीनिहितचलत्पदं प्रचेले ॥ १ ॥

अथ वपुरभिषेक्तुन्तास्तदाम्भोभिरीषुरित्युक्तं तदेव वर्णयितु मारभते । आयासादिति । अलघुतरस्तनैः पृथुतरकुचैरिति मान्द्यहेतूक्तिः । स्तनद्भिर्भूषाभिः श्रमश्वासैर्वा शब्दायमानैः । स्तन शब्दइति धातोर्लटः शत्रादेशः । अविकचलोचनारविन्दैः

अमन्दिमीलिताक्षिपक्ष्मैः आयासाद्वनविहारखेदात् श्रान्तानां क्लान्तानां योषितान्तैः समूहैः कर्तृभिः उर्व्व्यान्निहितानि निक्षिप्तानि। डुधाञ् धारणे इति धातोः कर्म्मणि क्तः । तथैव चलन्ति पदानि यस्मिन् कर्म्मणि तद्यथा तथा उत्क्षेपणाशक्त्या भुवि बलादा कृष्यमाणचरणमित्यर्थः। अभ्यम्भोऽम्भः प्रति कथमपि प्रचेले प्रचलितम्। भावे लिट्। स्वभावोक्तिरलङ्कारः। स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनमिति लक्षणात् । अस्मिन्सर्गे प्रहर्षिणी वृत्तम् । म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयमिति लक्षणात् ॥ १ ॥

यान्तीनामिति। समम्यङ्क्तिशोयान्तीनां। आच्छीनद्योर्नुमिति वैकल्पिकोनुमागमः । असितभ्रुवां स्त्रीणामंसानान्नतत्वाद्धेतो र्नितान्तं महत्यन्तरे अवकाशे सत्यपि विपुलतया हेतुना मिथः संसक्तैरन्योन्यश्लिष्टैर्नितम्बैर्हद्विस्तृतमपि तद्वर्त्म सम्बाध्यतइति सम्बाधः सङ्कटम्। सङ्कटं ना तु सम्बाधइत्यमरः। घङन्तस्यापि

यान्तीनां सममसितभ्रुवां नतत्वा
दंसानां महति नितान्तमन्तरेऽपि।
संसक्तैर्विपुलतया मिथोनितम्बैः
सम्बाधं बृहदपि तद्बभूव वर्त्म ॥ २ ॥
नीरन्ध्रद्रुमशिशिरां भुवं व्रजन्तीः
साशङ्कं मुहुरिव कौतुकात्करैस्ताः।
पस्पर्श क्षणमनिलाकुलीकृतानां
शाखानामतुहिनरश्मिरन्तरालैः ॥ ३ ॥

विशेष्यलिङ्गत्वं सम्बाधमनुवर्त्तत इति भाष्यकारादिप्रयोगादिष्यते। बभूव। नतांसत्वनितम्बवैपुल्योक्त्या सौन्दर्य्यातिशय उक्तः। असम्बाधेऽपि सम्बाधाभिधानादतिशयोक्तिः ॥ २ ॥

नीरन्ध्रेति। नीरन्ध्रैः सान्द्रैर्द्रुमैः शिशिरां भुवं व्रजन्तीर्गच्छन्तीः ताः स्त्रीः अतुहिनरश्मिरुष्णांशुः क्षणमनिलेनाकुलीकृतानां चालितानां शाखानामन्तरालैर्नीरन्ध्रत्वेऽपि मुहुरनिलचालनजनितैरवकाशैर्मुहुः कौतुकादौत्सुक्यादिव साशङ्कम्परदारत्वात्सभयमित्यर्थः करैः पस्पर्श स्पृष्टवान्। अत्र चलच्छाखाहेतुकस्य तपनकरस्पर्शस्यौत्सुक्यहेतुकत्वोत्प्रेक्षणाद्गुणहेतूत्प्रेक्षा ॥ ३ ॥

अथ कस्याश्चिद्वृत्तं श्वेतातपत्रच्चन्द्रत्वेनोत्प्रेक्षते। एकस्या इति वदनसरोजेन स्त्रीमुखपङ्कजेन निर्ज्जितश्रीश्चन्द्रमाः एतेन वदनसरोजस्य चन्द्रविजयात्सरोजान्तरवैलक्षण्यं चन्द्रस्य निकृष्टत्वञ्चोक्तम्। अतएव सेवायै तत्सेवनार्थं आगत्य तपनकरैः करालितायाः भीषितायाः पीडितायाइत्यर्थः। करालोभीषणेऽन्यवदिति विश्वः।

एकस्यास्तपनकरैः करालिताया
विभ्राणः सपदि सितोष्णवारणत्वम् ।
सेवायै वदनसरोजनिर्जितश्री
रागत्य प्रियमिव चन्द्रमाश्चकार ॥ ४ ॥

स्वं रागादुपरि वितन्वतोत्तरीयं
कान्तेन प्रतिपदवारितातपायाः ।
सच्छत्रादपरविलासिनीसमूहा
च्छायासीदधिकतरा तदापरस्याः ॥ ५ ॥

एतेन सेवावकाशोदर्शितः एकस्याः कस्याश्चिदङ्गनायाः सपदि आतपक्षणे एव सितोष्णवारणत्वं स्वयमेव श्वेतातपत्रत्वम्बिभ्राणः सन्प्रियश्चकारेव इति क्रियास्वरूपोत्प्रेक्षा । पराजितः कयाचि त्सेवनया जेतुश्चित्तसन्तोषमुपार्ज्जयतीति भावः ॥ ४ ॥

स्वमिति । रागाद्धेतोरुपरि प्रियायामूर्द्धनि स्वं स्वकीय मुत्तरीयं वितन्वता विस्तारयता कान्तेन प्रियेण प्रतिपदम्पदेपदे वारितः आतपायस्याः तस्या अपरस्याः कस्याश्चिदङ्गनायाः सच्छत्रात् छत्रयुक्तादपरविलासिनीसमूहात्सकाशात् । पञ्चमीविभक्ते इति पञ्चमी । अधिकतरा छाया अनातपः कान्तिश्च तदा आसीत् । छत्रच्छायातोऽपि कान्तस्वहस्तधृतोत्तरीयच्छायैवानन्य साधारणी ज्यायसी मुखकान्तिरपि तस्या एव भूयसीति भावः । छाया त्वनातपे कान्तावित्यमरः । एतेन सच्छत्रादच्छत्रस्याधिक च्छायेति विरोधोऽपि निरस्तइति विरोधाभासोऽलङ्कारः ॥ ५ ॥

संस्पर्शप्रभवसुखोपचीयमाने
सर्वाङ्गे करतललग्नवल्लभायाः ।
कौशेयं व्रजदपि गाढतामजस्रं
सस्रंसे विगलितनीवि नीरजाक्ष्याः ॥ ६ ॥

गच्छन्तीरलसमवेक्ष्य विस्मयिन्य
स्तास्तन्वीर्न विदधिरे गतानि हंस्यः ।
बुद्ध्वा वा जितमपरेण काममावि
ष्कुर्वीत स्वगुणमपत्रपः क एव ॥ ७ ॥

संस्पर्शेति । करतले लग्नो वल्लभो यस्यास्तस्याः स्वहस्तेन तद्धस्तं गृहीत्वा गच्छन्त्या इत्यर्थः । अत एव नीरजाक्ष्याः सर्वाङ्गे संस्पर्शप्रभवेन प्रियाङ्गसङ्गप्रभवेन सुखेनोपचीयमाने पोषङ्गमिते सति । अत एव गाढतां दृढत्वं व्रजदपि विगलितनीवि सुखपारवश्याद्विश्लिष्टग्रन्थि कौशेयं दुकूलं अजस्रं सस्रंसे स्रस्तम् । एषा हृष्टा हर्षितरोमा च ॥ ६ ॥

गच्छन्तीरिति । हंस्यो हंसाङ्गनाः अलसमन्दङ्गच्छन्तीस्तास्तन्वीः स्त्रीरवेक्ष्य विस्मयिन्यो गतिसौष्ठवाद्विस्मयवत्यः सत्यो गतानि स्वयं लीलागमनानि न विदधिरे न चक्रुः लज्जयेति भावः । तथा हि परेण जितं स्वगुणं बुद्ध्वा वा बुद्ध्वापीत्यर्थः । क एव को वा अपत्रपः सन् कामं आविष्कुर्वीत प्रकाशयेत् न कश्चिदपीत्यर्थः । इदुदुपधस्य चाप्रत्ययस्येति विसर्जनीयस्य षत्वम् । अत्र तिरश्चां विवेकित्वातिशयोक्त्या गतिकरणनिषेधसमर्थनार्थोऽयमर्थान्तरन्यासः ॥ ७ ॥

श्रीमद्भिर्जितपुलिनानि माधवीना
मारोहैर्निविडबृहन्नितम्बबिम्बैः ।
पाषाणस्खलनविलोलमाशु नूनं
वैलक्ष्यादययुरवरोधनानि सिन्धोः ॥ ८ ॥

मुक्ताभिः सलिलरयात्तशुक्तिपेशी
मुक्ताभिः कृतरुचि सैकतं नदीनाम् ।
स्त्रीलोकः परिकलयाञ्चकार तुल्यं
पल्यङ्कैर्विगलितहारचारुभिः स्वैः ॥ ९ ॥

श्रीमद्भिरिति । श्रीमद्भिः शोभावद्भिः निविडाश्च दृढस्य नितम्बबिम्बाः कटिपश्चाद्भागा येषान्तैः माधवस्येमाः माधव्यस्तासां हरिवधूनां आरुह्यन्तइत्यारोहैः कटिपुरोभागैः जघनैः जितपुलिनानि जितसैकतानि सिन्धोरवरोधनानि समुद्रमहिष्यो नद्यइत्यर्थः । वैलक्ष्यात्पराजयकृतमनःसंकोचाद्धेतोः पाषाणेषु स्खलनेनाभिघातेन विलोलं यथा तथा आशु अयुः अगुः नूनं । नदीनां स्वाभाविक्याः पाषाणस्खलिताशुगतेः वैलक्ष्यहेतुकत्वोत्प्रेक्षणात् गुणहेतूत्प्रेक्षा ॥ ८ ॥

मुक्ताभिरिरि । स्त्रीलोकः स्त्रीजनः कर्त्ता । सलिलरयेणात्तानुन्नाः शुक्तयोमुक्तास्फोटास्तएव पेश्यः कोशाः पुटाइति यावत् । मुक्तास्फोटः स्त्रियां शुक्तिरिति पेशीकोशोद्विहीने इति चामरः । ताभिर्मुक्ताभिर्विमुक्ताभिमुक्ताभिर्मौक्तिकैः । अथ मौक्तिकं मुक्तेत्यमरः । कृतरुचि कृतशोभं नदीनां सिकतामयं सैकतं पुलिनं । तोयोत्थितं तत्पुलिनं सैकतं सिकतामयमित्यमरः । सिकतासैकताभ्या

आघ्राय श्रमजमनिन्द्यगन्धबन्धुं
निश्वासश्वसनमसक्तमङ्गनानाम् ।
आरण्याः सुमनस ईषिरे न भृङ्गै
रौचित्यं गणयति को विशेषकामः ॥ १० ॥

आयान्त्यां निजयुवतौ वनात्सशङ्कं
बर्हाणामपरशिखण्डिनीं भरेण ।
आलोक्य व्यवदधतं पुरो मयूरं
कामिन्यः श्रदधुरनार्जवं नरेषु ॥ ११ ॥

ञ्चेत्यण् प्रत्ययः । विगलितैर्विशीर्णैर्हारैः चारुभिः स्वैः पल्यङ्कैः शयनैः । शयनं मञ्चपर्य्यङ्कपल्यङ्काः खट्वया समा इत्यमरः । तुल्यं सदृशं परिकलयाञ्चकार मेने । पूर्णोपमेयम् ॥ ८ ॥

आघ्रायेति । भृङ्गैः कर्तृभिः श्रमजमध्वश्रमोत्थं अनिन्द्यगन्धस्य श्लाघ्यगन्धस्य बन्धुं सहचरं तद्वन्तमित्यर्थः । अङ्गनानां निश्वास श्वसनन्निश्वासमारुतं असक्तमप्रतिषिद्धं आघ्राय अरण्ये भवाः आरण्याः सुमनसः पुष्पाणि नेषिरे नेष्टाः । इषु इच्छायां कर्म्मणि लिट् । अनुचितोयमकाण्डे परिचितपरित्यागइत्याह । विशेषं कामयते इति विशेषकामः । शीलिकामिभिक्षाचरिभ्योणइति णप्रत्ययः । कश्चौचित्यङ्गणयति न कोऽपीत्यर्थः । अर्थान्तरन्यासः॥ १०॥

आयान्त्यामिति । निजयुवतौ वनादायान्त्यामागच्छन्त्यां सत्यां सशङ्कं सभयं अपरशिखण्डिनीं जारिणीं बर्हाणां भरेण व्यव दधतञ्छादयन्तं मयूरं पुरआलोक्य कामिन्यः प्रियेष्वनार्जव कौटिल्यं श्रद् अधुर्विश्वस्तवत्यः कुटिलाः पुरुषा इति निश्चिक्यु

आलापैस्तुलितरवाणि माधवीनां
माधुर्य्यादमलपतत्रिणां कुलानि।
अन्तर्द्धामुपययुरुत्पलावलीषु
प्रादुःष्यात्क इव जितः पुरः परेण ॥ १२ ॥

मुग्धायाः स्मरललितेषु चक्रवाक्या
निःशङ्कं दयिततमेन चुम्बितायाः।
प्राणेशानभि विदधुर्विधूतहस्ताः
शीत्कारं समुचितमुत्तरं तरुण्यः ॥ १३ ॥

रित्यर्थः। दधातेर्लुङि गातिस्थेत्यादिना सिचोलुक् आतइति झेर्जुसादेशः। अदन्तरोरुपसर्गवद्वृत्तिर्वक्तव्येति अच्छब्दस्य धातोः प्राक् प्रयोगः ॥ ११ ॥

आलापैरिति। माधवीनां हरिवधूनां आलापैः कर्त्तृभिः माधुर्य्याद्धेतोस्तुलितरवाणि तिरस्कृतरुतानि अमलपतत्रिणां हंसानां कुलानि उत्पलावलीष्वन्तर्द्धाम्। अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यमिति अन्तःशब्दस्योपसर्गत्वादातश्चोपसर्गेइत्यङ् प्रत्ययः। उपययुः। युक्तं चैतदित्याह। तथा हि परेण जितः कइवशब्दोत्रावाक्यालङ्कारे पुरोजेतुरग्रे प्रादुःष्यात् प्रादुर्भवेत्। उपसर्गप्रादुर्भ्यामस्तिर्यच्परइति षत्वम्। अर्थान्तरन्यासः ॥ १२ ॥

मुग्धायाइति। दयिततमेन निःशङ्कं निर्विचारं चुम्बिताया दष्टायाः स्मरललितेषु चुम्बनाद्यनन्तरकृत्येषु शीत्कारादिकामचेष्टितेषु मुग्धायाः मूढायाः चक्रवाक्याः समुचितं योग्यं शीत्कारं शीत्काररूपं उत्तरं कृत्यं तरुण्यः स्वयं प्राणेशान् अभि विधूतहस्ताः

उत्क्षिप्तस्फुटितसरोरुहार्घ्यमुच्चैः
सखेहं विहगरुतैरिवालपन्ती ।
नारीणामथ सरसी सफेनहासा
प्रीत्येव व्यतनुत पाद्यमूर्मिहस्तैः ॥ १४ ॥

नित्याया निजवसतेर्निरासिरे यः
द्रागेण श्रियमरविन्दतः कराग्रैः ।
व्यक्तत्वं नियतमनेन निन्युरस्याः
सापत्न्यं क्षितिसुतविद्विषो महिष्यः ॥ १५ ॥

सत्यो विदधुः तादात्म्यभावनया स्वयं दष्टा इव शीचक्रुरिति शीत्कारा सम्बन्धे तत्सम्बन्धातिशयोक्त्या तत्रासामुद्दीपकमासीदित्युक्तम् ॥ १३ ॥

उत्क्षिप्तेति । अथानन्तरमुत्क्षिप्तं स्फुटितसरोरुहं विकचारविन्दमेवार्घ्यमर्घ्यद्रव्यं यस्मिन्तत्तथा सखेहं विहगरुतैरालपन्ती स्वागतादिवचनं व्याहरन्तीव स्थिता इत्युत्प्रेक्षा । फेन इव हासस्तेन सहिता सफेनहासा स्मितपूर्वाभिभाषिणीत्यर्थः । सरसी पुष्करिणी नारीणामूर्मिभिरेव हस्तैः पाद्यम्पादोदकम् । पादार्घाभ्याञ्चेति यत् प्रत्ययः । प्रीत्येवेत्युत्प्रेक्षाव्यतनुत रूपकानुप्राणितोत्प्रेक्षाद्वयस्य सापेक्षत्वात् संसृष्टिः ॥ १४ ॥

नित्याया इति । क्षितिसुतविद्विषो नरकद्विषो हरेः महिष्यः कराग्रैः पाणिपल्लवैः करणैः रागेण रक्तवर्णेन इच्छया च श्रियं शोभां रमां च नित्यायाः सदातन्याः निजवसतेः स्वावासादरविन्दतोऽरविन्दान्निरासिरे निष्काशयाञ्चक्रुः निरस्यन्ति स्मेति यावत् । उपसर्गादस्यत्यूह्योर्वा वचनमिति विकल्पादात्मनेपदम् । अनेन

आस्कन्दन् कथमपि योषितो न याव
द्भीमत्यः प्रियकरधार्य्यमाणहस्ताः ।
औत्सुक्यात्त्वरितममूस्तदम्बु ताव
त्संक्रान्तप्रतिमतया दधाविवान्तः ॥ १६ ॥

ताः पूर्व्वं सचकितमागमय्य गाधं
ज्ञात्वाथो मृदुपदमन्तराविशन्त्यः ।
कामिन्यो मन इव कामिनां सराग
रङ्गैस्तज्जलमनुरञ्जयांबभुवुः ॥ १७ ॥

निरासेनास्याः श्रियः सापत्न्यं सपत्नीत्वम् । ब्राह्मणादित्वात् ष्यञ् प्रत्ययः । व्यक्तत्वं निन्युर्व्यक्तीचक्रुरित्यर्थः । अत्र श्रीशब्देन रक्षा शोभयोरभेदाध्यवसायेन श्रीनिवासस्य सापत्न्यव्यक्तीकरणार्थत्वो त्प्रेक्षणात् श्लेषप्रतिभोत्थापितातिशयोक्त्यनुप्राणितेयं फलोत्प्रेक्षेति सङ्करः ॥ १५ ॥

आस्कन्दन्निति । भीमत्यः प्रवेशभीरवो योषितः प्रियकरै र्द्धार्य्यमाणहस्ताः प्रियकरावलम्बाः सत्यः यावत्कथमपि नास्कन्दन् न प्राविशन् तावत्संक्रान्तप्रतिमतया सङ्क्रान्तप्रतिबिम्बतया तदम्बु कर्तृ औत्सुक्यादुत्कण्ठतया त्वरितममूरन्तर्दधाविव अन्तःप्रावेशय दिवेत्यर्थः । प्रतिबिम्बसङ्क्रमणादन्तर्धानोत्प्रेक्षणात् क्रियानिमित्तस्य क्रियास्वरूपोत्प्रेक्षा ॥ १६ ॥

तादृति । ताः कामिन्यः कामिनः कामुकस्य मनइव तज्जलं पूर्व्वम्प्रथमं सचकितं सभयं यथा तथा गाधमुत्तानमागमय्य गमनेन ज्ञात्वा पुरःप्रविष्टपुरुषमुखेन गाधं तदिति परामृश्येत्यर्थः ।

संक्षोभं पयसि मुहुर्महेभकुम्भ
श्रीभाजा कुचयुगलेन नीयमाने ।
विश्लेषं युगमगमद्रथाङ्गनाम्नो
रुद्वृत्तः क इव सुखावहः परेषाम् ॥ १८ ॥

अन्यत्र दूतमुखेन ज्ञात्वेत्यर्थः । अथोऽनन्तरं मृदु मन्दम्पदं कृत्वा पदं न्यस्य अन्यत्र तु स्वयं सम्भाषणादिकं कृत्वेत्यर्थः । अन्तरमभ्यन्तरमाविशन्त्यः प्रविष्टाः सत्यः अन्यत्र रहस्यकर्म्मणि प्रवृत्ताइत्यर्थः । सरागैः साङ्गरागैः सानुरागैश्च अङ्गैर्गात्रैरनुरञ्जयाम्बभूवुः तद्वर्णाक्रान्तं चक्रुः अन्यत्र त्वनुरक्तं चक्रुरित्यर्थः । श्लेषसङ्कीर्णेयमुपमा ॥ १७ ॥

संक्षोभमिति । महेभकुम्भश्रीभाजा तत्सदृशश्रीभाजेत्यर्थः । अतएवासम्भवद्वस्तुसम्बन्धोनिदर्शनालङ्कारः । कुचयुगलेनोल्लसितेनेति भावः । पयसि मुहुः संक्षोभं नीयमाने प्राप्यमाणे सति रथाङ्गनाम्नोर्युगञ्चक्रवाकयुगलं विश्लेषं वियोगमगमत् त्रियोगासहमपीति भावः । तथाहि उद्वृत्त उन्नतोवृत्तश्च उद्वर्त्तनं यस्येति वा उद्वृत्तः अन्यत्रोद्वृत्त उन्मार्गवर्त्तीति यावत् स क इव कोवा परेषां स्वेतरेषां सुखावहः सुखकरः न कोऽपीत्यर्थः अयञ्च श्लेषमूलातिशयोक्तिजीवितोऽर्थान्तरन्यासः ॥ १८ ॥

आसीनेति । शीतं न सहतइति शीतालुः शीतभीरुः । शीतोष्णाभ्यान्तदसहने आलुच् वक्तव्यः । अतएव सरसि अवतरितुं प्रवेष्टुमनिच्छुरनभिलाषुकाअतएव तटभुवि आसीना उपविष्टा । आसेः कर्त्तरि शानच् ईदासइतीकारः । रम्भे कदलीस्तम्भाविवोरू

आसीना तटभुवि सस्मितेन भर्त्रा
रम्भोरूरवतरितुं सरस्यनिच्छुः ।
धुन्वाना करयुगमीक्षितुं विलासान्
शीतालुः सलिलगतेन सिच्यते स्म ॥ १९ ॥
नेच्छन्ती सममसुना सरोऽवगाढुं
रोधस्तः प्रतिजलमीरिता सखीभिः ।
आश्लिक्षद्भयचकितेक्षणं नवोढा
वोढारं विपदि न दूषिताऽतिभूमिः ॥ २० ॥

यस्याः सा रम्भोरूः स्त्री । ऊरूत्तरपदादौपम्ये इत्यूङ्प्रत्ययः । सलिलगतेन स्वयं सलिलं प्रविष्टेन सस्मितेन भर्त्रा विलासानीक्षितुं करयुगन्धुन्वाना कम्पयन्ती । धुनोतेः कर्त्तरि शानच् प्रत्ययः । सिच्यते स्म सिक्ता ॥ १९ ॥

नेति । अमुना समसनेन भर्त्रा सह सरोऽवगाढुमवगाहितुं । स्वरतिसूतिसूयतिधूञूदितोवेति विकल्पादिडागमः । नेच्छन्ती लज्जया अनिच्छन्ती । नञर्थस्य नशब्दस्य सुप्सुपेति समासः नञ्समासोवा । अथ सखीभिः प्रतिजलं जलमभि रोधस्तो रोधसः । पञ्चम्यास्तसिल् । ईरिता नुन्ना नवोढा नववधूः भयेन चकितेक्षणं सम्भ्रान्तदृष्टि यथा तथा वोढारम्भर्त्तारमाश्लिक्षत् । आलिङ्गितवती । श्लिष आलिङ्गने इति धातोर्लुङि च्लेः क्सादेशः । न च धार्ष्ट्यदोषापत्तिरित्याह । विपदि विपत्तौ अतिक्रान्ता भूमिरतिभूमिरमर्यादा न दूषिता । आपत्काले नास्ति मर्य्यादेति न्यायादिति भावः । अर्थान्तरन्यासालङ्कारः ॥ २० ॥

तिष्ठन्तम्पयसि पुमांसमंसमात्रे
तद्दघ्नन्तदवयती किलात्मनोऽपि ।
अभ्येतुं सुतनुरभीरियेष मौग्ध्या
दाश्लेषि द्रुतममुना निमज्जतीति ॥ २१ ॥

आनाभेः सरसि नतभ्रुवावगाढे
चापल्यादथ पयसस्तरङ्गहस्तैः ।
उच्छ्रायि स्तनयुगमध्यरोहि लब्ध
स्पर्शानां भवति कुतोऽथवा व्यवस्था ॥२२॥

तिष्ठन्तमिति । सुतनुः शुभाङ्गी स्त्री अंसः प्रमाणमस्येति अंसमात्रे अंसप्रमाणे । प्रमाणे द्वयसजद्घ्नञ्मात्रजिति मात्रच् प्रत्ययः । पयसि जले तिष्ठन्तं पुमांसं वीक्ष्येति शेषः । आत्मनोऽपि तत्पयः तद्दघ्नं तावन्मात्रमंसमात्रं अवयती जानती किल तथा सम्भावयन्तीत्यर्थः । वार्त्तासम्भाव्ययोः किलेत्यमरः । अवपूर्वादिणः शतरि इणोयणिति यणादेशः उगितश्चेति ङीप् । किलशब्दस्या लीकार्थत्वे मौग्ध्यविरोधः । अतएव मौग्ध्यादविवेकादभीर्निर्भीका सती अभ्येतुं पुमांसमभिगन्तुमियेष इच्छति स्म । अमुना पुंसा निमज्जतीति द्रुतमाश्लेषि आश्लिष्टा ॥ २१ ॥

आनाभेरिति । नतभ्रुवा स्त्रिया सरसि आनाभेर्नाभिपर्य्यन्तं। आङ् मर्य्यादाभिविध्योरिति विकल्पादसमासः। अवगाढे प्रविष्टे सति। गाहेः कर्म्मणि क्तः । अथ पयसश्चापल्याल्लौल्यात् । ब्राह्मणादिषु पाठात् ष्यञ्प्रत्ययः । तरङ्गैरेव हस्तैस्तरङ्गहस्तैरुच्छ्रायो ऽस्यास्तीत्युच्छ्रायि उन्नतिमत् स्तनयुगमध्यरोहि अधिरूढम् ।

कान्तानां कुवलयमप्यपास्तमक्ष्णोः
शोभाभिर्न मुखरुचाऽहमेकमेव ।
संहर्षादलिविरुतैरितीव गाय
ल्लोलोर्म्या पयसि महोत्पलं ननर्त्त ॥ २३ ॥

भिक्षुकपादप्रसारणन्यायादिति भावः । रोहतेः कर्म्मणि लुङ् ।
अथ वा तथाहीत्यर्थः । लब्धस्पर्शानां लब्धप्रवेशानामित्यर्थः ।
कुतः कुत्र वा । सार्व्वविभक्तिकस्तसिल् । व्यवस्था मर्य्यादा भवति
न कुत्रापीति भावः प्रायेण सर्व्वेऽप्यसम्भवब्रह्मचारिण एवेति भावः।
अत्र चापल्यादिति द्वयोरपि लौल्ययोरभेदाध्यवसायमूलाति
शयोक्त्या तरङ्गहस्तैरिति रूपकेण च पयसि कामित्वप्रतीतेः
समासोक्तिः तदुपजीवी चार्थान्तरन्यास इति सङ्करः ॥ २२ ॥

कान्तानामिति । लोलोर्म्या चपलोर्म्मिणि । तृतीयादिषु
भाषितपुंस्कं पुंवद्गालवस्येति विकल्पात्पुंवद्भावः । पयसि महोत्पल
मरविन्दं कर्त्तृ । अरविन्दं महोत्पलमित्यमरः । कान्तानां मुख
रुचा अहमेकमेव नापास्तं किन्तु तासामक्ष्णोः शोभाभिः कुवलय
मप्यपास्तं इति संहर्षात्सन्तोषाद्धेतोरलिविरुतैर्गायत् अलिरुत
रूपं गानं कुर्व्वदिति रूपकम् । इत्थम्भूतलक्षण इति तृतीया ।
ननर्त्तेव । न दुःखमन्यभिः सहेति न्यायान्नृत्यति स्म । अत्रोर्म्मि
चलनहेतुके महोत्पलचलने अलिनादसंहर्षहेतुकसमानन्टत्यलो
त्प्रेक्षणात्क्रियानिमित्तक्रियास्वरूपोत्प्रेक्षा वाच्या ॥ १३ ॥

त्रस्यन्तीति । चलाः शफर्य्यः यातुकामामत्स्यः । प्रोष्ठी तु शफरी
द्वयोरित्यमरः । ताभिर्विघट्टितौ विद्धावूरू यस्याः सा अतएव

त्रस्यन्ती चलशफरीविघट्टितोरू-
र्वामोरूरतिशयमाप विभ्रमस्य ।
क्षुभ्यन्ति प्रसभमहो विनापि हेतो-
र्लीलाभिः किमु सति कारणे रमण्यः ॥ २४ ॥
आकृष्टप्रतनुवपुर्लतैस्तरद्भि-
स्तस्याम्भस्तदथ सरोमहार्णवस्य ।
अक्षोभि प्रसृतविलोलबाहुपक्षै-
र्योषाणामुरुभिरुरोजगण्डशैलैः ॥ २५ ॥

त्रस्यन्ती बिभ्यती । वा भ्राशेत्यादिना विकल्पात् श्यनि शतरि ङीप् । वामौ सुन्दरावूरू यस्याः सा वामोरूः स्त्री । संहित शफलक्षणवामादेश्चेत्यूङ् प्रत्ययः । विभ्रमस्य विलासस्यातिशयमाप तथा हि रमण्योहेतोर्विनापि कारणं विनापि । पृथग्विनेत्यादिना विकल्पात्पञ्चमी । लीलाभिर्विलासैः प्रसभम्प्रकामं क्षुभ्यन्ति अहो निष्कारणक्षोभादाश्चर्यमित्यर्थः । कारणे सति किमु वक्तव्यम् । अत्राप्रकृतनिष्कारणक्षोभकथनात्सकारणक्षोभस्य कैमुत्यन्यायलब्धत्व वर्णनादर्थापत्तिरलङ्कारः । दण्डापूपिकयार्थान्तरस्यापतनमर्थापत्तिरिति सूत्रम् ॥ २४ ॥

आकृष्टेति । अथानन्तरमाकृष्टाः प्रतनवोवपूंष्येव लतायस्तै स्तरद्भिः प्लवमानैः प्रसृताआयताविलोलाश्चलाबाहवएव पक्षा गरुन्ति येषां तैः । गिरिधर्म्मस्य पक्षवत्त्वस्य तदवयवेषूपचारः । उरुभिर्महद्भिर्योषाणां स्त्रीणां उरोजैरेव गण्डशैलैर्गिरिच्युतैः स्थूलोपलैस्तस्य सरएव महार्णवस्तस्य तदम्भः अक्षोभि ।

गाम्भीर्यन्दधदपि रन्तमङ्गनाभिः
संक्षोभं जघनविघट्टनेन नीतः ।
अम्भोधिर्विकसितवारिजाननोऽसौ
मर्य्यादां सपदि विलङ्घयाम्बभूव ॥ २६ ॥

आदातुन्दयितमिवावगाढमारा
दूर्मीणां ततिभिरभिप्रसार्य्यमाणः ।
कस्याश्चिद्विततचलच्छिखाङ्गुलीको
लक्ष्मीवान्सरसि रराज केशहस्तः ॥ २७ ॥

क्षुभ्यतेर्ण्यन्तादण्यन्ताद्वा कर्म्मणि लुङ् । समस्तवस्तुविषयकं सावयवं रूपकम् ॥ २५ ॥

गाम्भीर्य्यमिति । गाम्भीर्य्यमगाधत्वं अविकारिचित्तत्वं च दधदपि गम्भीरः सन्नपि रन्तुं विहर्त्तुं सङ्गन्तुञ्चाङ्गनाभिः जघनस्य विघट्टनेन सङ्घर्षेण प्रक्षोभञ्चलनञ्चित्तविकारञ्च नीतः अतएव विकसितं वारिजमाननमिव वारिजमिव चाननं यस्य सः अम्भांसि धीयन्तेऽस्मिन्निति अम्भोधिर्जलाशयः कश्चित्पुमांश्च तत्तुल्यो गम्यते । कर्म्मण्यधिकरणे चेति किप्रत्ययः । सपदि मर्य्यादां सीमानं औचितीञ्च विलङ्घयाम्बभूव लङ्घितवान् । धीरोऽपि स्त्रीसन्निकर्षाद्विक्रियते इति भावः । अत्र गाम्भीर्य्यादिप्रकृताम्भोधिविशेषणसाम्यादप्रकृतविशेष्यपुरुषप्रतीतेः समासोक्तिरलङ्कारः । सा च प्रतीयमानाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितेति सङ्करः ॥२६॥

आदातुमिति । सरसि वितताः प्रसारिताश्चलन्त्यश्च शिखा अग्राण्येवाङ्गुल्यो यस्य सः । नद्यृतश्चेति कप् । लक्ष्मीवान् शोभावान् ।

उन्निद्रप्रियकमनोरमं रमण्याः
संरेजे सरसि वपुः प्रकाशमेव ।
मुक्तानां विमलतया तिरस्क्रियायै
नाक्रामन्नपि हि भवत्यलं जलौघः ॥२८॥

मादुपधायाश्च मतोर्वोऽयवादिभ्य इति मतुपो मकारस्य वत्वं। कस्याश्चित्केशहस्तः केशपाशः। पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे इत्यमरः। हस्त इति करश्च ध्वन्यते। आरात्समीपे। आराद्दूरसमीपयोरित्यमरः। अवगाढमन्तर्मग्नं दयितमादातुं ग्रहीतुमिव ऊर्मीणां तति भिस्समूहैरभिप्रसार्य्यमाणोऽभितो व्यापार्य्यमाणः सन् रराज। अत्रादातुमिव प्रसार्य्यमाण इति प्रसारणस्यादानार्थत्वोत्प्रेक्षणादियं क्रियानिमित्ता क्रियाफलोत्प्रेक्षा। सा च चलच्छिखाङ्गुलीक इति रूपकानुप्राणितया हस्त इति श्लेषमूलयावाच्यस्य केशकलापस्य प्रतीयमानात्कराद्भेदे अभेदरूपातिशयोक्त्या निर्व्यूढेति सङ्करः॥ २७॥

उन्निद्रेति। उन्निद्रं यत् प्रियकं असनकुसुमं। सर्ज्जकासनबन्धूकपुष्पप्रियकजीवकादृत्यमरः। तदिव मनोरमं कनकगौरमित्यर्थः। रमण्यावपुः सरसि प्रकाशमेव जलमग्नमपि वैमल्यात्प्रत्यक्षमेव संरेजे। तथा हि। जलौघो जलपूरो जडौघो मूर्खजनौघश्च डलयोरभेदात्। आक्रामन्नाट्वन्नपि अन्यत्र अधिक्षिपन्नपि विमलतया वैमल्येन मुक्तानां मुक्तानां तिरस्क्रियायै तिरोधानाय परिभवाय च अलं समर्थो न भवति हि। श्लेषमूलया भेदेऽभेदरूपातिशयोक्त्यानुप्राणितोऽयमर्थान्तरन्यासः॥ २८॥

किन्तावत्सरसि सरोजमेतदारा
दाहोस्विन्मुखमवभासते युवत्याः ।
संशय्य क्षणमिति निश्चिकाय कश्चि
द्विब्बोकैर्बकसहवासिनां परोक्षैः ॥२९॥
शृङ्गाणि द्रुतकनकोज्ज्वलानि गन्धाः
कौसुम्भं पृथुकुचकुम्भसङ्गि वासः ।
मार्द्वीकं प्रियतमसन्निधानमास
न्नारीणामिति जलकेलिसाधनानि ॥ ३० ॥

किमिति । सरस्याराद्दूरादेतत्पुरोवर्त्ति तावत्सरोजं किं आहोस्वित् उत युवत्यामुखं अवभासते इति क्षणं संशय्य संदिह्य । शीङः क्त्वाल्यप् अयङ्‌यिक्ङितीत्ययङादेशः । कश्चि द्विलासी वकसहवासिनां वकसहचारिणां पद्मानामित्यर्थः विलासशून्यताद्योतनार्थमित्थन्निर्देशः । परोक्षैरप्रत्यक्षैरननुभूत चरैरविद्यमानैरिति यावत् विब्बोकैर्विलासैरित्यर्थः यद्यपि विब्बोकोऽनादरक्रियेत्युक्तं तथापि विशेषवाचिनां सामान्ये लक्षणे त्यदोषः । निश्चिकाय विशेषदर्शनान्मुखमेवेति निश्चितवानित्यर्थः । सन्देहालङ्कारोऽयम् । विषयोविषयी यत्र सादृश्यात्कविसम्मतात् । सन्देहगोचरौ स्यातां सन्देहालङ्कृतिश्च सेति लक्षणात् । सोऽप्यन्ते निश्चयोक्तेर्निश्चयान्तः ॥ २९ ॥

अथ जलक्रीडासम्भारानाह । शृङ्गाणीति । द्रुतेन तप्तनिषिक्तेन कनकेनोज्ज्वलानि लिप्तानीत्यर्थः । शृङ्गाणि क्रीडाम्बुयन्त्राणि । शृङ्गं प्रभवे शिखरे चिह्ने क्रीडाम्बुयन्त्रकइति विश्वः । गन्धाः

उत्तुङ्गादनिलचलांशुकास्तटान्ता
च्चेतोभिः सह भयदर्शिनां प्रियाणाम् ।
श्रोणीभिर्गुरुभिरतूर्णमुत्पतन्त्य
स्तोयेषु द्रुततरमङ्गनानिपेतुः ॥ ३१ ॥

चन्दनकुङ्कुमादिगन्धद्रव्याणि । अतएव पुंसि बहुत्वं च । गन्धस्तु गन्धके गर्व्वलेशयोः। सएव द्रव्यवचनोबहुत्वे पुंसि च स्मृत इत्यभिधानात् । पृथु विशालं कुचकुम्भसङ्गि कुचावरणं कुसुम्भेन रक्तं कौसुम्भम् । तेन रक्तं रागादित्यण् प्रत्ययः । वासोवस्त्रं मृद्वी काया विकारोमार्द्वीकं द्राक्षामद्यम्। मृद्वीका गोस्तनी द्राक्षेत्यमरः। किञ्च प्रियतमसन्निधानं सर्व्वसाफल्यकारणमिति भावः। इत्येतानि नारीणां जलकेलिसाधनानि जलक्रीडापायाआसन् । उद्दीपक सम्पत्तिरुक्ता । अत्र शृङ्गादीनां केलिसाधनत्वस्वरूपतुल्यधर्म्म योगात् प्रकृतत्वाच्च केवलप्रकृतगोचरा तुल्ययोगिता ॥ ३० ॥

उत्तुङ्गादिति । अनिलेन वेगानिलेन चलांशुकास्खलद्वसना अङ्गनाः उत्तुङ्गात्तटान्ताद्भयदर्शिनाम्भयोत्प्रेक्षिणामनर्थाशङ्किना मित्यर्थः। प्रियाणां चेतोभिः सह तेषान्तत्रैवावधानादिति भावः। गुरुभिर्गुर्व्वीभिः । वोतोगुणवचनादिति विकल्पादनीकारः । श्रोणीभिर्हेतुना अतूर्णं मन्दमुत्पतन्त्यस्तोयेषु द्रुततरं निपेतुः। गुरुत्वस्य पतनहेतुत्वादुत्पतनविरोधित्वाच्च शीघ्रपातोमन्दोत्पतन ञ्चेति भावः । अत्र प्रियचेतःपाताङ्गनापातयोः कार्य्यकारणयो रसहभाविनो. सहभावोक्तेः कार्य्यकारणयोः पौर्व्वापर्य्यविध्वंसन रूपातिशयोक्त्युपजीविता सहोक्तिरलङ्कारः । सहार्थेनान्वयोयत्र

मुग्धत्वादविदितकैतवप्रयोगा
गच्छन्त्यः सपदि पराजयं तरुण्यः ।
ताः कान्तैः सह करपुष्करेरिताम्बु
व्यात्युक्षीमभिसरणग्लहामदीव्यन् ॥ ३२ ॥

अत्रेदतिशयोक्तिः । कल्पितौपम्यपर्य्यन्ता या सहोक्तिरिहेष्यतइति लक्षणात् । चेतोवत्येतुरित्यौपम्यकल्पनया कार्य्यगताङ्गभाव प्रतीतेस्तत्वादिति रहस्यम् । तात्कालिकांशुकचलनादिसूक्ष्म स्वभावविशेषप्रकाशनात् स्वभावोक्तिरेति सङ्करः ॥ ३१ ॥

मुग्धत्वादिति । मुग्धत्वान्मूढत्वादविदिताः कैतवप्रयोगामुख सेचनादिकपटाचरणानि याभिस्ताः अतएव सपदि पराजय ङ्गच्छन्त्यस्तास्तरुण्यः कान्तैः सहाभिसरणं स्वयमभिगमनं ग्लहोद्यूतं पणोयस्यास्ताम् । पणोऽक्षेषु ग्लहइत्यमरः । अक्षेषु ग्लहइति ग्रहेरेवात्तपणे खत्वनिपातः । अप्रत्ययस्तु ग्रहवृहनिश्चिगम श्चेत्येव सिद्धइति केचित् । अन्ये तु ग्लहिप्रकृत्यन्तरमङ्गीकृत्या प्रत्ययस्यैव निपातोघञपवादोत्याहुः । करपुष्करैः करकमलै रीरितैरम्बुभिर्या व्यात्युक्षी व्यतिहारेणोक्षणं परस्पराभ्युक्षणमित्यर्थः। कर्म्मव्यतिहारे णच् स्त्रियामिति णच् प्रत्ययः णचः स्त्रियामञा देशः । टिड्ढाणञित्यादिना ङीप् । तां व्यात्युक्षीमदीव्यन् तया अक्रीडन्नित्यर्थः । दिवः कर्म्म चेति विकल्पात्कर्म्मत्वम् । अत्राविदित कैतवप्रयोगत्व विशेषणगत्या पराजयहेतुत्वादर्थहेतुकङ्काव्यलिङ्ग मलङ्कारः ॥ ३२ ॥

योग्यस्य त्रिनयनलोचनानलार्चि-
र्निर्दग्धस्मरपृतनाधिराजलक्ष्म्याः ।
कान्तायाः करकलशोद्यतैः पयोभि-
र्वक्त्रेन्दोरकृत महाभिषेकमेकः ॥ २३ ॥

सिञ्चन्त्याः कथमपि बाहुमुन्नमय्य
प्रेयांसं मनसिजदुःखदुर्बलायाः ।
सौवर्णं वलयमवागलत्कराग्रा-
ल्लावण्यश्रियइव शेषमङ्गनायाः ॥ २४ ॥

योग्यस्येति । त्रिनयनस्त्र्यम्बकः । क्षुभ्नादिषु चेति निषेधा-त्पूर्वपदात्संज्ञायामिति णत्वाभावः । तस्य लोचनानलार्चिषा निर्दग्धस्य स्मरस्य याः पृतनास्तासामधिराज्यमाधिपत्यं तदेव लक्ष्मीस्तस्याः योग्यस्यार्हस्य त्रैलोक्यविजयिनः स्मरस्य साहाय्येन श्लाघ्यत्वादिति भावः । कान्तायाः वक्त्रेन्दोः स्मरसखत्वादस्येति भावः । करावञ्जलिरेव कलशस्तेनोद्यतैरुत्क्षिप्तैः पयोभिर्महाभिषेक-मेकः कश्चित्कामी अकृत कृतवान् । करोतेर्लुङि तङ् तनादिभ्य-स्तथासोरिति सिचो लुक् । अत्र जलक्रीडासेके महाभिषेकत्वोत्प्रेक्षा प्रतीयमानकरकलशेति रूपकानुप्राणितेति सङ्करः ॥ २३ ॥

सिञ्चन्त्या इति । मनसिजदुःखेन स्मरपीडया दुर्बलायास्तत एव कथमपि बाहुमुन्नमय्योद्यम्य प्रेयांसं प्रियतमम् । प्रियस्थिरेत्यादिना प्रादेशः । सिञ्चन्त्याः स्नपयन्त्याः अङ्गनायाः कराग्रात् सौवर्णं हिरण्मयं वलयं कङ्कणं । कङ्कणं वलयोऽस्त्रियामित्यमरः । लवणेव

स्निह्यन्ती दृशमपरा निधाय पूर्ण
मूर्त्तेन प्रणयरसेन वारिणेव ।
कन्दर्पप्रवणमनाः सखीसिसिक्षा
लक्ष्येण प्रतियुवमञ्जलिश्चकार ॥ ३५ ॥

लावण्यं कान्तिविशेषः । चतुर्वर्णादित्वात् स्वार्थे ष्यञ् प्रत्ययः । लवणो रसरक्षोऽब्धिभेदेषु लवणा त्विषीति विश्वः । यद्वा मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति च यदङ्गे तल्लावण्यमिहोच्यते । तस्य श्रीः सम्पत्तस्याः शेषमतिरिक्तं शरीरसम्पदवशिष्टमिति यावत् । शेषः सङ्कर्षणेऽनन्ते उपयुक्तेतरेऽन्यवदिति विश्वः । तदिवावागलदपतत् । शेषमिति गुणनिमित्तजातिखस्वपोत्प्रेक्षा ॥ ३४ ॥

स्निह्यन्तीति । कन्दर्पप्रवणमनाः स्मरपरवशचित्ता अत एव दृशं निधाय पुंसेव दृष्टिं कृत्वा स्निह्यन्ती दृष्टिविशेषेण स्नेहं प्रकाशयन्तीत्यर्थः । अपरा स्त्री सख्याः सिसिक्षा सेक्तुमिच्छा तस्याः लक्ष्येन व्याजेन बद्धाञ्जलिरेव तिष्ठन्ती न तु सिञ्चन्तीति द्योतनाय सिषिक्षेतीच्छायां सनः प्रयोगः । प्रतियुवं युवानं प्रति । अनस्येत्यव्ययीभावसमासान्तः । मूर्त्तेन मूर्त्तिमता प्रणयरसेनेवेत्युत्प्रेक्षा । पाठादर्थस्य बलीयस्त्वादिवशब्दस्य व्यवहितेनान्वयः वारिणा पूर्णमञ्जलिञ्चकार प्रार्थयामासेत्यर्थः ॥ ३५ ॥

आनन्दमिति । आनन्दं दधति प्रियसम्भावनया हर्षं दधाने श्यामायामध्यमयौवनायाः स्त्रियः । श्यामा यौवनमध्यस्थेत्युत्पलः । मुखे वदने दयिततमेन अतिशयेन दयितः प्रियः । अतिशये तमप्

अमलात्मसु प्रतिफलन्नभित
स्तरुणीकपोलफलकेषु मुहुः ।
विससार सान्द्रतरमिन्दुरुचा
मधिकाऽवभासितदिशां निकरः ॥ ३७ ॥

उपगूढवेलमलघूर्मिभुजैः
सरितामचुक्षुभदधीशमपि ।
रजनीकरः किमिव चित्रमहो
यदुरागिणाङ्गणमनङ्गलघुम् ॥ ३८ ॥

करकरस्पर्शाद्देवाङ्गनानां वपुषि रोमोद्गमः सृष्टइत्युपमा व्यज्यते ॥ ३६ ॥

अमलेति । अधिकमवभासिताः प्रकाशिताः दिशो याभिस्तासा मिन्दुरुचान्निकरोऽमलात्मसु निर्मलमूर्त्तिषु तरुणीनां ये कपोलाः फलकानीव तेष्वभितो मुहुः प्रतिफलन् सङ्क्रामन् सान्द्र तरं प्रचुरतरं विससार दर्पणसङ्क्रमणादिवेति भावः । अत्रेन्दुरुचां कपोलासङ्क्रमेऽपि सङ्क्रमोक्तेरसम्बन्धे सम्बन्धोक्तिरूपातिशयोक्तिः ॥ ३ ॥

उपगूढेति । रजनीकरः चन्द्रः अलघुभिरूर्मिभिरेव भुजै रुपगूढा वेला येन तं सावष्टम्भमिति भावः । सरितामधीशं समुद्रमपि स्वभावादचाभ्यमपीति भावः । अचुक्षुभत्क्षोभयति स्म । क्षुभ्यतेर्ण्यन्ताल्लुङि चङ्युपधाह्रस्वः । अनङ्गेन लघुङ्गतसारं यदवएव रागिणस्तेषाङ्गणमचुक्षुभत् इत्यदः किमिव चित्रं न किञ्चिदित्यर्थः । अत्राचोभ्यमब्धिं चोभयतश्चन्द्रस्य दण्डापूपिक न्यायादन्यचोभकत्वोक्तेरर्थापत्तिरलङ्कारः ॥ ३८ ॥

भवनोदरेषु परिमन्दतया
शयितोऽलसः स्फटिकयष्टिरुचः ।
अवलम्ब्य जालकमुखोपगता
नुदतिष्ठदिन्दुकिरणान्मदनः ॥ ३९ ॥
अविभावितेषुविषयः प्रथमं
मदनोऽपि नूनमभवत्तमसा ।
उदिते दिशः प्रकटयत्यमुना
यदघर्म्मधाम्नि धनुराचकृषे ॥ ४० ॥

भवनेति । परिमन्दतया एकाकित्वादसमर्थतया भवनोदरेषु गृहाभ्यन्तरेषु शयितः सुप्तोऽतएवालसोमदनोजालकमुखोपगतान् गवाक्षविवरप्रविष्टान् अतएव स्फटिकयष्टीनां रुगिव रुक् शोभा येषान्तान् स्फटिकदण्डसन्निभान् इन्दुकिरणानवलम्ब्यावष्टभ्योदतिष्ठत् उत्थितः । अत्रोद्दीधोत्यानयोरभेदविवक्षया उदोऽनूर्ध्वकर्म्मणीति परस्मैपदसिद्धिः । एतत्पदे चाभेदाध्यवसायमूलातिशयोक्त्या स्फटिकयष्टिरुचइत्युपमया च अवलम्ब्येत्यत्रावलम्ब्येवेत्युत्थानस्यावलम्बनहेतुकत्वोत्प्रेक्षा प्रत्याय्यतइत्येतासां सङ्करः ॥ ३९ ॥

अविभावितेष्विति । मदनोऽपि प्रथमञ्चन्द्रोदयात्प्राक् तमसा अविभावितोऽलक्षितः इषुविषयोवाणलक्ष्यं येन सोऽभवत् नूनमित्युत्प्रेक्षा । यद्यस्मादघर्म्मधाम्नि शीतकरे उदिते दिशः प्रकटयति सति अमुना मदनेन धनुराचकृषे आकृष्टं चन्द्रएव महान्दीपको मदनस्याभूदिति भावः ॥ ४० ॥

अमलात्मसु प्रतिफलन्नभित
स्तरुणीकपोलफलकेषु मुहुः ।
विससार सान्द्रतरमिन्दुरुचा
मधिकाऽवभासितदिशां निकरः ॥ ३७ ॥

उपगूढवेलमलघूर्म्मिभुजैः
सरितामचुक्षुभदधीशमपि ।
रजनीकरः किमिव चित्रमदो
यदुरागिणाङ्गणमनङ्गलघुम् ॥ ३८ ॥

करकरस्पर्शादेवाङ्गनानां वपुषि रोषेन सृष्टइत्युपमा वक्ष्यते ॥ ३६ ॥

अमलेति । अधिकमवभासिताः प्रकाशिताः दिशोयाभिस्तासा मिन्दुरुचान्निकरोऽमलात्मसु निर्मलमूर्त्तिषु तरुणीनां ये कपोलाः फलकानीव तेष्वभितोमुहुः प्रतिफलन् सङ्क्रामन् सान्द्र तरं प्रचुरतरं विससार दर्पणसङ्क्रमणादिवेति भावः । अत्रेन्दुरुचां कपोलासङ्क्रमेऽपि सङ्क्रमोक्तेरसम्बन्धे सम्बन्धोक्तिरूपातिशयोक्तिः ॥ २ ॥

उपगूढेति । रजनीकरः चन्द्रः अलघुभिरूर्मिभिरेव भुजै रुपगूढा वेला येन तं सावष्टम्भमिति भावः । सरितामधीशं समुद्रमपि स्वभावादचाभ्यमपीति भावः । अचुक्षुभत्क्षोभयति स्म । क्षुभ्यतेर्ण्यन्ताल्लुङ्णौ चङ्युपधाह्रस्वः । अनङ्गेन लघुङ्कृतसारं यदवएव रागिणस्तेषाङ्गणमचुक्षुभत् इत्यदः किमिव चित्रं न किञ्चिदित्यर्थः । अत्राचोभ्यमब्धिं चोभयतश्चन्द्रस्य दण्डापूपिक न्यायादन्यक्षोभ ऋलेक्तेरर्थापत्तिरलङ्कारः ॥ ३८ ॥

भवनोदरेषु परिमन्दतया
शयितोऽलसः स्फटिकयष्टिरुचः ।
अवलम्ब्य जालकमुखोपगता
नुदतिष्ठदिन्दुकिरणान्मदनः ॥ ३९ ॥

अविभावितेषुविषयः प्रथमं
मदनोऽपि नूनमभवत्तमसा ।
उदिते दिशः प्रकटयत्यमुना
यदघर्म्मधाम्नि धनुराचकृषे ॥ ४० ॥

भवनेति । परिमन्दतया एकाकित्वादसमर्थतया भवनोदरेषु गृहाभ्यन्तरेषु शयितः सुप्तोऽतएवालसोमदनोजालकमुखोपगतान् गवाक्षविवरप्रविष्टान् अत एव स्फटिकयष्टीनां रुगिव रुक् शोभा येषान्तान् स्फटिकदण्डसन्निभान् इन्दुकिरणानवलम्ब्यावष्टभ्यो दतिष्ठत् उत्थितः । अत्रोद्वेधोत्थानयोरभेदविवक्षया उदोऽनूर्ध्व कर्म्मणीति परस्मैपदसिद्धिः । एतत्पदे चाभेदाध्यवसायमूलाति शयोक्त्या स्फटिकयष्टिरुचइत्युपमया च अवलम्बेत्यत्रावलम्ब्येवेत्यु त्थानस्यावलम्बनहेतुकत्वोत्प्रेक्षा प्रत्याय्यतइत्येतासां सङ्करः ॥ ३९ ॥

अविभावितेष्विति । मदनोऽपि प्रथमञ्चन्द्रोदयात्प्राक् तमसा अविभावितोऽलक्षितः इषुविषयोबाणलक्ष्यं येन सोऽभवत् नूनमि त्युत्प्रेक्षा । यद्यस्मादघर्म्मधाम्नि शीतकरे उदिते दिशः प्रकटयति सति अमुना मदनेन धनुराचकृषे आकृष्टं चन्द्रएव महानद्दीपको मदनस्याभूदिति भावः ॥ ४० ॥

युगपद्दिकाशमुदयाद्गमिते
शशिनः शिलीमुखगणोऽलभत
द्रुतमेत्य पुष्पधनुषो धनुषः
कुमुदेऽङ्गनामनसि चावसरम् ॥ ४१ ॥
ककुभां मुखानि सहसोज्ज्वलयन्
दधदाकुलत्वमधिकं रतये ।
अदिदीपदिन्दुरपरो दहनः
कुसुमेषुमत्त्रिनयनप्रभवः ॥ ४२ ॥

युगपदिति । पुष्पधनुः पुष्पधन्वा । वा संज्ञायामिति विकल्पान्नानङादेशः । तस्य धनुः पुष्पचापं पुष्पान्तरं च तस्मा च्चलितो निःसृतः शिली शल्यं मुखं येषान्ते शिलीमुखाः बाणा अलयश्च । अलिबाणौ शिलीमुखावित्यमरः । तेषाङ्गणः शशिन उदयाद्दिकाशमौत्सुक्यमुन्मीलनञ्च युगपदेकदा गमिते प्रापिते अङ्गनानां सुदृशां मनसि हृदये कुमुदे चावसरमवकाशमाश्वास मलभत उभयत्र प्रवेशं लब्धवानित्यर्थः । अत्र चन्द्रोदये कुमुद कामिनीहृदययोर्द्वयोरपि प्रकृतयोः शिलीमुखप्रवेशलक्षणैकधर्म्म योगादौपम्यात्तुल्ययोगिता एकधर्म्मत्वं चात्र शिलीमुखेति श्लिष्टप दोपात्तयोरलिबाणयोरेकत्वाध्यवसायमूलातिशयोक्तिप्रसादादिति सङ्करः ॥ ४१ ॥

ककुभामिति । ककुभां दिशां मुखानि सहसा झटित्युज्ज्वलयन् उद्भासयन् रतये सुरताय अधिकमाकुलत्वमात्सुक्यं दधत् यूनामिति शेषः । अन्यत्र रतये कामदेव्यै आकुलत्वं भय

इति निश्चितप्रियतमागतयः
सितदीधितावुदयवत्यबलाः ।
प्रतिकर्म्म कर्त्तुमुपचक्रमिरे
समये हि सर्व्वमुपकारि कृतम् ॥ ४३ ॥

विक्लवत्वं दधत् । अत्रेरत्रिमुनेर्नयनप्रभवः अत्रिनेत्रसमुद्भव इति पुराणात् त्रिनयनप्रभवोन भवतीत्यत्रिनयनप्रभवः अपरस्त्रिनयनप्रभवादन्योदहनोऽग्निरिन्दुः कुसुमेषुङ्कामम् अदिदीपत् दीपयति स्म । दीप्यतेर्णौ चङि भ्राजेत्यादिना विकल्पान्नोपधाह्रस्वः । अत्र प्रकृते कुसुमेषोर्दीपनं नाम प्रवर्द्धनन्तस्य तत्र प्रतीयमानेन प्रज्वलनेनाभेदाध्यवसायात्तन्निमित्तमिन्दोर्दिङ्मुखोल्लासनादिधर्म्मसम्बन्धादपरोऽयन्दहनइत्यपरशब्दप्रयोगसामर्थ्याद्दहनत्वोत्प्रेक्षा न रूपकमिति रहस्यम् । चन्द्रोदयात्कामोऽवृधे इति तात्पर्य्यम् ॥ ४२ ॥

एवञ्चन्द्रोदयाख्यं उद्दीपनविभावनमुक्त्वा तत्फलमाह । इतीति । इत्येवं सितदीधितावुदयवति अबलाः स्त्रियोनिश्चिता प्रियतमानामागतिरागमनं याभिस्ताः सत्यः प्रतिकर्म्म प्रसाधनं कर्तुं उपचक्रमिरे। प्रतिकर्म्म प्रसाधनमित्यमरः । चन्द्रोदयात्प्रियागमनं निश्चित्य अलङ्कर्तुं प्रक्रान्तादत्यर्थः । तथा हि समये कार्य्यकाले कृतमनुष्ठितं सर्वङ्कर्म्म उपकार्य्युपकारकम्भवति अन्यथा विफलमेवेति भावः । अतोनिश्चित्य प्रवृत्तिरासां युक्तेत्यर्थान्तरन्यासः ॥ ४३ ॥

अथ प्रसाधनमेव प्रपञ्चयति । सममिति । सुतनोः स्त्रियाः उरोजतटौ उरू स्लाघ्यमेकमेव हारमेव भूषणं सममत्रैषम्येण

समसेकमेव दधतुः सुतनो
रुरु हारभूषणमुरोजतटौ ।
घटते हि संहततया जनिता-
मिदमेव निर्विवरतां दधतोः ॥ ४४ ॥

कदलीप्रकाण्डरुचिरोरुतरौ
जघनस्थलीपरिसरे महति ।
रशनाकलापकगुणेन वधू-
र्मकरध्वजद्विरदमाकलयत् ॥ ४५ ॥

दधतुः संहततया संश्लिष्टतया ऐकमत्येन च जनितां निर्विवरतां निरन्तरालतां नीरन्ध्रत्वञ्च दधतोरिदं समभागित्वमेव घटते । अन्तर्भेदान्तरायाद्धि विषयिणां विषयोपभोगास्तदभावात्सम्भोगार्थं हारधारणं युक्तमिति भावः ॥ ४४ ॥

कदलीति । वधूः कदलीप्रकाण्डरुचिरः रम्भास्तम्भसुन्दर ऊरुरेव तरुर्बन्धनवृक्षोयस्मिन् अत्र कदलीकाण्डस्य सौन्दर्य्यमात्रोपमानत्वान्न बन्धनयोग्यवृक्षवाचिना तरुशब्देन पुनरुक्तिः । महति जघनस्थल्येव परिसरः प्रदेशस्तस्मिन् रशनाकलापक एव गुणस्तेन मकरध्वजोमदनः सएव द्विरदस्तमाकलयदबध्नात् । रशनाबन्धेन जघनमतीव मदनोद्दीपकमासीदित्यर्थः । समस्तवस्तुवर्त्ति सावयवरूपकम् ॥ ४५ ॥

अधरेष्विति । सुदृशामधरेष्वोष्ठेषु अलक्तकरसोलाक्षाद्रवः तथा कपोलभुवि गण्डस्थले विशदं शुभ्रं लोध्ररजः तथा नयनपङ्कजयोर्नवमञ्जनञ्च शङ्कनिहितात्ययसः चौरात् न विभिदे भिन्नं

अधरेष्वलक्तकरसः सुदृशां
विशदं कपोलभुवि लोध्ररजः ।
नवमञ्जनं नयनपङ्कजयो
र्बिभिदे न शङ्खनिहितात्पयसः ॥ ४६ ॥

स्फुरदुज्ज्वलाधरदलैर्विलस
द्दशनांशुकेशरभरैः परितः ।
घृतमुग्धगण्डफलकैर्विबभु
र्विकसद्भिरास्यकमलैः प्रमदाः ॥ ४७ ॥

नाभूत् । कर्मकर्त्तरि लिट् । अधरादिनिहितं लाचारागादिकं शङ्खनिहितचीरवत्सावर्ण्यादाश्रयतोऽभेदेन दुर्ग्रहमभूदित्यर्थः । अत्र यदधरालक्तकरसादिकं तच्छङ्खनिहितं चीरमित्येकवाक्यतया वाक्यार्थे वाक्यार्थसमारोपादसम्भवद्वस्तुसम्बन्धोवाक्यार्थनिष्ठोनिदर्शनालङ्कारः तेनाधरालक्तकादीनां गुणतः एकत्वरूपः सामान्यालङ्कारोगम्यते सामान्यङ्गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणात् ॥ ४६ ॥

स्फुरदिति । प्रमदाः स्त्रियः स्फुरन्तश्चलन्तः उज्ज्वलाश्चामलाअधराओष्ठाएव दलानि पत्राणि येषान्तैः परितोविलसन्तो दशनांशवोदन्तकान्तयएव केशरभराः किञ्जल्कपुञ्जायेषान्तैः । घृतानि मुग्धानि गण्डाएव फलकानि कर्णिकायेषान्तैर्विकसद्भिरास्यकमलैर्विबभुः अत्रास्यकमलैरिति रूपणात्प्रमदाएव सरस्य इति सिद्धेरेकदेशविवर्त्ति सावयवरूपकम् । आस्यकुमुदैरिति पाठे कुमुदस्य मुखोपमानकत्वं कविसमयविरुद्धं ज्ञेयत् ॥ ४७ ॥

भजते विदेशमधिकेन जित
स्तदनुप्रवेशमथ वा कुशलः।
मुखमिन्दुरुज्ज्वलकपोलमतः
प्रतिमाच्छलेन सुदृशामविशत् ॥४८॥

ध्रुवमागताः प्रतिहतिं कठिने
मदनेषवः कुचतटे महति।
इतराङ्गवन्न यदिदं गरिम
ग्लपितावलग्नमगमत्तनुताम् ॥ ४९ ॥

भजतइति। अधिकेन प्रबलेन जितो विदेशन्देशान्तरम्भजते अथवा कुशलः कार्य्यचतुरः तदनुप्रवेशं भजते तमेव शरणतया प्रविश्य जीवतीत्यर्थः। अतोहेतोरिन्दुरुज्ज्वलौ कपोलौ यस्य तदिति मुखस्य विम्बग्रहणयोग्यतोक्तेः पदार्थहेतुकङ्काव्यलिङ्गम्। सुदृशां मुखं प्रतिमाच्छलेन प्रतिविम्बव्याजेन अविशत् प्रविष्टः। साक्षाच्चन्द्रएवायं न प्रतिमाचन्द्रइति छलशब्दात्प्रतीतेः छलशब्देनासत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः। पूर्व्वोक्तकाव्यलिङ्गसापेक्षइति सङ्करः तेन कपोलयोर्लोकोत्तरं लावण्यं दर्पणोपम्यञ्च व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥ ४८ ॥

ध्रुवमिति। मदनेषवः कामशराः महति कठिने कुचतटे प्रतिहतिम्प्रतिघातमागताः प्राप्ताध्रुवम्। यद्यस्माद्गरिम्णा निजभारेण ग्लपितङ्कर्शितं अवलग्नं मध्यं येन तदिदं कुचतटम् इतराङ्गेन तुल्यमितराङ्गवत्। तेन तुल्यमिति वतिप्रत्ययः। तनुतां कार्श्यन्नागमत् नाभजत। पृषादिसूत्रेण ङ्गेरङादेशः।

न मनोरमास्वपि विशेषविदां
निरचेष्ट योग्यमिदमेतदिति ।
गृहमेष्यति प्रियतमे सुदृशां
वसनाङ्गरागसुमनस्सु मनः ॥ ५० ॥

वपुरन्वलिप्त परिरम्भसुख
व्यवधानभीरुकतया न वधूः ।
क्षममस्य वाढमिदमेव हि यत्
प्रियसङ्गमेष्वनवलेपमदः ॥ ५१ ॥

तदा मदनेषुपातात्कुचातिरिक्तमङ्गनानामङ्गं क्षाममासीदित्यर्थः ॥ ४९ ॥

नमनोरमास्विति । प्रियतमे गृहमेष्यति आगमिष्यति सति विशेषविदामपि सुदृशां सम्यग्दर्शनीयानां स्त्रीणां मनः कर्त्तृ मनोरमास्वपि वसनाङ्गरागसुमनस्सु वस्त्रगन्धमाल्येषु इदमेतदिति इदं पुरोवर्त्ति वस्त्वेतदिति वसनमिति अनुलेपनमिति सुमनस इति विशेषाकारेण तथा योग्यमस्माकन्धारणार्हमिति च न निरचेष्ट न निरधारयत् प्रियागमनहर्षातिरेकादितिकर्त्तव्यता मूढमभूदित्यर्थः । चिनोतेर्लुङि तङि च्लेः सिच् सार्व्वधातुकार्ध धातुकयोरिति गुणः । हर्षोऽत्र सञ्चारिभावः निश्चयसम्बन्धे ऽप्यसम्बन्धोक्तेरतिशयोक्तिः सुमनःसुमनइति यमकविशेषस्येति संसृष्टिः ॥ ५० ॥

वपुरिति । वधूः स्त्री परिरम्भसुखव्यवधानभीरुकतया आलिङ्गनसुखविच्छेदभीरुत्वेन । भीरुकनपि वक्तव्यइति क्रुकन्प्रत्ययः ।

निजपाणिपल्लवतलस्खलना
दभिनासिकाविवरमुत्पतितैः ।
अपरा परीक्ष्य शनकैर्मुमुदे
मुखवासमास्यकमलश्वसनैः ॥ ५२ ॥
विधृते दिवा सवयसा च पुरः
परिपूर्णमण्डलविकाशभृति ।
हिमधाम्नि दर्पणतले च मुहुः
स्वमुखश्रियं मृगदृशोऽददृशुः ॥ ५३ ॥

वपूर्नान्वलिप्त नानुलिप्तवती अङ्गरागमात्रव्यवधानमपि न सहत इत्यर्थः । लिम्पतेः कर्त्तरि लुङि तङ् । तथा हि अदोवपुः स्त्रिय सङ्गमेषु अनवलेपमचन्दनमगर्व्वञ्चेति यत् । अवलेपस्तु गर्वे स्यालेपने भूषणेऽपि चेति विश्वः । इदमनवलेपनत्वमेवास्य वपुषोवाढं भृशं क्षमं युक्तम् । स्रेषानुप्राणितोऽयमर्थान्तरन्यासः ॥५१॥

निजेति । अपरा स्त्री निजपाणिपल्लवतलस्य स्खलनादभिघाता दभिनासिकाविवरं नासारन्ध्रमति उत्पतितैरास्यकमलस्य श्वसनै र्मुखमारुतैर्मुखवासं मुखवासनां शनकैः परीक्ष्य मुमुदे । इयं वासकसज्जिका नायिका ॥ ५२ ॥

विधृतइति । दिवा आकाशेन सवयसा वयस्यया च पुरोऽग्रे विधृते विधारिते परिपूर्णमण्डलविकाशं विम्बशोभां विभर्त्तीति तद्भृत् तस्मिन्हिमधाम्नि चन्द्रे दर्पणतले च मृगदृशः स्त्रियः स्वमुखश्रियं पूर्व्वत्रोपमानभूतामुत्तरत्रोपमेयभूताञ्चेत्यर्थः । मुहुर्ददृशुः औपम्यपरीक्षार्थमिति भावः । अत्रान्यश्रियोऽन्यत्रा

अधिजानु बाहुमुपधाय नम
त्करपल्लवाऽर्पितकपोलतलम् ।
उदकण्ठि कण्ठपरिवर्त्तिकल
स्वरशून्यगानपरयापरया ॥ ५४ ॥

सम्भवाद्वस्तु तत्सदृशीमिति साद्दश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शना । तथा चन्द्रदर्पणयोर्मुखवयसोश्च यथासङ्ख्यमन्वयाद्यथासङ्ख्यालङ्कारश्च । तदुभयापेक्षया चन्द्रदर्शनयोर्मुखश्रीदर्शनस्थानत्वेन प्रस्तुतयोरेवौपम्यस्य गम्यत्वात्तुल्ययोगितेति सङ्करः ॥५३॥

अधिजान्विति । नमति कपोलार्पणाय नम्रीभवति करपल्लवे अर्पितं निहितङ्कपोलतलङ्गण्डस्थलं यस्य तम्बाहुं अधिजानु जानुनि । विभक्त्यर्थेऽव्ययीभावः । उपधाय निधाय कूर्परेण जानुमवष्टभ्येत्यर्थः । कण्ठे परिवर्त्तत इति कण्ठपरिवर्त्ति न तु मुखोच्चारितमित्यर्थः । कलमव्यक्तमधुरं स्वरशून्यन्तारध्वनिहीनं षड्जादिस्वराभिव्यक्तिहीनं वा यद्गानन्तत्परया तदासक्तया मन्दकण्ठेनैव गायन्त्येत्यर्थः । कालक्षेपार्थमिति भावः अथ चोत्कण्ठानुभावः । अपरया स्त्रिया उदकण्ठि उत्कण्ठितं प्रियसङ्गमायोत्सुकया स्थितमित्यर्थः । भावे लुङि चिणोलुक् । अत्र कालक्षेपासहिष्णुत्वलक्षणमौत्सुक्यं सञ्चारि तन्निबन्धनात्प्रेयोऽलङ्कारः । परयापरयेति यमकविशेषसंसृष्टिः । नायिका विरहोत्कण्ठिता । चिरं पत्युरनालोके विरहोत्कण्ठितोन्मना इति लक्षणात् ॥ ५४ ॥

प्रणयेति । अथ प्रसाधनानन्तरं मुग्धतरोऽत्यन्तकाममोहितस्तरुणीजनः प्रणयप्रकाशनविदोऽनुरागव्यञ्जनचतुरा इत्यर्थः ।

प्रणयप्रकाशनविदो मधुराः
सुतरामभीष्टजनचित्तहृतः ।
प्रजिघाय कान्तमनु मुग्धतर-
स्तरुणीजनो दृश इवाथ सखीः ॥ ५५ ॥
न च मेऽवगच्छति यथा लघुतां
करुणां यथा च कुरुते स मयि ।
निपुणं तथैनमुपगम्य वदे-
रभिदूति काचिदिति सन्दिदिशे ॥ ५६ ॥

मधुराः मधुरभाषिणीः अन्यत्र रम्याकृतीः सुतरामभीष्ट जनस्य चित्तहृतोमनोहारिणीः सखीः दृश इव कान्तमनु प्रेयोजनं प्रति प्रजिघाय प्रेषितवान् । हिनोतेर्लिट् इवेन सह समास वचनात् दृश इवेति उपमासमासः । तथा सखीनामासत्यन्तरङ्गत्व कार्य्यदर्शित्वादिव्यञ्जनादलङ्कारेण वस्तुध्वनिः ॥ ५५ ॥

तथा काचिन्नायिका दूतीं वाचिकमनुशास्ति । न चेति । स मे दयितोयथा मयि करुणां कुरुते यथा लघुतामल्पताञ्च नाव गच्छति न मन्यते । एनन्दयितमुपगम्य प्राप्य तथा तेन प्रकारेण निपुणं वदेः । विध्यर्थे प्रार्थने वा लिङ् । इतीत्थं काचिन्नायिका अभिदूति । अभिलक्षणेऽव्ययीभावे नपुंसकह्रस्वत्वम् । सन्दिदिशे सन्दिष्टवती । कर्त्तरि लिट् स्वरितेत्त्वादात्मनेपदम् । नायिका तु कलहान्तरिता । कोपात्कान्तं पराणुद्य पश्चात्तापसमन्वितेति लक्षणात् ॥ ५६ ॥

दयिताय मानपरयापरया
त्वरितं ययावगदितापि सखी ।
किमु चोदिताः प्रियहितार्थकृतः
कृतिनो भवन्ति सुहृदः सुहृदाम् ॥ ५७ ॥

प्रतिभिद्य कान्तमपराधकृतं
यदि तावदस्य पुनरेव मया ।
क्रियतेऽनुवृत्तिरुचितैव ततः
कलयेदमानमनसं सखि माम् ॥ ५८ ॥

दयितायेति । मानपरया अभिमानवत्या । अत एवापरया नायिकया अगदिता दयितमानयेत्यनुक्ता सखी दयिताय दयित मानेतुम् । क्रियार्थोपपदस्य च कर्मणि स्थानिन इति चतुर्थी । त्वरितं शीघ्रं ययौ अन्यथा मरणशङ्केति भावः । तथा हि सुष्ठु शोभनं हृदयं येषान्ते सुहृदो मित्राणि । सुहृद्दुर्हृदौ मित्रामित्रयो रिति निपातः । चोदिताः प्रेरिताः सन्तः सुहृदां प्रियो हृद्यः हितः श्रेयस्करश्च योऽर्थस्तं कुर्वन्तीति प्रियहितार्थकृतः कृतमेषामस्तीति कृतिनः कृतकृत्या भवन्ति किम् किन्तु चोदनां विनैवेति भावः । अर्थान्तरन्यासः । नायिका च पूर्ववत् ॥ ५७ ॥

अथ काचित्कलहान्तरिता कान्तम्प्रति त्रिभिर्दूतीं सन्दिशति । प्रतिभिद्येत्यादि । अपराधकृतमागस्कारिणं कान्तम्प्रतिभिद्य निराकृत्य पुनर्मयैवास्यानुवृत्तिरनुसरणं क्रियते यदि ताव दुचितैव पतिव्रतानां प्राणेश्वरचित्तानुवृत्तेर्धर्मत्वादिति भावः । किन्तु हे सखि ततोऽनुवृत्तेर्मामानमनसमभिमानहीनचित्ता कलयेत् मन्येत ॥ ५८ ॥

अवधीर्य्य धैर्य्यकलिता दयितं
विदधे विरोधमथ तेन सह ।
तव गोप्यते किमिव कर्त्तुमिदं
न सहास्मि साहसमसाहसिकी ॥ ५९ ॥

तदुपेत्य मास्म तमुपालभथाः
किल दोषमस्य न हि विद्म वयम् ।
इति सम्प्रधार्य्य रमणाय वधू
र्विहितागसेऽपि विससर्ज्ज सखीम् ॥ ६० ॥

तर्ह्युलाघवाय विगृह्यैव स्थीयतामित्याह । अवधीर्य्येति । धैर्य्यकलिता कलितधैर्य्या सती । वाहिताग्न्यादिष्विति निष्ठायाः परनिपातः । दयितमवधीर्य्य तिरस्कृत्य तेन सह विरोधं विदध करोमीति चेत् । दधातेः कर्त्तरि लट् । हे सखि तव किमिव गोप्यते निगूह्यते न किञ्चिदित्यर्थः किन्तु कथ्यत एवेति कथयति सहसा बलेन वर्त्ततइति साहसिकी । ओजः सहोऽम्भसा वर्त्तत इति ठक् । सा न भवतीत्यसाहसिकी अहमिति शेषः । इदं साहसं विरोधं विरोधाचरणरूपं साहसकृत्यङ्कर्त्तुं । शकधृषेत्यादिना तुमुन् । सहतइति सहा समर्था । पचाद्यच् । नास्मि । अत्रासाहसिकत्वस्य विशेषणगत्या साहसासहनहेतुत्वोक्तेः पदार्थहेतुकङ्काव्यलिङ्गमलङ्कारः ॥ ५९ ॥

तर्हि किमत्र कार्य्यमतआह । तदिति । तत्तस्मात्तं वल्लभमुपेत्य मास्मोपालभथाः नोपालभस्व तद्दोषं न गणयेरित्यर्थः । स्मोत्तरे लुङ् चेति उपाङ् पूर्व्वाल्लुङ् न माङ्योगे इत्यट्प्रतिषेधः । ननु

ननु सन्दिशेति सुदृशोदितया
त्रपया न किञ्चन किलाभिदधे ।
निजमैक्षि मन्दमनिशं निशितैः
कृशितं शरीरमशरीरशरैः ॥ ६१ ॥

सापराधः कथं नोपालभ्यस्तत्राह । वयमस्य दोषमपराधं न विद्म किल अजानानाइव तिष्ठामइत्यर्थः । कार्य्यार्थिनः कुतो गर्व्वइति भावः । विदोलटोवेति णलादेशः । इति सम्प्रधार्य्य निश्चित्य वधूः नायिका विहितागसे कृतापराधायापि रमणाय प्रेयसे । क्रियाग्रहणाच्चतुर्थी । सखीं विससर्ज प्रजिघाय विरहासहिष्णुतयेति भावः । एषा कलहान्तरिता प्रौढा च ॥ ६० ॥

नन्विति । ननु सन्दिश सन्देशं ब्रूहि इत्युदितया दूत्या कथितया सुदृशया नायिकया कर्त्र्या त्रपया हेतुना किञ्चन नाभिदधे किल नाभिहितं खलु । किन्तु निशितैरशरीरशरैरनङ्गबाणैरनिशं कृशितं कृशीकृतम् । कृशशब्दात्तत्करोतीति ण्यन्तात्कर्म्मणि क्तः णाविष्ठवद्भावे रऋतोहलादेर्लघोरित्यृकारस्य रेफादेशः । निजं शरीरं मन्दमैक्षि ईक्षितम् । एषापि कलहान्तरिता मध्यमा च । त्रपया निजहृदयानभिधानान्निजशरीरनिरीक्षणेन स्वावस्थानिवेदनाच्च तुल्यलज्जास्मरत्वगमादिति । इयञ्च पञ्चमी कार्श्याख्या कामावस्था । दृङ्मनः सङ्गसङ्कल्पाजागरः कृशता रतिः ह्रीत्यागोन्मादमूर्च्छान्ताइत्यनङ्गदशादश ॥ ६१ ॥

इत्यन्नायिकाभिरुपदिष्टादूत्यः किमकुर्वन्नित्यतआह । ब्रुवत इति । प्रगल्भाः धृष्टाः मतिगर्भाः प्रतिभासाराश्च गिरोयासां तादूत्यः

ब्रुवते स्म दूत्यउपसृत्य नरा
न्नरवत्प्रगल्भमतिगर्भगिरः।
सुहृदर्थमीहितमजिह्मधियां
प्रकृतेर्विराजति विरुद्धमपि ॥ ६२ ॥

मम रूपकीर्त्तिमहरद्भुवि य
स्तदनुप्रसक्तहृदयेयमिति।
त्वयि मत्सरादिव निरस्तदयः
सुतरां क्षिणोति खलु तां मदनः ॥ ६३ ॥

नरान् पुरुषानुपसृत्य नरवत् नरैः पुम्भिस्तुल्यम् । तेन तुल्यं क्रिया चेद्वतिरिति वतिप्रत्ययः । ब्रुवते स्म न चैतावता वैजात्यं दूषणमित्यर्थान्तरन्यासेनाह । सुहृदर्थमिति । तथा हि अजिह्मधियामकुटिलबुद्धीनां सम्बन्धि सुहृदे सुहृदर्थम् । अर्थेन सह नित्यसमासः सर्व्वलिङ्गता चेति वक्तव्या । ईहितं चेष्टितं प्रकृते र्विरुद्धमपि स्वभावविपरीतमपि विराजति शोभते । तस्मान्न धार्ष्ट्यं दोषइत्यर्थः ॥ ६२ ॥

अथ काचिद्दूती कञ्चित्प्रियम्प्रति सप्तभिः प्रार्थयते । ममे त्यादि । योभुवि मम रूपकीर्त्तिं सौन्दर्य्यप्रथमहरत् इयं त्वत्प्रिया तदनुप्रविष्टहृदया तस्मिन्नासक्तचित्तेति अतोहेतोस्त्वयि मत्सरादिव मदनोनिरस्तदयोनिष्कृपः सन् तां त्वत्प्रियां सुतरां क्षिणोति क्षपयति खलु । एतेन कार्श्यावस्थोक्ता । अत्र साक्षात्प्रति पक्षभूतनायकपीडासमर्थस्य मदनस्य तदीयनायिकापीडनोक्त्या प्रत्यनीकालङ्कारः । स च त्वयि मत्सरादिवेति हेतूत्प्रेक्षोत्थापित

तव सा कथासु परिघट्टयति
श्रवणं यदङ्गुलिमुखेन मुहुः ।
घनतां ध्रुवं नयति तेन भव
द्गुणपूगपूरितमतृप्ततया ॥ ६४ ॥

उपताप्यमानमलघूष्णिमभिः
श्वसितैः सितेतरसरोजदृशः ।
द्रवतां न नेतुमधरं क्षमते
नवनागवल्लिदलरागरसः ॥ ६५ ॥

इति सङ्करः । बलिनः प्रतिपक्षस्य प्रतीकारे सुदुष्करे । यस्तदी यतिरस्कारः प्रत्यनीकन्तदुच्यते इति लक्षणात् ॥ ६३ ॥

तवेति । सा त्वत्प्रिया तव कथासु गुणकीर्त्तनेषु मुहुरङ्गुलि मुखेनाङ्गुल्यग्रेण श्रवणं श्रोत्रविवरं परिघट्टयति स्फाजयतीति यत् यद्दृच्छयेति शेषः तेन परिघट्टनेन भवद्गुणपूगपूरितं श्रवणं अतृप्ततया तावद्गुणग्रहणेनासन्तुष्टतया घनतां नयति । बहुतण्डुल मानार्थमस्थादिवद्भूयोगुणप्रवेशाय स्रेषयतीत्यर्थः । ध्रुवमित्युत्प्रे क्षायां अत्र कण्डूविनोदनार्थं श्रोत्रघट्टने घनतानयनमुत्प्रेक्ष्यते ॥ ६४ ॥

उपेति । अलघुरन्तःसन्तापोपाधिकः उष्णिमा उष्णत्वं येषान्तैः श्वसितैर्निश्वासैरुपताप्यमानं सितेतरसरोजदृशोनीलोत्पलाक्ष्या अधरं नवनागवल्लिदलानान्ताम्बूलदलानां रागरसोरञ्जनद्रवोद्रवता मार्द्रतां नेतुं न क्षमते न शक्नोति । एतेन ज्वरावस्थोक्ता। अत्र द्रवत्व सम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ६५ ॥

दधति स्फुटं रतिपतेरिषवः
शितता यदुत्पलपलाशदृशः ।
हृदयं निरन्तरबृहत्कठिन
स्तनमण्डलावरणमप्यभिदन् ॥ ६६ ॥

कुसुमादपि स्मितदृशः सुतरां
सुकुमारमङ्गमिति नापरथा ।
अनिशं निजैरकरुणः करुणं
कुसुमेषुरुत्तपति यद्विशिखैः ॥ ६७ ॥

दधतीति । रतिपतेरिषवः शिततां नैशित्यन्दधति स्फुटमित्युत्प्रेक्षायां । यद्यस्मान्निरन्तरं नीरन्ध्रं बृहत्कठिनञ्च यत् स्तनमण्डलन्तदेवावरणं वर्म्म यस्य तत्तदपि उत्पलपलाशदृश उत्पलदलाक्ष्याः हृदयमभिदन् भिन्दन्ति स्म । भिदेर्लुङि इरितोवेति च्लेरङादेशः । सावरणमपि भिन्नमिति विरोधोत्थापितेयं स्मरशरनैशित्योत्प्रेक्षा । तया च रन्ध्रान्वेषिणा कामेन निपीड्यमानायास्तस्यास्तद्विरहाजीवितसंशयमापादयतीति वस्तु द्योत्यते ॥ ६६ ॥

कुसुमादिति । स्मितदृशः स्मेराक्ष्याः अङ्गं कुसुमादपि सुतरां सुकुमारं कोमलमितीदमपरथा अन्यथा न किन्तु सत्यमेवेत्यर्थः । यद्यस्मात्कुसुमेषुरकरुणोनिष्कृपः सन् निजैर्विशिखैर्बाणैः । पृषत्कबाणविशिखा इत्यमरः । कुसुमैरेवेत्यर्थः । करुणं दीनं यथा तथा अनिशं नित्यमुत्तपति तापयतीत्यर्थः । तपतिरयमौवादिकः सकर्मकः । कुसुमाधिकसौकुमार्य्याभावे कुसुमैः पीड्यतइति

विषतां निषेवितमपक्रियया
समुपैति सर्व्वमिति सत्यमदः ।
अमृतस्रुतोऽपि विरहाद्भवतो
यदमूं दहन्ति हिमरश्मिरुचः ॥ ६८ ॥

उदितं प्रियां प्रति सहार्दमिति
अदधीयत प्रियतमेन वचः ।
विदितेङ्गिते हि पुरएव जने
सपदीरिताः खलु लगन्ति गिरः ॥ ६९ ॥

॥ कुलकम् ॥

कुसुमाधिकसौकुमार्य्यगुणोत्प्रेक्षा नापरथेतिव्यञ्जकप्रयोगाद्वाच्या ॥ ६७ ॥

विषतामिति । अपक्रियया विपरीतप्रयोगेण निषेवितमुपयुक्तं सर्वं अमृतमपीति भावः । विषतां विषवदहितत्वं समुपैति इत्यदइदं विषत्वं सत्यं ध्रुवं यद्यस्मात् अमृतस्रुतोऽपि । स्रवतेः क्विपि तुक् । हिमरश्मिरुचश्चन्द्रपादाः भवतोविरहाद्धेतोस्त्वया विना सेवनादित्यर्थः । अमूं त्वत्प्रियान्दहन्ति याः पूर्व्वं त्वया सह सेवनादाह्लादयन्निति भावः । एतेन विषयद्वेषरूपा अरत्यवस्थोक्ता । अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६८ ॥

उदितमिति । प्रियाम्प्रति प्रियामुद्दिश्य हृदयस्येदं हार्दं प्रेम । प्रेमा ना प्रियता हार्दम्प्रेम स्नेहइत्यमरः । तस्येदमित्यण् प्रत्ययः । हृदयस्य हृल्लेखयदण्लासेष्विति हृदयस्य हृदादेशः । सहार्दं सस्नेहं इत्युदितम् । वदेः कर्म्मणि क्तः वचिस्वपीत्यादिना

दयिताहृतस्य युवभिर्मनसः
परिमूढतामिव गतैः प्रथमम् ।
उदिते ततः सपदि लब्धपदैः
क्षणदाकरेऽनुपदिभिः प्रययै ॥ ७० ॥

सम्प्रसारणम् । वचोदूतीवाक्यं प्रियतमेन अदधीयत विश्वसितम् । दधातेः कर्म्मणि लङ् अदन्तरोरुपसर्ग्गवचनाच्छब्दस्य प्राक् प्रयोगः । हि यस्मात् पुरः पूर्व्वमेव विदितेङ्गिते विदितपराभिप्राये जने । इङ्गितं हृद्गतोभावः । सज्जने समुदीरिताः गिरः सपदि लगन्ति सज्जन्ति खलु स्वयं प्रियाहृदयवेदित्वात् । स्वबुद्धेः संवादेन दूतीकथितं प्रियाविरहदुःखं विश्वासेत्यर्थः । अर्थान्तरन्यासः । एषा कलहान्तरिता अतएव मानाख्योविप्रलम्भः शृङ्गारः पूर्व्वानुरागमाख्याय प्रवासकरुणात्मना विप्रलम्भस्तुर्थोऽयमित्युक्तम् ॥ ६८ ॥

दयितेति । प्रथमञ्चन्द्रोदयात्प्राक् परिमूढतां निजमनोपहर्तृमार्ग्गानभिज्ञतां गतैः ततः पश्चात्क्षणदाकरे चन्द्रे उदिते सति सपदि लब्धपदैः दृष्टचोरपदचिह्नैः दयिताभिर्हृतस्या दृष्टस्यापहृतस्य च मनसोऽनुपदिभिरन्वेष्टृभिरन्विष्यद्भिरित्यर्थः । अतएव गम्योत्प्रेक्षा प्रागवलम्बितधैर्य्यत्यागनिमित्ता । अनुपद्यन्वेष्टेति निपातः । अन्वेष्टानुपदी प्रोक्तइति वैजयन्ती । युवभिः प्रययै प्रयातम् । यातेर्भावे लिट् । अत्रोक्तपदान्वेषणोत्प्रेक्षया यूनां चोरयाहि रूपकं गम्यतइत्यलङ्कारेणालङ्कारध्वनिः ॥ ७० ॥

निपपात सम्भ्रमभृतः श्रवणा
दसितभ्रुवः प्रणदितालिकुलम् ।
दयितावलोकविकसन्नयन
प्रसरप्रणुन्नमिव वारिरुहम् ॥ ७१ ॥

उपनेतुमुन्नतिमतेव दिवं
कुचयोर्युगेन तरसा कलिताम् ।
रभसोत्थितामुपगतः सहसा
परिरभ्य कश्चन वधूमरुधत् ॥ ७२ ॥

अथ यूनां गृहप्राप्त्यनन्तरं वृत्तान्तं वर्णयति । निपपातेति । सम्भ्रमभृतः प्रत्युत्थानसंभ्रमिण्याः असितभ्रुवोऽङ्गनायाः प्रणदितालिकुलङ्कूजदलिपुञ्जम् । उपसर्गादसमासेऽपि णोपदेशस्येति णत्वम् । वारिरुहं श्रवणोत्पलं दयितावलोकेन विकसतोविस्तारङ्गच्छतोनयनस्य प्रसरेण प्रसारेण प्रणुन्नमिव । पूर्ववर्णत्वम् । निपपात तथा सम्भ्रान्तमित्यर्थः । अत्र सम्भ्रमहेतुकस्य कर्णोत्पलपातस्य नयनप्रसारहेतुकत्वमुत्प्रेक्ष्यते । एषा च दृष्टा ॥ ७१ ॥

उपनेतुमिति । सहसोपगतः हठादागतः कश्चन युवा अत एव रभसेनोत्थितां अतएवोन्नतिमता कुचयोर्युगेन करणेन दिवमाकाशमुपनेतुमिवोर्ध्वमुत्क्षेप्तुमिवेति फलोत्प्रेक्षा उत्थाननिमित्तौन्नत्यगुणनिमित्ता । तरसा बलेनाकलितां व्याक्षिप्तां वधूम्प्रियाम्परिरभ्याश्लिष्यारुधत् रुद्धवान् उपवेशितवान् ऊर्ध्वोत्क्षेपान्निवारितवान् इति चार्थः । रुधेर्लुङि इरितोवेति विकल्पात् च्लेरङादेशः । एषा दृष्टा ॥ ७२ ॥

अनुदेहमागतवतः प्रतिमां
परिणायकस्य गुरुमुद्वहता।
मुकुरेण वेपथुभृतोऽतिभरात्
कथमप्यपाति न वधूकरतः॥ ७३ ॥

अवनम्य वक्षसि निमग्नकुच
द्वितयेन गाढमुपगूढवता।
दयितेन तत्क्षणचलद्रशना
कलकिङ्किणीरवमुदासि वधूः॥ ७४ ॥

अनुदेहमिति। अनुदेहन्देहस्य पश्चात्। अव्ययं विभक्तीत्यादिना पश्चादर्थेऽव्ययीभावः। आगतवतः परिणायकस्य परिणेतुः वोढुरित्यर्थः। नयतेर्ण्वुल् प्रत्ययः। उपसर्गादसमासेऽपीति णत्वम्। गुरुम्पूज्याम्भारवतीञ्च प्रतिमाम्प्रतिबिम्बमुद्वहता पश्चात् स्थितस्यापि तदाभिमुख्यादिति भावः। मुकुरेण दर्प्पणेन कर्त्रा। दर्प्पणे मुकुरादर्शावित्यमरः। वेपथुभृतानवोढतया भयशृङ्गाराभ्याङ्कम्पमानात् अति अतिमात्रोभरोयस्य तस्मादतिभरात् प्रतिबिम्बगुरुकुमुरवत्त्वादिति भावः। वध्वानवोढायाः करतः पाणितलात्। पञ्चम्यास्तसिल्। कथमपि नापाति न पतितं महता प्रयत्नेन धारितइत्यर्थः। भावे लुङ्। एषा च मुग्धा। अत्र वधूकरस्य भारासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः गुरुमिति श्लेषोत्थापितेति सङ्करः॥ ७३ ॥

अवनम्येति। अवनम्य गाढमुपगूढवता आश्लिष्टवता अतएव वक्षसि निमग्नकुचद्वितयेन दयितेन तत्क्षणे चलन् उद्गच्छन्

करुद्धनीवि दयितोपगतौ
गलितं त्वराविरहितासनया ।
क्षणदृष्टहाटकशिलासदृश-
स्फुरदूरुभित्ति वसनं ववसे ॥ ७५ ॥
पिदधानमन्वगुपगम्य दृशौ
ब्रुवते जनाय वद कोऽयमिति ।
अभिधातुमध्यवससौ न गिरा
पुलकैः प्रियं नववधूर्न्यगदत् ॥ ७६ ॥

रशनायाः कलकिङ्किणीरवो यस्मिन् कर्मणि तद्यथा तथा वधूरङ्गना उदासि उत्क्षिप्ता। अस्यतेः कर्मणि लुङ्। एषा च हृष्टा रोमाञ्चाद्यनुभाववती च। स्वभावालङ्कारः॥ ७४ ॥

करुद्धेति । दयितोपगतौ प्रियागमने सति अत एव त्वरया विरहितन्त्यक्तमासनं यया तया उत्थितयेत्यर्थः कयाचिदिति शेषः अत एव गलितं स्रस्तं अत एव करुद्धनीव करगृहीतबन्धं वसनं क्षणं दृष्टा हाटकशिलासदृशो हेमशिलाप्रतिमा स्फुरन्ती ऊरुभित्तिरूरुदेशो यस्मिन् कर्मणि तद्यथा तथा। हिरण्यं हेम हाटकमित्यमरः। ववसे आच्छादितम्। वस्तेराच्छादनार्थात्कर्मणि लिट् । ऊरुभित्तिरिवेत्युपमितसमासः । अत्रोपमयोः संसृष्टिः ॥ ७५ ॥

पिदधानमिति । नववधूर्नवोढा अन्वक् पश्चादुपगम्य दृशौ पिदधानं छादयन्तं प्रियं दृष्टिच्छादकः कः वद इति ब्रुवते पृच्छते जनाय गिरा वाचा अभिधातुन्नाध्यवससौ नोत्सेहे लज्जयेति

उदितोरुसादमतिवेपथुमत्
सुदृशोऽभिभर्त्तृ विधुरं त्रपया ।
वपुरादरातिशयशंसि पुनः
प्रतिपत्तिमूढमपि बाढमभूत् ॥ ७७ ॥
परिमन्थरामिरलघूरुभरा
दधिवेश्म पत्युरुपचारविधौ ।
स्खलिताभिरप्यनुपदं प्रमदाः
प्रणयातिभूमिमगमन् गतिभिः ॥ ७८ ॥

भाव: । अध्यत्तपूर्व्वात् स्यतेः कर्त्तरि लिट् । किन्तु पुलकैर्व्यगदत् । अत्र प्रियज्ञानस्यार्थस्य लज्जया असंलचितस्य पुलकैः प्रकाशनात् सूक्ष्मालङ्कारः । असंलचितसूक्ष्मार्थप्रकाशः सूक्ष्म उच्यतइति लक्षणात् ॥ ७६ ॥

उदितेति । अभिभर्त्तृ भर्त्तृसमचं । लक्षणेनाभिप्रती आभिमुख्ये इत्यव्ययीभावः । उदितउत्पन्नऊरुसादःऊर्व्वोर्निश्चेष्टता यस्य तत् अतिवेपथुमत् अतिकम्पवत् । एतेन विशेषणद्वयेन प्रत्युत्थानालिङ्गनविरोधेन स्तम्भवेपथू सात्विकावुक्तौ । त्रपया विधुरं विलचं । एतेन लज्जासञ्चारिणा प्रियवाक्कुण्ठत्वमुक्तम् । एवं प्रतिपत्तिमूढमपि इतिकर्त्तव्यतामूढमपि सुदृशोवपुर्वाढम्भृशं आदरातिशयशंसि मुखरागादिलिङ्गैरादरविशेषव्यञ्जकमभूत् सत्यादरे किमुपचारैरिति भावः ॥ ७७ ॥

परीति । प्रमदा अधिवेश्म निजवेश्मनि पत्युरुपचारविधौ प्रत्युत्थानादिकर्म्मणि अलघोर्महतऊरुभरात् परिमन्थराभि

मधुरोन्नतभ्रु ललितञ्च दृशोः
सकरप्रयोगचतुरञ्च वचः ।
प्रकृतिस्थमेव निपुणागमितं
स्फुटनृत्यलीलमभवत्सुतनोः ॥ ७९ ॥

तदयुक्तमङ्ग तव विश्वसृजा
न कृतं यदीक्षणसहस्रतयम् ।
प्रकटीकृता जगति येन खलु
स्फुटमिन्द्रताद्य मयि गोत्रभिदा ॥ ८० ॥

ग्लस्याभिः अनुपदम्पदेपदे स्खलिताभिरपि गतिभिः प्रणयाति भूमिं प्रेमप्रकर्षमगमन् । परं प्रेमास्पदीभूतादृत्यर्थः । प्रत्युत्थानादपि स्खलितगमनमेव पत्युः प्रीतिकरमभूदिति भावः । स्त्रीणां स्खलनं पत्युः प्रीतिकरमिति विरोधाभासोऽलङ्कारः ॥ ७८ ॥

मधुरेति । मधुरं मनोहरं यथा तथोन्नते उच्चलिते भ्रुवौ यस्मिन् तन्मधुरोन्नतभ्रु । गोस्त्रियोरुपसर्ज्जनस्येति ह्रस्वत्वम् । दृशोर्ललितं नयनचेष्टा च सकरप्रयोगं हस्ताभिनयसहितं तच्चतुरञ्च तद्वचस्य सुतनोः स्त्रियाः प्रकृतिस्थमेव स्वभावसिद्धमेव सदपि निपुणेन निपुणाचार्य्येणागमितमभ्यासितम् । अतएव स्फुटं प्रथितं यन्नृत्यन्तस्य लीलेव लीला यस्य तत्तथोक्तमभवदिति निदर्शनालङ्कारः । तया नर्त्तक्युपमा गम्यते ॥ ७९ ॥

अथ कस्याश्चित्सपत्नीनामग्रहणात्क्रुद्धतायाः कान्तोपालम्भं विशेषकेणाह । तदित्यादि । अङ्गेत्यामन्त्रणे । विश्वसृजा विधात्रा तव

न विभावयत्यनिशमक्षिगता
मपि मां भवानतिसमीपतया।
हृदयस्थितामपि पुनः परितः
कथमीक्षते वहिरभीष्टतमाम् ॥ ८१ ॥

ईक्षणसहस्रतयं नेत्रसहस्रसमूहः। सङ्ख्यायाश्चवयवे तयप्। न क्षतं न स्पृष्टमिति यत् तदयुक्तं कुतः येन कारणेन मयि विषये स्फुटं प्रत्यक्षमेव गोत्रभिदा नामभेदिना च। गोत्रं नाम्नि कुलेऽप्य द्राविति यादवः। त्वयेति शेषः। अद्य इन्द्रता जगति प्रकटीकृता खलु। अत्र गोत्रभिदिति श्लेषानुप्राणितं सहस्राक्षत्वमुत्प्रेक्ष्यते ॥ ८० ॥

नेति। अनिशमक्षिगताञ्चक्षुःसन्निकृष्टामपि द्वेष्यामिति च गम्यते। द्वेष्ये त्वक्षिगतइत्यमरः। मामतिसमीपतया भवान्न विभावयति। शेषे प्रथमइति प्रथमपुरुषः। इन्द्रियसन्निकृष्टमपि न लक्ष्यतइति विरोधाभासनाऽर्थोऽपिशब्दः। परमार्थस्तु द्वेष्यत्वा दतिसामीप्याच्च अविभावनं न चित्रमिति भावः। अभीष्टतमां पुनर्हृदयस्थितां हृदयानपेतां अन्तर्हितामिति च गम्यते। अतएव विरोधाभासकोऽपिशब्दः। वहिः पुरतः कथम्भवान् ईक्षते इदन्तु चित्रं अतिसामीप्यव्यवधानस्यापि दर्शनप्रति बन्धकत्वादिति भावः। प्रेमास्पदं वस्तु परोक्षमप्यपरोक्षमीक्षते इतरदपरोक्षमपि परोक्षमेवेति तात्पर्यार्थः। विरोधाभासयोः सङ्करः ॥ ८१ ॥

इति गन्तुमिच्छुमभिधाय पुरः
क्षणदृष्टिपातविकसद्वदनाम्।
स्वकरावलम्बनविमुक्तगल
त्कलकाञ्चि काञ्चिदरुणत्तरुणः॥ ८२॥

अपयाति सरोषया निरस्ते
कृतकं कामिनि चुक्षुवे मृगाक्ष्या।
कलयन्नपि सव्यथोऽवतस्थे
ऽशकुनेन स्खलितः किलेतरोऽपि॥ ८३॥

इतीति। इत्यभिधाय पुरोगन्तुमिच्छुं क्षणं दृष्ट्योः पातेन विकसद्वदनां परस्परदृष्टिपातमात्रगतकोपामित्यर्थः। काञ्चिन्नायिका न्तरुणोयुवा स्वकरावलम्बनं प्रियकरेण ग्रहणं तेन विमुक्ता मुक्त बन्धना अतएव गलन्ती भ्रंशमाना कला मधुरा काञ्ची यस्मिन् कर्मणि तद्यथा तथा अरुणत् रुद्धवान्। रुधादिभ्यः श्नम्। एषा च कलहान्तरिता॥ ८२॥

अपयातीति। सरोषया मृगाक्ष्या निरस्ते कामिनि भर्त्तरि अपयाति निर्याते सति कृतकं कृत्रिमं यथा तथा चुक्षुवे तन्निर्गमन प्रतिबन्धार्थं क्षुतं कृतमित्यर्थः। क्षु शब्दे भावे लिट्। इतरोऽपि नायकोऽपि कलयन्नपि कृतकोपमिति जानन्नपि अशकुनेन स्खलितः किल निरुद्धइव सव्यथः सनिर्वेदइवावतस्थे स्थितः न गतइत्यर्थः उभावपि समानानुरागाविति भावः। एषा च कलहान्तरिता॥ ८३॥

आलोक्य प्रियतममंशुके विनीवौ
यत्तस्थे नमितमुखेन्दु मानवत्या।
तन्नूनं पदमवलोकयाम्बभूवे
मानस्य द्रुतमपयानमास्थितस्य ॥ ८४ ॥

सुदृशः सरसव्यलीकतप्त
स्तरसा श्लिष्टवतः सयौवनोष्मा।
कथमप्यभवत् स्मरानलोष्णः
स्तनभारोन नखम्पचः प्रियस्य ॥ ८५ ॥

आलोक्येति। मानवत्या कोपवत्या स्त्रिया। स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये। प्रियतममालोक्य। स्थित्या समान कर्तृकत्वात् क्त्वानिर्देशः। अंशुके विनीवौ प्रियावलोकनाद्विगलित बन्धे सति। भाषितपुंस्कत्वात्पुंवद्भावः। स्त्रीकटीवस्त्रबन्धेऽपि नीविः परिपणेऽपि चेत्यमरः। नमितमुखेन्दु यथा तथा तस्थे स्थित मिति यत् तत्तस्मान्नम्रमुखावस्थानाद्द्रुतं शीघ्रं प्रियावलोकनक्षण एवेत्यर्थः। अपयानमास्थितस्य प्रयाणङ्गतस्य मानस्य कोपस्य पदम्पदचिह्नमवलोकयाम्बभूवे अन्वेषितमित्यर्थः। लज्जानिमि त्तायामुखनतेः अन्वेषणार्थत्वमुत्प्रेक्ष्यते नूनमिति मानगन्धोऽप्य स्तमितइति भावः ॥ ८४ ॥

सुदृशइति। सरसमार्द्रं नूतनमिति यावत्। तेन व्यलीकेन प्रिय कृतेनापराधेन तप्तः तथा यौवनोष्मणा सह वर्त्ततइति सयौवनोष्मा। किञ्च स्मरानलोष्णः कामाग्निसन्तप्तः एवं त्रिविधाग्नितप्तोऽपि सुदृश स्तनभारस्तरसा वेगेनातिदाहदशायामेवेत्यर्थः। आश्लिष्टवतः

दधत्युरोजद्वयमुर्वशीतलं
भुवोगतेव स्वयमुर्वशी तलम् ।
बभौ मुखेनाप्रतिमेन काचन
श्रियाधिका ताम्प्रति मेनका च न ॥८६॥

आलिङ्गितवतः प्रियस्य कथमपि कथं वा कुतोहेतोरित्यर्थः । नखम्पचति क्वाययतीति नखम्पचः । पचिरत्र तापवाची । मितनखे चेति खश्प्रत्ययः अरुर्द्विषदजन्तस्य मुमिति मुमागमः । नाभवत् तथोष्मणईषदुष्णोऽपि नाभूदित्यर्थः । प्रियासङ्गप्रतीकाराः खलु कामिनां सन्तापादिति भावः । तादृगौष्ण्यसम्बन्धेऽप्यसम्बन्धोक्तेर तिशयोक्तिः ॥ ८५ ॥

दधतीति । उरु महदशीतलं स्मरयौवनोष्मभ्यामुष्णमुरोज द्वयं कुचद्वयं दधती भुवस्तलङ्गता स्वयं साक्षादुर्वशीव स्थितेत्यु त्प्रेक्षा । काचन स्त्री अप्रतिमेन मुखेन बभौ ताम्प्रति मेनका मेन काख्याप्सरसश्च श्रिया सौन्दर्येणाधिका नेत्यतिशयोक्तिः । तयो र्यमकेन संसृष्टिः । वंशस्थं वृत्तम् ॥ ८६ ॥

इत्थमिति । इत्थमनेन प्रकारेण । इदमस्थमुरिति थमु प्रत्ययः । सपदि शान्तः शमितोमानः कोपएवान्तरायोयाभिस्ताः । वा दान्तेत्यादिना शमेर्ण्यन्तात् शान्तेति निपातः । प्रालेयांशोश्चन्द्रस्य रुचयोनारीः कामिभिर्घटयितुं । मितां ह्रस्वः पर्याप्तिवचनेष्वल मर्थेष्विति तुमुन्प्रत्ययः । कामं प्रकामं समर्थाः आसन् दूत्यइवेति भावः विलसन्तोमन्मथश्रीविलासामणितशीत्कारादिमदनातिरेक विकारायाभिस्ताः ह्रीरेव प्रत्यूहोविघ्नस्तस्य प्रशमे निवारणे

इत्थन्नारीर्घटयितुमलङ्कामिभिः काममासन्
प्रालेयांशोः सपदि रुचयः शान्तमानान्तरायाः ।
आचार्य्यत्वं रतिषु विलसन्मन्मथश्रीविलासा
ह्रीप्रत्यूहप्रशमकुशलाः शीधवश्चक्रुरासाम् ॥८७॥
इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
प्रदोषवर्णनन्नाम नवमः सर्गः ॥ ९ ॥

कुशलाः शेरते आभिरिति शीधवो मदिराः । शीङ्धुगित्यौणादिको धुक्प्रत्ययः । आसां रतिषु आचार्य्यत्वमुपदेशञ्चक्रुः । नर्म्मसख्य इवेति भावः । अत्र प्रथमार्द्धे प्रस्तुतचन्द्रभासां मानशमनकामिघटनपाटवविशेषणसाम्यादप्रस्तुतदूतीत्वप्रतीतेः समासोक्तिर्द्वितीयार्द्धे तु शीधुष्वारोपितस्याचार्य्यत्वस्य प्रकृतोपयोगात्परिणामः । तयोः सापेक्षत्वात्सङ्करः तेन च दूतीनर्म्मसख्युपमाध्वनिः । उत्तरसर्गे मधुपानरतोत्सववर्णनायास्तायमेव प्रस्तावः। मन्दाक्रान्ता वृत्तम् । मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ तौगुरू चेदिति लक्षणात् ॥ ८७ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्व्वङ्कषाख्ये नवमः सर्गः ॥ ९ ॥

---

सज्जितानि सुरभीण्यथ यूना
मुल्लसन्नयनवारिरुहाणि ।
आययुः सुघटितानि सुरायाः
पात्रतां प्रियतमावदनानि ॥ १ ॥

आचार्य्यत्वं रतिषु शौधवस्त्वङ्कुरित्युक्तं तत्प्रपञ्चनायास्मिन्सर्गे मधुपानन्तावद्दर्शयति । सज्जितानीति । अथ पानगोष्ठीप्रस्तावानन्तरं सज्जितानि यावकचालनादिना संस्कृतानि सुरभीणि यथायोगं स्वभावसंस्काराभ्यां सुगन्धीनि नयनानि वारिरुहाणीव अन्यत्र नयनानीव वारिरुहाणि वासनार्थं क्षिप्तानि तान्युल्लसन्ति येषु तानि तथोक्तानि सुघटितानि सुष्ठु मुखैर्योजितानि शोभनसंस्थानवत्तया निर्मितानि वा प्रियतमावदनानि यूनां कामिनां सुरायाः पात्रतां पानभाजनतां ययुः प्रियामुखसम्पर्कजनितरसास्वादलोभात्तासां मुखसुरामेव पपुरिति भावः । अत्र वदनेष्वारोप्यमाणायाः पात्रतायास्तादात्म्येन तेषां पानसाधनतापादनेन कृतवदनोपयोगात्परिणामालङ्कारः । आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामइति लक्षणात् । तेन श्लेषसङ्कीर्णेनोपमा व्यज्यते । अस्मिन्सर्गे स्वागता वृत्तम् । स्वागतेति रनभागुरुयुग्मम् ॥ १ ॥

सोपचारमिति । अथ पात्रीकरणानन्तरं ते युवानः सोपचारं सप्रार्थनं उपशान्तविचारं निवृत्तशङ्कं विवादेति पाठे मानमवधूयेति पुनरुक्तिः चारञ्चारमित्यनुप्रासक्रमभङ्गश्च स्यात् । सानुतर्षं सतृष्णञ्च यथा तथा अनुतर्षत्यनेनेत्यनुतर्षोमद्यं । मद्येऽनुतर्षस्तत्पाने पात्रे तृष्णाभिलाषयोरित्युभयत्रापि विश्वः । तस्य पदैम

सोपचारमुपशान्तविचारं
सानुतर्षमनुतर्षपदेन ।
तं मुहूर्त्तमथ मूर्त्तमपीप्यन्
प्रेम मानमवधूय वधूः स्वाः ॥ २ ॥

कान्तकान्तवदनप्रतिबिम्बे
मग्नबालसहकारसुगन्धौ ।
स्वादुनि प्रणदितालिनि शीते
निर्ववार मधुनीन्द्रियवर्गः ॥ ३ ॥

कलेन मूर्त्तं मूर्त्तिमत् स्वाः स्वीया बधूर्मुहूर्त्तं क्षणमात्रं कोप मवधयापीप्यन् पाययन्ति स्म । पिबतेर्णौ चङि लोपः पिबतेरीच्चा भ्यासस्येति धात्वाकारलोपः ईकारोऽभ्यासस्य । न पादमीत्या दिना निगरणार्थत्वमिति परस्मैपदनिषेधेऽपि णिचश्चेत्यात्मने पदविकल्पात्याचिकं परस्मैपदम् । गतिबुद्धीत्यादिना वधूरित्यणि कर्त्तुः कर्मत्वम् । अनुतर्षपदेनेत्यनुतर्षापदेशेन मूर्त्तप्रेमत्वोत्प्रेक्षणात् व्यञ्जकाप्रयोगाच्च प्रतीयमाना सापह्नवोत्प्रेक्षा ॥ २ ॥

कान्तेति । कान्तं सक्कान्तं कान्तवदनप्रतिबिम्बं यस्मिन्तस्मिन्नेव निर्वृतिकरइत्यर्थः । मग्नाः चिप्ताः बालसहकारास्तद्विशेषपल्लवाः । आम्रश्चूतोरसालश्च सहकारोऽतिसौरभइत्यमरः । तैः सुगन्धौ सुरभिणि घ्राणतर्पणइत्यर्थः । तृतीयादिषु भाषितपुंस्कं पुंव द्गालवस्येति पुंवद्भावः। स्वादुनि मधुरे रसनाकर्षिणीत्यर्थः । प्रणदि तालिनि गुञ्जन्मधुकरे श्रुतिसुखइत्यर्थः । शीते स्पर्शसुखे इत्यर्थः । एवम्पञ्चविषयसमष्टौ मधुनि मद्ये इन्द्रियवर्गश्चक्षुरादिपञ्चकं

कापिशायनसुगन्धि विघूर्ण-
न्नुन्मदोऽधिशयितुं समशेत ।
फुल्लदृष्टि वदनं प्रमदाना-
मब्जचारु चषकञ्च षडङ्घ्रिः ॥ ४ ॥

विम्बितं सुतपरिस्रुति जानन्
भाजने जलजमित्यबलायाः ।
घ्रातुमक्षि पतति भ्रमरः स्म
भ्रान्तिभाजि भवति क्व विवेकः ॥ ५ ॥

निर्व्वारं निर्वृतमभूत् । अत्र रूपरसादिपदार्थानां मधुविशेषणभावेन निर्वृतिहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ ३ ॥

कापिशायनेति । उन्मद उद्रिक्तमदः अतएव विघूर्णन् भ्रमन् षडङ्घ्रिः षट्पदः कापिशायनेन सुगन्धि सुरभि । कश्यं काल्यन्तथा मद्यं मैरेयं कापिशायनमिति वैजयन्ती । फुल्लदृष्टि विकसितनेत्रं प्रमदानां वनितानां वदनं अधिवासनार्थेन अब्जेन चारु चषकं पानपात्रञ्च । चषकोऽस्त्री पानपात्रमित्यमरः । अधिशयितुमधिष्ठातुं समशेत इदमब्जामोदभजामि वेत्युभयलोभार्थं दोलायमानमानस आसीदित्यर्थः । अत्र प्रकृतयोरेव वदनचषकयोः षट्पदाभिलाषास्पदत्वरूपैकधर्म्मयोगादौपम्यस्य गम्यतायान्तुल्ययोगिताभेदः ॥ ४ ॥

विम्बितमिति । सुता परिस्रुद्वारुणी यस्मिंस्तस्मिन् । परिस्रुद्वरुणात्मजेत्यमरः । भाजने पानपात्रे [illegible]तं विम्बितम् । अबलायाः अक्षि जलजमिति जान[illegible]दृश्यात्तया भ्राम्यन्नित्यर्थः ।

दत्तमिष्टतमया मधु पत्यु-
र्बाढमाप पिबतो रसवत्ताम् ।
यत्सुवर्णमुकुटांशुभिरासी-
च्चेतनाविरहितैरपि पीतम् ॥ ६ ॥

स्वादनेन सुतनोरविचारा-
दोष्ठतः समचरिष्ट रसोऽत्र ।
अन्यमन्यदिव यन्मधु यूनः
स्वादमिष्टमतनिष्ट तदेव ॥ ७ ॥

भ्रमरः घ्रातुं पतति स्म । तथा हि भ्रान्तिर्भ्रमणं विपरीतज्ञानञ्च तद्भाजि विवेकोविचारः क्व भवति न क्वापीत्यर्थः । अत्र भ्रमरस्याचिजलजभ्रान्तेर्भ्रान्तिमदलङ्कारः तत्समर्थकत्वात् श्लेषमूलातिशयोक्त्युत्थापितोऽर्थान्तरन्यासः । तेन सहाङ्गाङ्गिभावेन सङ्करः ॥५॥

दत्तमिति । इष्टतमया दत्तं मधु मद्यं कर्तृ पिबतः पत्युः रसवत्तां प्रेयसीकरस्पर्शादतिस्वादुतामाप । अतिशायने मतुप् । बाढं ध्रुवमित्युत्प्रेक्षा कुतः यद्यस्माच्चेतनाविरहितैरचेतनैः सुवर्णमुकुटांशुभिरपि मधुनि प्रसृतैरिति भावः । पीतं पीतवर्णम्पीतञ्चासीत् । अत्र पीतमिति श्लेषमूलातिशयोक्त्या पीतिम्नः क्रियाभेदाध्यवसायेनाचेतनांशुकर्तृकपानक्रियानिमित्ता प्रेयसीस्वहस्तदानाहितरसवत्तोत्प्रेक्षा । तथा च यदचेतनानामपि पेयन्तच्चेतनानां किं वक्तव्यमित्यर्थापत्तिध्वननादलङ्कारेणालङ्कारध्वनिः ॥ ६ ॥

स्वादनेनेति । सुतनोः कर्व्याः स्वादनेनास्वादनेन ओष्ठतः ओष्ठात् रसः स्वादोऽत्र मधुनि अविचारादसंशयात्समचरिष्ट सङ्क्रान्तः ।

विभ्रतौ मधुरतामतिमात्रं
रागिभिर्युगपदेव पपाते ।
आननैर्मधुरसो विकसद्भि-
र्नासिकाभिरसितोत्पलगन्धः ॥ ८ ॥

सम्पूर्व्वाच्चरतेर्लुङ् । समस्तृतीयायुक्तादित्यात्मनेपदम् । कुतः यद्यस्मात्तदेव पूर्व्वभुक्तमेव मधु अन्यदिवापूर्व्वमिवान्यमपूर्व्वमिष्टं प्रियं स्वादं रसं यूनोऽजनिष्ट । तनोतेर्लुङि तङ् । ओष्ठस्पर्शानन्तरमेव रसान्तरप्रादुर्भावादनन्तरन्यायात्तद्रससङ्क्रमणोत्प्रेक्षा सा चाविचारादिति व्यञ्जकप्रयोगाद्वाच्या ॥ ७ ॥

विभ्रताविति । रागिभिः कामिभिरतिमात्रं मधुरतां स्वादुतां प्रियत्वं वा विभ्रतौ । मधुरं रसवत् स्वादुप्रियेषु मधुरोऽन्यवदिति विश्वः । तस्य भावस्तां विकसद्भिर्विकसन्तीभिश्च विकसद्भिः तृष्णया विजृम्भमाणैः । नपुंसकमनपुंसकेनैकवच्चान्यतरस्यामिति नपुंसकैकशेषः । आननैः मधुरसो मद्यरसः नासिकाभिर्घ्राणैरसितोत्पलगन्धश्च युगपदेव पपाते पीतौ । भिन्नेन्द्रियग्राह्यावपि गन्धरसौ युगपत् स्वेन्द्रियसम्बन्धात् युगपद्गृहीतावित्यर्थः । अत्र मनसश्चाशुसञ्चाराद्यौगपद्याभिमानः । शतपत्रशरव्यतिभेदवदित्यणुपरिमाणवादिनः । वास्तवमेवं यौगपद्यमिति मध्यमपरिमाणवादिनः । सार्व्वपथीनास्तु कवयइत्यलमतिपल्लवेन । अत्र रसगन्धयोः प्रकृतयोरेकपानक्रियासम्बन्धात्तुल्ययोगिताभेदः ॥ ८ ॥

पीतवतीति । विदशङ्क्षौ विदंष्टुमिच्छौ उपदंशेच्छावतीत्यर्थः । दंशेः सन्नन्तादुप्रत्ययः । अभिमते वल्लभे मधुना तुल्य

पीतवत्यभिमते मधुतुल्य
स्वादमोष्ठरुचकं विदधद्भिः ।
लभ्यते स्म परिरक्ततयात्मा
यावकेन वियतापि युवत्याः ॥ ९ ॥
कस्यचित्समदनं मदनीय
प्रेयसीवदनपानपरस्य ।
स्वादितः सकृदिवासव एव
प्रत्युत क्षणविदंशपदेऽभूत् ॥ १० ॥

स्वादं तुल्यरसन्तुल्यत्वञ्च दृश्यतामात्रेण नान्यथा विलक्षणरसस्य अनुपदंशत्वात् ओष्ठोरुचकमाभरणमिवेत्युपमितसमासः । रचना यान्तु रुचकमस्त्राभरणमाल्ययोरिति विश्वः । तमोष्ठरुचकं ओष्ठश्रेष्ठं पीतवति सति वियता अपगच्छतापि । इणोलटः अत्रादेशे इणोयणिति यणादेशः । युवत्याः युवतेः । ङिति ह्रस्वश्चेति वा नदीत्वादाडागमः । यावकेनालक्तकेन परि रक्ततया दन्तनिष्पीडनकृतेन रागेण हेतुना आत्मा स्वरूपं लभ्यते स्म लब्धः पुनरुद्भूतमित्यर्थः । अत्राधरपानादपगतस्यापि यावकस्य रागप्रादुर्भावनिमित्ता विरोधगर्भा पुनरुद्भवोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या च ॥ ९ ॥

कस्यचिदिति । समदनं यथा तथा मदयतीति मदनीयं मदकारि । कृत्यल्युटोबहुलमिति कर्त्तर्यनीयर्प्रत्ययः । तस्य प्रेयसीवदनस्य पानं परं प्रधानं यस्य तस्य कामुकत्वात् प्रिया मुखपानासक्तस्य कस्यचित्कामिनः सकृदिव स्वादितः अवाङ्मुखेन

पीतशीधुमधुरैर्मिथुनाना
माननैः परिहृतं चषकान्तः ।
व्रीडया रुदद्दिवालिविरावै
र्नीलनीरजमगच्छदधस्तात् ॥ ११ ॥

पीतः । इवशब्दोवाक्यालङ्कारे । आसवएव प्रत्युत वैपरीत्ये इति गणव्याख्याने । क्षणं विदंशपदे उपदंशस्यानेऽभूत् । अन्येषां मधुपानलोलुपानामधरस्वाद उपदंशः अस्य त्वधरपानैकपरस्य मध्वेवोपदंश इत्यर्थः । अधरपानस्योपदंशत्वसम्बन्धेऽप्यसम्बन्धः आसवस्य तदसम्बन्धेऽपि सम्बन्ध इत्यतिशयोक्त्योरसापेक्षत्वात्संसृष्टिः ॥ १० ॥

पीतेति । पीतशीधूनि पीतमद्यानि । अतएव मधुराणि मनोज्ञानि तैर्मिथुनानां स्त्रीपुंसानामाननैः चषकान्तः पानपात्राभ्यन्तरे । चषकोऽस्त्री पानपात्रमित्यमरः । परिहृतं त्यक्तं नीलनीरजं वासनार्थं निःक्षिप्तं नीलोत्पलं व्रीडया परिहारलज्जया अलिविरावैः रुदद्दिवाधस्तादगच्छत् । अत्र मद्यापगमनिमित्तस्य नीलनीरजाधोगमनस्य रोदनविशिष्टलज्जाहेतुकत्वोत्प्रेक्षा । सा चालिविरावैरिति व्यधिकरणकारिपरिणामोज्जीवितेति सङ्करः ॥ ११ ॥

अथ मदानुभावान्वर्णयति । प्रातिभमित्यादि । त्रयाणां सरकाणां समाहारस्त्रिसरकं त्रिवारमधुपानं । सरकं शीधुपात्रे स्याच्छीधुपाने च शीधुनीति विश्वः । तद्धितार्थेत्यादिना समाहारे द्विगुः पात्रादित्वान्नपुंसकत्वम् । तेन त्रिसरकेण त्रिपानं मदातिभूमिरिति पानप्रसिद्धिः प्रतिभैव प्रातिभम्प्रतिभाविशेषः ।

प्रातिभं त्रिसरकेण गतानां
वक्रवाक्यरचनारमणीयः ।
गूढसूचितरहस्यसहासः
सुभ्रुवां प्रववृते परिहासः ॥ १२ ॥

हावहारि हसितं वचनानां
कौशलं दृशि विकारविशेषाः ।
चक्रिरे भृशमृजोरपि बध्वाः
कामिनेव तरुणेन मदेन ॥ १३ ॥

प्रज्ञादित्वात्स्वार्थेऽण् प्रत्ययः । यद्वा ज्ञानवीजभूतः संस्कारविशेषः प्रतिभा इति काव्यप्रकाशकारः । तत्र भवं प्रातिभं ज्ञानप्रभावविशेष एव । भवार्थेऽण्प्रत्ययः । तत्प्रातिभङ्गतानां त्रिवारमधुपानोत्कटमदोद्बुद्धसंस्कारप्रभावितप्रगल्भमतीनामित्यर्थः । सुभ्रुवां स्त्रीणां वक्रवाक्यरचनारमणीयः प्रतिकूलवाक्यप्रयोगरम्यः। गूढानि पूर्व्वं लज्जया संवृतानि सूचितानि सम्प्रति मदेन प्रकाशितानि रहस्यानि ग्राम्यावयवचेष्टाप्रलपितानि यस्मिन् स गूढसूचितरहस्यः सचासौ सहासश्चेति विशेषणसमासः वैवक्षिकविशेषणविशेष्यभावात् । हासोहास्यमित्यमरः । परिहासोनर्म्मकेलिरुपहासक्रीडेति यावत् । द्रवकेलिपरीहासाइत्यमरः । प्रववृते प्रवृत्तः इतः परम्मदसञ्चारी ॥ १२ ॥

हावेति । तरुणेनोत्कटेन यूना च मदेन कामिनेव ऋजोर्मुग्धाया अपि बध्वाः किमुत प्रौढानामिति भावः । हावहारि विलास मनोहरं हसितं हासः वचनानां कौशलं प्रागल्भ्यं दृशि विकार

अप्रसन्नमपराद्धरि पत्यौ
कोपदीप्तमुररीकृतधैर्य्यम् ।
क्षालितन्नु शमितन्नु वधूना
न्द्रावितन्नु हृदयम्मधुवारैः ॥ १४ ॥

विशेषाः विलासविशेषास्तक्रिरे कृतानि । पुंसेव मौग्ध्यन्त्याजयित्वा प्रौढ्यं नीतेत्यर्थः । अत्र हसितकौशलविकाराणां यौगपद्योक्त्या समुच्चयः । गुणक्रियायौगपद्यं समुच्चयइति लक्षणम् । तस्यौपम्य योगेन सङ्करः तेन स्त्रजोरपि इत्यत्र किमुत प्रौढानामित्यर्थापत्ति र्व्यज्यते ॥ १३ ॥

अप्रसन्नमिति । अपराद्धरि आगस्कारिणि । राधेस्तृच् प्रत्ययः । पत्यौ विषये अप्रसन्नं कलुषं क्षुभितमित्यर्थः । कोपदीप्तं कोपेन ज्वलितं उररीकृतधैर्य्यं अङ्गीकृतकाठिन्यं । उरीकृतमुररी कृतमित्यमरः । ऊर्यादिच्विडाचश्चेति गतित्वात्कुगतिप्रादयइति समासः । वधूनां हृदयं मधुवारैः मद्यपर्यायैः । मधुवारा मधुक्रमाइत्यमरः । क्षालितं धौतं नु । शमितं निर्वापितं नु । द्रावितं द्रवीकृतं नु । अन्यथा कथन्ताद्दृगप्रसन्नतादीप्तताकठिनतानां हठान्निवृत्तिरिति भावः । अत्र क्षालितत्वादीनामेकत्राविरोधा त्सादृश्याच्च न संशयालङ्कारः । सति सादृश्ये विरुद्धानेककोटि गोचरत्वात्तस्य किन्त्वप्रसन्नत्वादिनिरासनिमित्तकं क्षालितत्वाद्यु त्प्रेक्षात्रयं नुशब्दानुवृत्तेः तच्चाप्रसन्नत्वाद्युद्देशिनां क्षालितत्वाद्यनु द्देशिभिर्यथासङ्ख्येनान्वयमपेक्षतइति यथासङ्ख्यालङ्कारेण सङ्कीर्य्यते ॥ १४ ॥

सक्तमेव चिरमप्रकृतत्वा
दप्रकाशितमदिद्युतदङ्गे ।
विभ्रमं मधुमदः प्रमदाना
न्धातुलीनमुपसर्ग इवार्थम् ॥ १५ ॥

सावशेषपदमुक्तमुपेक्षा
स्रस्तमाल्यवसनाभरणेषु ।
गन्तुमुत्थितमकारणतः स्म
द्योतयन्ति मदविभ्रममासाम् ॥ १६ ॥

सक्तमिति । मधुमदः प्रमदानामङ्गे वपुषि अन्यत्र धस्मा त्प्रत्ययविधिरित्युक्तलक्षणे प्रकृत्याख्ये शब्दरूपे चिरं सर्वदा सक्त मेव एकत्र स्वभावात् अन्यत्र त्वनेकार्थत्वाद्धातूनामिति भावः । किञ्चाप्रकृतत्वादप्रस्तुतत्वात् अप्रसक्तत्वादिति भावः । अप्रकाशित मव्यञ्जितं विभ्रमं विलासन्धातौ भ्वादिके लीनं गूढं अर्थमभिधेयं उपसर्गः प्रादिरिवादिद्युतत् द्योतयति स्म । द्युतेर्णौ चङ्युपधा ह्रस्वः । द्युतिस्वाप्योः सम्प्रसारणमिति अभ्यासस्य सम्प्रसारणमि कारः । उपसर्गस्य धातुलीनार्थद्योतकत्वमादानसन्दानादावनुस न्धेयम् । उपमालङ्कारः ॥ १५ ॥

सावशेषमिति । सावशेषाण्यर्द्धोक्तानि पदानि यस्मिन् तदुक्त मुक्तिर्वाक्यं स्रस्तेषु माल्यवसनाभरणेषु उपेक्षा अनादरः अकारण तोऽकस्मादेव गन्तुमुत्थितमुत्थानञ्च आसां स्त्रीणां मदविभ्रमं मद विकारं द्योतयन्ति स्म । एतैरनुभावैरासां मदसञ्चारो ज्ञात इत्यर्थः । अत्रार्द्धोक्तादीनां खलेकपोतिकया मदद्योतने प्रवृत्तत्वा

मद्यमन्दविगलत्त्रपमीष-
च्चक्षुरुन्मिषितपक्ष्म दधत्या ।
वीक्ष्यते स्म शनकैर्नववध्वा
कामिनोमुखमधोमुखयैव ॥ १७ ॥
या कथञ्चन सखीवचनेन
प्रागभिप्रियतमम्प्रजगल्भे ।
व्रीडजाड्यमभजन्मधुपा सा
स्वाम्मदात्प्रकृतिमेति हि सर्व्वः ॥ १८ ॥

त्वराख्यो द्वितीयसमुच्चयः । खलेकपोतन्यायेन बहूनां कार्य्यसाधने । कारणानां समुद्योगः स द्वितीयः समुच्चय इति लक्षणात् ॥ १६ ॥

मद्येति । मद्येन मद्यपानेन मन्दमल्पं विगलन्ती त्रपा यस्य तत् । अतएवेषदुन्मिषितानि पक्ष्माणि लोमानि यस्य तच्चक्षुर्दधत्या नववध्वा नवोढया कामिनः प्रियस्य मुखमधोमुखयैव नमितवदनयैव । स्वाङ्गाच्चोपसर्ज्जनादिति विकल्पादनीकारः । शनकैरसम्भ्रमेण वीक्ष्यते स्म तिर्य्यगीक्षितमित्यर्थः अत्रापि मदमानाभ्यां त्रपैव बलीयसीति मौग्ध्यातिशयोक्तिः । समुद्यौवना मुग्धा लज्जाविहितमन्मथा ॥ १७ ॥

येति । या स्त्री कथञ्चन कृच्छ्रेण सखीवचनेन सखीप्रेरणया प्राङ्मदात्पूर्व्वं अभिप्रियतमं प्रियतमसमक्षम् । आभिमुख्येऽव्ययीभावः । प्रजगल्भे प्रगल्भते स्म । सा स्त्री मधु पिबतीति मधुपा । आतोनुपसर्गे कः । व्रीडं जाड्यं मौग्ध्यमभजत् विहायागन्तुकं धर्म्मं स्वभावमभजन्मदेनेत्यर्थः । तथा हि सर्व्वोजनोमदाद्धेतोः स्वां

छादितः कथमपि त्रपयाऽन्त-
र्यः प्रियम्प्रति चिराय रमण्याः ।
वारुणीमदविशङ्कमथावि-
श्चक्षुषोऽभवदसाविव रागः ॥ १९ ॥
आगताननगणितप्रतियाता-
न्वल्लभानभिसिसारयिषूणाम् ।
प्रापि चेतसि स विप्रतिसारे
सुभ्रुवामवसरः सरकेण ॥ २० ॥

स्वकीयां प्रकृतिमेति स्वभावं गच्छति स्वाभाविकधर्म्मप्रकाशनं मदधर्म्मः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १८ ॥

छादितइति । रमण्या यः प्रियम्प्रति रागोविषयाभिलाषः चिराय त्रपया व्रीडयान्तश्छादितः संवृतश्चासावयमेव रागोऽथास्मिन्नवसर वारुणीमदविशङ्कं मद्यमदेन निश्शङ्कञ्चक्षुषोनेत्रादाविरभवदिवाविर्भूतः किं । अत्र रतिरागमदरागयोरभिलाषपाटलिमरूपयोः श्लेषप्रतिभोत्थापिताभेदाध्यवसायमूलातिशयोक्तिमहिम्ना योऽन्तर्गतोरागः सएव चिरनिरुद्धः सम्प्रति मदोद्घाटितत्रपाकपाट्या चक्षुर्द्वारा वहिरुद्भिन्नइत्युत्प्रेक्ष्यते । आविर्भुवोर्व्यवधानं कविस्वातन्त्र्यात् ॥ १९ ॥

आगताननिति । आगतान् स्वयमागतान् तथाप्यगणिताश्च ते प्रतियाताश्चेति । स्नातानुलिप्तइतिवत् पूर्व्वकाले समासः । तान्वल्लभानभिसिसारयिषूणां सम्प्रति चन्द्रोदये स्वयमेवाभिसारयितुमभिसर्त्तुमिच्छूनाम् । अभिसारयतेः स्वार्थण्यन्तात्सन्नन्तादुप्रत्ययः ।

मा पुनस्तमभिसीसरमाग
स्कारिणम्मदविमोहितचित्ता।
योषिदित्यभिललाष न हाला
न्दुस्त्यजः खलु सुखादपि मानः॥ २१ ॥

सुभ्रुवां स्त्रीणां चेतसि सविप्रतिसारे कष्टमस्माभिरकार्य्यं कृतमिति पश्चात्तापयुक्ते सति । पश्चात्तापोऽनुतापश्च विप्रतीसारइत्यपी त्यमरः। सरकेण मधुना मधुपानेन वा । सरकं शीधुपात्रे स्या च्छीधुपाने च शीधुनीति विश्वः । अवसरः प्रापि प्राप्तः स्वयङ्गमन सौकर्य्याय मधुपानञ्चक्रुरित्यर्थः । अत्राभिसारणस्य पश्चात्ताप करणकस्य मदयोगात्सौकर्य्योक्तेः समाध्यलङ्कारः । समाधिः सुकरं कार्य्यं कारणान्तरयोगतइति काव्यप्रकाशे॥ २०॥

मा पुनरिति। मदेन विमोहितचित्ता भ्रमितचित्ता सती अहमिति शेषः। आगस्कारिणमपराधकृतम् । अतः कृकमीत्या दिना विसर्जनीयस्य सत्वम् । तं पुनर्भूयोमाभिसीसरं नाभिसार याणि । सरतेः स्वार्थे णौ चङ्युपधायाह्रस्वः दीर्घोलघोरित्यभ्या सस्य दीर्घः। इति इत्यालोच्येत्यर्थः। गम्यमानार्थत्वादप्रयोगः। अन्यथा पौनरुक्त्यमित्यलङ्कारिकाः । योषित्काचित् स्त्री हालां सुरां । सुरा हलिप्रिया हालेत्यमरः। नाभिललाष तथा हि सुखादपि मानोदुस्त्यजः खलु अतोऽल्पकारणादधिकार्थहानिरिति नाशङ्कनीयमित्यर्थान्तरन्यासः॥ २१॥

ह्रीति । सप्रसादं मनःप्रसादपूर्व्वकं ममेदं श्रेयस्करमिति भावनापूर्व्वकमित्यर्थः। अन्यथा फलोदयएव न स्यात्। दैवज्ञे भेषजे

म २

ह्रीविमोहमहरद्दयिताना-
मन्तिकं रतिसुखाय निनाय।
सप्रसादमिव सेवितमासी-
त्सद्य एव फलदं मधु तासाम्॥ २२॥
दत्तमात्तमदनं दयितेन
व्याप्तमातिशयिकेन रसेन।
सस्वदे मुखसुरं प्रमदाभ्यो
नाम रूढमपि च व्युदपादि॥ २३॥

गुराविति वचनादिति भावः। सेवितमुपभुक्तमिति हेतोर्मधु तासां सद्य एव फलदमासीत्। कुतः ह्रीविमोहं व्रीडाजाड्यं अहरत् रतिसुखाय सुरतसुखाय दयितानामन्तिकं निनाय। अत्र ह्रीहरणान्तिकनयनवाक्याभ्यां फलदानवाक्यार्थसमर्थनादनेकवाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। २२॥

दत्तमिति। आत्तमदनमाहितमदनं यथा तथा दयितेन दत्तं अत एवातिशयिकेनातिशयप्रचुरेण। विनयादिभ्यष्ठक्। रसेन स्वादेन व्याप्तं स्वादुतरमित्यर्थः। मुखस्य सुरा मुखसुरं गण्डूषमद्यम्। विभाषा सेनासुराच्छायाशालानिशानामिति नपुंसकत्वम्। प्रकृष्टो मदो यासां ताभ्यः प्रमदाभ्यः स्त्रीभ्यः। रुच्यर्थानां प्रीयमाण इति सम्प्रदानसंज्ञा। सस्वदे रुरुचे प्रीतिकरमभूदित्यर्थः। कर्त्तरि लिट्। अतएव तदेव तासां मदकरञ्चासीदित्याह। नामेति। रूढं प्रागश्वकर्णादिवदव्युत्पन्नं नामापि प्रमदेति नामधेयञ्च व्युदपादि व्युत्पन्नं जातम्। यथा प्रकृष्टमद

लब्धसौरभगुणो मदिराणा-
मङ्गनास्यचषकस्य च गन्धः ।
मोदिताऽलिरितरेतरयोगा-
दन्यतामभजतातिशयन्नु ॥ २४ ॥

मानभङ्गपटुना सुरतेच्छां
तन्वता प्रथयता दृशि रागम् ।
लेभिरे सपदि भावयताऽन्त-
र्योषितः प्रणयिनेव मदेन ॥ २५ ॥

चागात्प्रमदेत्यन्वयेनासत्त्वं भवेत् तथा तास्तेनामाद्यन्नित्यर्थः । पद्यतेरण्यन्तात्कर्त्तरि लुङ् चिण् ते पदइति चिण्प्रत्यये चिणो लुक् । प्रमदाभिरिति पाठे सस्वदे स्वदयाञ्चक्रे इत्यर्थः । स्वादन मशनमक्षणमाहारो भोजनं स्वदनमिति हलायुधे । स्वदिस्वाद्यो रेकार्थत्वाभिधानात्कर्म्मणि लिट् । अत्र पूर्ववाक्यार्थस्योत्तर वाक्यार्थहेतुत्वात्काव्यलिङ्गम् ॥ २३ ॥

लब्धेति । लब्धसौरभगुणो मेलनात्प्राप्तसौरभोत्कर्षः अत एव मोदितालिः आनन्दितभृङ्गः मदिराणां मद्यानां अङ्गनास्य मेव चषकस्तस्य च गन्धो गन्धगुणः इतरेतरस्य योगान्मिश्रणा दन्यतामपूर्वतामतिशयन्नु तत्रैवोत्कर्षं वा अभजत । यत्तकर्दमादौ घृताक्तकुङ्कुमादौ चोभयथा दर्शनादयं संशयइति भावः । अतएव संशयालङ्कारः ॥ २४ ॥

मानेति । मानभङ्गपटुना कोपशमनसमर्थेन सुरतेच्छान्तन्वता मदनोद्दीपकेन दृशि रागमारुण्यप्रीतिञ्च प्रथयता प्रकाशयता

पानधौतनवयावकरागं
सुभ्रुवो निभृतचुम्बनदक्षाः ।
प्रेयसामधररागरसेन
स्वं किलाधरमुपालि ररञ्जुः ॥ २६ ॥

अर्पितं रसितवत्यपि नाम
ग्राहमन्ययुवतेर्दयितेन ।
उज्झति स्म मदमप्यपिबन्ती
वीक्ष्य मद्यमितरा तु ममाद ॥ २७ ॥

अन्तरन्तःकरणम्भावयता रञ्जयता मदेन प्रणयिनेव योषितः स्त्रियो लेभिरे प्राप्ताः । रागमिति श्लेषमूलातिशयोक्तिसङ्कीर्णेयमुपमा ॥ २५ ॥

पानेति । उपालि आल्याः समीपे । समीपार्थेऽव्ययीभावः । आली सखी वयस्या चेत्यमरः । अतएव निभृतचुम्बनदक्षाः गूढचुम्बनचतुराः सुभ्रुवः पानधौतनवयावकरागं मधुपानक्षालितलाक्षारागं स्वमधरं प्रेयसामधरेषु यो रागरसस्ताम्बूलरागद्रवस्तेन ररञ्जुः किल । अन्यगुणस्यान्यत्राधानमिह रञ्जेरर्थः । किलेत्यपरमार्थे तेन पानधौतरागेषु स्वाधरेषु प्रेयोऽधररागसङ्क्रमणनाटितकेन सखीसमक्षमेव प्रियांश्चुम्बनङ्कारयामासुरित्यर्थः । अत्रागन्तुना रञ्जनेन सहजचुम्बननिगूहनान्मीलनालङ्कारभेदः । मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनमिति लक्षणात् ॥ २६ ॥

अर्पितमिति दयितेनान्ययुवतेः सपत्न्याः नामग्राहं नाम गृहीत्वा । नाम्न्यादिशिग्रहोरिति णमुल् प्रत्ययः । अर्पितन्दत्तं

अन्यया‌न्यवनितागतचित्तं
चित्तनाथमभिशङ्कितवत्या।
पीतभूरिसुरयापि न मेदे
निर्वृतिर्हि मनसोमदहेतुः॥ २८॥
कोपवत्यनुनयानगृहीत्वा
प्रागथो मधुमदाहितमोहा।
कोपितं विरहखेदितचित्ता
कान्तमेव कलयन्त्यनुनिन्ये॥ २९॥

मद्यं रसितवती आस्वादितवत्यपि। रसतेरास्वादनार्थात् क्तवतु उगितश्चेति ङीप्। काचिदिति शेषः। मदमुज्झति स्म न ममा देत्यर्थः। इतरा तु सपत्नी तु मद्यमपिवन्त्यपि वीक्ष्य दृष्ट्वैव ममाद मत्ता। मनोनिर्वृतिरेव मदहेतुरिति भावः। अत्र पूर्व्वार्द्धे रसित वत्यपि न ममादेति विशेषोक्तिः उत्तरार्द्धे त्वपिवन्त्यपि ममादेति विभावना। कारणेन विना कार्य्यस्योत्पत्तिः स्याद्विभावना। तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते। तयोः सङ्करः॥ २७॥

अन्ययेति। चित्तनाथम्भर्त्तारमन्यवनितागतचित्तं सपत्नी सङ्क्रान्तचेतसमभिशङ्कितवत्या तस्मिन्नविश्वस्तया अन्यया कयाचित् स्त्रिया पीतभूरिसुरयापि न मेदे न मत्तम्। माद्यतेर्भावे लिट्। तथा हि मनसोनिर्वृतिर्मदहेतुर्हि। सामान्येन विशेषस्मर्थना दर्थान्तरन्यासः। एषा नवोढा भीरुश्च। अन्यथा साशङ्कायाः पानाघटनादिति॥ २८॥

कोपवतीति। प्राक् प्रथमं कोपवती सरोषा अतएवानुनयान् प्रियप्रार्थनान्यगृहीत्वा अनादृत्य। अथो सम्प्रति विरहखेदितचित्ता

कुर्व्वता मुकुलिताक्षियुगाना-
मङ्गसादमवसादितवाचाम् ।
ईर्ष्ययेव हरता ह्रियमासां
तद्गुणः स्वयमकारि मदेन ॥ ३० ॥
गण्डभित्तिषु पुरा सदृशीषु
व्यञ्जि नाञ्चितदृशां प्रतिमेन्दुः ।
पानपाटलितकान्तिषु पश्चा-
ल्लोध्रचूर्णतिलकाकृतिरासीत् ॥ ३१ ॥

पश्चात्तापतप्ता काचिन्मधुमदेनाहितमोहा कृतचित्तविभ्रमा सती कान्तमेव कोपितमात्मना रोषितं कलयन्ती जानती अनुनिन्ये । सापराधाहं क्षमस्वेति प्रार्थितवती मत्तेषु किन्न सम्भावितमिति भावः । एषा कलहान्तरिता ॥ २९ ॥

कुर्व्वतेति । मुकुलिताक्षियुगानां अवसादितवाचाङ्कुण्ठित गिरामासां स्त्रीणामङ्गसादमङ्गसादरूपशरीरनिश्चेष्टतां कुर्व्वता ह्रियं हरता मदेन ईर्ष्ययेवेत्युत्प्रेक्षा । तस्याः ह्रियोगुण स्तद्गुणः अक्षिनिमीलनवाक्सादाङ्गसादरूपः स्वयमकारि कृतः ह्री मदयोस्तुल्यानुभावकत्वादिति भावः ॥ ३० ॥

गण्डेति । प्रतिमेन्दुः प्रतिबिम्बचन्द्रः सदृशीषु स्वसमानवर्णासु अञ्चितदृशां सुदृशां गण्डभित्तिषु पुरा सुरापानात्पूर्व्वं न व्यञ्जि नाभेदि । तदेकतापत्त्या तद्विविक्ततया न गृहीतइत्यर्थः । अतएव सामान्यालङ्कारः । सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणात् । विपूर्व्वादञ्जेः कर्म्मणि लुङ् आडजादीनामित्याडागमः ।

उद्धतैरिव परस्परसङ्गा
दीरितान्युभयतः कुचकुम्भैः ।
योषितामतिमदेन जुघूर्णु
र्विभ्रमातिशयपूंषि वपूंषि ॥ ३२ ॥

पश्चात्पानानन्तरम् पानेन पानमदेन पाटलिता पाटलीकृता कान्तिर्यासान्तासु गण्डभित्तिषु लोध्रचूर्णस्य लोध्रपरागस्य तिलकश्चित्रकम् । तमालपत्रतिलकचित्रकाणि विशेषकाः द्वितीयञ्च तुरीयञ्च न स्त्रियामित्यमरः। तस्याकृतिरिवाकृतिर्यस्य स आसीत्। वैवर्ण्यादिविकृतएवासीदित्यर्थः । तिलकाकृतिरिति निदर्शना पूर्व्वोक्तसामान्यसंसृष्टा ॥ २१ ॥

उद्धतैरिति । उद्धतैः दृप्तैरिव कुचकुम्भैः परस्परसङ्गा दन्योऽन्यसङ्घर्षादुभयतईरितान्याकृष्टानि तथा विभ्रमातिशयं विलासविशेषं पुष्णन्ति तानि । नपुंसकस्य झलचइति नुमागमः । योषितां वपूंषि । पूर्व्ववन्नुमागमः सान्तमहतः संयोगस्येति दीर्घः । अतिमदेन जुघूर्णुः भ्रेमुः दृप्तसंघर्षस्तटस्थपीडाकरः यथा वृषभकलहाद्वृक्षपादभङ्गइति भावः ॥ ३२ ॥

चारुतेति। आसां योषितां वपुश्चारुता सौन्दर्य्यमभूषयत्। ताञ्चारुतां अनूनवयौवनयोगः सम्पूर्णयौवनसम्पत्तिरभूषयत्। तं पुनर्नवयौवनयोगन्तु मकरकेतनलक्ष्मीर्मदनसम्पत्तिरभूषयत् । तां मकरकेतनलक्ष्मीन्दयितसङ्गमएव भूषा यस्य स मदोऽभूषयत् । तां मदः तच्च दयितसङ्गमइत्यर्थः प्रक्रमानुसारात्तां मदस्तमपि

चारुता वपुरभूषयदासा-
न्तामनूननवयौवनयोगः ।
तम्पुनर्मकरकेतनलक्ष्मी-
स्तां मदो दयितसङ्गमभूषः ॥ ३३ ॥

क्षीवतामुपगतास्वनुवेलं
तासु रोषपरितोषवतीषु ।
अग्रहीन्नु सशरन्धनुरुज्झा-
मास नूज्झितनिषङ्गमनङ्गः ॥ ३४ ॥

वल्लभसङ्गइति प्रयोक्तव्ये विशेषणत्वेन प्रयोगोमहाकवीनामनु-
द्वेगात् । यथा भारवेः प्रयोगः शुचि भूषयतीत्यादौ श्लोके
स नयाङ्कः स च सिद्धिभूषणइति वक्तव्ये सनयापादितसिद्धि-
भूषणइति । अत्रोत्तरोत्तरस्य पूर्व्वपूर्व्वविशेषकत्वादेकावली । यत्रो-
त्तरोत्तरेषां स्यात्पूर्व्वपूर्व्वम्प्रति क्रमात् । विशेषकत्वकथनमसा-
वेकावली मतेति लक्षणात् ॥ ३३ ॥

क्षीवतामिति । क्षीवतां मत्तताम् । मत्ते शौण्डोत्कटक्षीवा
इत्यमरः । क्षीव मदे इत्यस्माद्धातोरनुपसर्गात् फुल्लक्षीवकृशोल्लाघा
इति निष्ठान्तोनिपातितः । उपगतासु प्राप्तासु । अतएवानुवेल-
म्प्रतिक्षणं रोषपरितोषवतीषु तासु स्त्रीषु विषये अनङ्गः
सशरन्धनुरग्रहीन्नु उज्झितनिषङ्गन्त्यक्ततूणीरं यथा तथा
उज्झामास नु तत्याज किं । उज्झतेर्लिट् इजादेश्च गुरुमतो
ऽनृच्छइत्याम्प्रत्ययः । रुष्टासु धनुर्ग्रहणं परितुष्टासु
त्यागस्य रोषपरितोषाभ्यामुत्प्रेक्ष्यते । अन्यथा रोषानन्तरं
परितोषः परितोषानन्तरं रोषस्य न स्यादिति भावः ।

शङ्कयाऽन्ययुवतौ वनिताभिः
प्रत्यभेदि दयितः स्फुटमेव ।
न ह्यसम्भवति तत्त्वविचारे
मत्सरेण हतसंवृति चेतः ॥ ३५ ॥

आननैर्विचकसे हृषिताभि
र्वल्लभानभि तनूभिरभावि ।
आर्द्रतां हृदयमाप च रोषो
लोलति स्म वचनेषु वधूनाम् ॥ ३६ ॥

रोषपरितोषयोर्धनुर्ग्रहणाग्रहणाभ्यां यथासङ्ख्येनान्वयाद्यथासङ्ख्या लङ्कारभेदः तेनोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः ॥ ३४ ॥

शङ्कयेति । वनिताभिरन्ययुवतौ सपत्न्यां शङ्कया तत्सङ्गशङ्का मात्रेण दयितः स्फुटमेव निश्चितवदेव प्रत्यभेदि सिद्धवत्क लोद्घाटितइत्यर्थः अनुचितोऽयमविमृश्य मिथ्याभियोगइति शङ्कां परिहरति । नेति । मत्सरेण वैरेण हता संवृतिर्गोप्यगोपनं यस्य तच्चेतस्तत्त्वविचारे भूतार्थचिन्तायां चमं सहिष्णु न भवति मत्सरग्रस्तचेतसामेष स्वभावइति भावः । सामान्येन विशेषसमर्थन रूपोऽर्थान्तरन्यासः ॥ ३५ ॥

आननैरिति । वल्लभानभि वल्लभसमचमित्यर्थः । अभिरभाग इति लक्षणार्थकर्मप्रवचनीयत्वात् द्वितीया । वधूनामाननैर्विचकसे विकसितम् । भावे लिट् । तनूभिरङ्गैर्हृषिताभिः पुलकि ताभिः । हृषर्लोमस्वितीडागमः । अभावि भूतं । भावे लुङ् । हृदयञ्चार्द्रतामाप काठिन्यञ्जहावित्यर्थः । वचनेषु रोषो लोलति

रूपमप्रतिविधानमनोज्ञं
प्रेम कार्य्यमनपेक्ष्य विकाशि ।
चाटु चाकृतकसम्भ्रममासां
कार्म्मणत्वमगमन्रमणेषु ॥ ३७ ॥
लीलयैव सुतनोस्तुलयित्वा
गौरवाढ्यमपि लावणिकेन ।
मानवञ्चनविदा वदनेन
क्रीतमेव हृदयन्दयितस्य ॥ ३८ ॥

चलति स्म वचनगतोरोषोवक्रतापि निवृत्तेत्यर्थः अत्र वधूव्यानन विकाशाद्यनेकक्रियायोगपद्यात्समुच्चयालङ्कारः । गुणक्रियायौग पद्यं समुच्चयइति लक्षणात् ॥ ३६ ॥

रूपमिति । अप्रतिविधानमप्रतियत्नमेव मनोज्ञं स्वभाव सुन्दरमित्यर्थः रूपमाकृतिः कार्य्यम्प्रयोजनमनपेक्ष्य विकाशि वर्द्धमानं अनौपाधिकमित्यर्थः । प्रेम अकृतकसम्भ्रममकृत्रिमसं रम्भञ्चाटु प्रियवचनञ्चासां स्त्रीणां रमणेषु विषये कार्म्मणत्वं वशी करणकर्मत्वम् । वशक्रिया संवदनं मूलकर्म्म तु कार्म्मणमित्यमरः । तद्युक्तात्कर्म्मणोऽण् । अगमन् प्राप्तानि । गमेर्लुङ् च्लेरङादेशः । अत्र रूपादिष्वारोप्यमाणस्य कार्म्मणत्वस्य प्रकृतोपयोगात्परिणा मालङ्कारः ॥ ३७ ॥

लीलयेति । लावण्यङ्कान्तिविशेषोऽस्यास्तीति लावणिकं लावण्यवत् । अतइनठनाविति ठन्प्रत्यये ठस्येकः यस्येति चेत्यल्लोपे हलस्तद्धितस्येति यकारलोपः । अन्यत्र तु लवणं पण्यमस्यास्तीति

स्पर्शभाजि विशदच्छविचारौ
कल्पिते मृगदृशां सुरताय।
सन्नतिन्दधति पेतुरजस्रं
दृष्टयः प्रियतमे शयने च॥ ३९॥

लावणिको लवणव्यवहारी। लवणाट्ठञ् प्रत्ययः। तेन लावणिकेन मानवञ्चनविदा अहङ्कारहरणदक्षेण। अन्यत्र परिमाणप्रतारणपटुना। सुतनोः स्त्रियाः वदनेन कर्त्रा गौरवाढ्यं गाम्भीर्यसम्पन्नमपि। अन्यत्र गुरुत्वयुक्तमपि दयितस्य हृदयं लीलया विलासेनैव तुलयित्वा। अन्यत्रानायासेनैव उन्माय गुर्वपि लघुतया मौलेत्यर्थः। क्रीतं वशीकृतमेव। अन्यत्र दानेन स्वीकृतमेव। अत्र विशेषणमहिम्नैव वदने लावणिकत्वस्य हृदये पण्यत्वस्य च प्रतीतेः समासोक्तिरलङ्कारः। हृदयस्य प्रतीयमानपण्याभेदेन क्रीतत्वोक्तेरलौकिकहृदयावर्ज्जने लौकिकक्रयव्यवहारसमारोपः॥ ३८॥

एवं मदानुभावं वर्णयित्वा सम्प्रति सुरतकेलिवर्णनं प्रस्तौति। तत्र सुरतं द्विविधं वाह्यमाभ्यन्तरञ्चेति। वाह्यं च प्रेक्षणभाषणाश्लेषणचुम्बनाद्यनेकभेदभिन्नम्। तत्र दृष्टिविशेषन्तावदाह। स्पर्शेति। स्पर्शभाजि सुखस्पर्शे विशदा विमला शुभ्रा च या छविः कान्तिस्तया चारौ रम्ये सुरताय कल्पिते रतिसुखदानाय सृष्टे विहारयोग्यतया सज्जीकृते च सन्नतिमानुकूल्यं सर्व्वतः साम्यञ्च दधति दधाने प्रियतमे शयने च मृगदृशां दृष्टयोऽजस्रमविच्छिन्नं पेतुः पतिताः युगपदुभयावलोकनादभिलाषं व्यञ्जयामासुरित्यर्थः। अत्र प्रियतमशयनयोः प्रकृतयोरेव धर्म्मसाम्यादौपम्यप्रतीतेः केवलप्रकृतगोचरा तुल्ययोगिता॥ ३९॥

यूनि रागतरलैरपि तिर्य्यक्
पातिभिः श्रुतिगुणेन युतस्य ।
दीर्घदर्शिभिरकारि वधूनां
लङ्घनन्न नयनैः श्रवणस्य ॥ ४० ॥

सङ्कथेच्छुरभिधातुमनीशा
सम्मुखी न च बभूव दिदृक्षुः ।
स्पर्शनेन दयितस्य नतभ्रू
रङ्गसङ्गचपलापि चकम्पे ॥ ४१ ॥

यूनीति । रागेण तरलैश्चपलैरपि दर्शनोत्सुकैरपीत्यर्थः । यूनि प्रिये तिर्यक्पातिभिस्त्रपया साचि विप्रसारिभिः दीर्घदर्शिभि रायतान्तैः आलोकनव्यापारपरैरित्यर्थः । अन्यत्र रागद्वेषचपलैः अतएव तिर्य्यक्पातिभिः कुटिलवृत्तिभिरपि दीर्घदर्शिभिरागामि कार्य्यज्ञैरित्यर्थः वधूनां नयनैः श्रुतिगुणेन शब्दग्रहणपाटवेन युतस्य । श्रूयतेऽनेनेति श्रवणं श्रोत्रन्तस्य लङ्घनमतिक्रमोनाकारि न चक्रे । कर्णान्ते विश्रान्तमित्यर्थः अन्यत्र तु श्रुतिः श्रवणं अभ्यासइति यावत् । सैव गुणस्तेन युतस्य श्रूयतइति श्रवणं शास्त्रं तस्य लङ्घनं नाकारि रागद्वेषग्रस्तोऽपि शास्त्रज्ञः कदाचिच्छास्त्राति क्रमाद्बिभेतीति भावः । अयञ्च व्यवहारोनयनेषु रागतरलैरित्यादि श्लिष्टविशेषणमहिम्ना गम्यतइति समासोक्तिभेदः इयञ्च रागदृष्टि रौत्सुक्यानुभावः ॥ ४० ॥

सङ्कथेति । नतभ्रूः स्त्री सङ्कथायां सम्भाषणे इच्छुरिच्छा वत्यपि । विन्दुरिच्छुरित्युप्रत्ययान्तोनिपातः । अभिधातुं

उत्तरीयविनयात्त्रपमाणा
रुन्धती किल तदीक्षणमार्गम्।
आवरिष्ट विकटेन विवोढु
र्वक्षसैव कुचमण्डलमन्या ॥ ४२ ॥

सम्भाषयितुमनीशा अक्षमा बभूव। अप्यर्थस्य शब्दः दिदृक्षुर्द्रष्टु मिच्छुरपि। दृशेः सन्नन्तादुप्रत्ययः। सम्मुखी अभिमुखी न बभूव। अङ्गसङ्गचपला गात्रस्पर्शचपलापि दयितस्य स्पर्शनेन चकम्पे कम्पितवती। एते कम्पादयो लज्जासाध्वसानुभावाः। लज्जाविजितमन्मथयं मुग्धा ॥ ४१ ॥

अथालिङ्गनं वर्णयति। उत्तरीयेति। अन्या स्त्री उत्तरीयविनयात्कुचांशुकाकर्षणात्। त्रपमाणा तदीक्षणमार्गन्तस्य वोढुः दृष्टिपथं रुन्धती किल आवृण्वतीव न तु वस्तुत इति किलार्थः। विकटेन विशालेन। विशङ्कटं विशालं स्यात्करालं विकटन्तथेति वैजयन्ती। सम्प्रोदश्च कटजिति चकारादेः कटच्प्रत्ययः। विवोढुः परिणेतुः वक्षसैव कुचमण्डलं आवरिष्ट आवृतवती कुचावरणव्याजेनालिङ्गितवती। वृङ्तोलुङि तङ् इडागमः। अत्र कुचसंवरणेनालिङ्गनेच्छानिगूहनान्मीलनभेदः एषा लज्जामन्मथमध्यस्था मध्यमा ॥ ४२ ॥

अंशुकमिति। अंशुकमुत्तरीयं हृतवता परिणेत्रा भर्त्रा तन्वोः कृशयोः बाह्वोः स्वस्तिकोबन्धविशेषः तेनापिहिते आच्छादिते मुग्धे सुन्दरे कुचाग्रे यस्याः सा तथोक्ता। अचिरोढा नवोढा भिन्नानि शङ्खस्य वलयानि यस्मिन् कर्मणि तद्यथा तथा रभसाद्वेगात्पर्यरम्भि

अंशुकं हृतवता तनुबाहु
स्वस्तिकापिहितमुग्धकुचाग्रा ।
भिन्नशङ्खवलयप्परिणेत्रा
पर्य्यरम्भि रभसादचिरोढा ॥ ४३ ॥

सञ्जहार सहसा परिरब्ध
प्रेयसीषु विरहय्य विरोधम् ।
संहितं रतिपतिः स्मितभिन्न
क्रोधमाशु तरुणेषु महेषुम् ॥ ४४ ॥

गाढमाश्लिष्टेत्यर्थः । रभेर्ण्यन्तात्कर्म्मणि लुङ् । रभेरशब्लिटोरिति नुमागमः । एषातिरोहितमुग्धा ॥ ४३ ॥

सञ्जहारेति । तरुणेषु युवसु विरोधं प्रणयकलहं विरहय्य विहाय । रहयतेः स्वार्थण्यन्तात् क्त्वा तस्य ल्यप् ल्यपि लघुपूर्व्वादित्ययादेशः । सहसा परिरब्धाः प्रेयस्योयैस्तेषु परिरब्धप्रेयसीषु आश्लिष्टवधूकेषु सत्सु । ईयसश्चेति कपोऽभावः ईयसोबहुव्रीहौ प्रतिषेधोवक्तव्यइत्युपसर्ज्जनस्य ह्रस्वनिषेधः । रतिपतिः कामः संहितमारोपितं महेषुं महान्तं शरं स्मितभिन्नक्रोधं स्वयत्नसाफल्यात् स्मितेनोज्झितपूर्व्वरोषं च यथा तथा आशु सञ्जहार । सिद्धेऽर्थे साधनानवकाशादित्यर्थः परिरम्भाल्लोयूनां विरहइति भावः ॥ ४४ ॥

स्रंसमानमिति । उपयन्तरि भर्त्तरि रभसेन रागान्धतयेत्यर्थः । उपसपत्नि सपत्नीसमीपे । समीपार्थेऽव्ययीभावे नपुंसकह्रस्वत्वम् । श्लिष्टवति आश्लिष्टवति सति स्रंसमानं स्पर्शसुखपारवश्या

स्रंसमानमुपयन्तरि वध्वाः
श्लिष्टवत्युपसर्पति रसेन।
आत्मनैव रुरुधे कतिनेव
स्वेदसङ्गि वसनञ्जघनेन ॥ ४५ ॥
पीडिते पुरउरःप्रतिपेषं
भर्त्तरि स्तनयुगेन युवत्याः।
स्पष्टमेव दलतः प्रतिनार्य्या
स्तन्मयत्वमभवद्धृदयस्य ॥ ४६ ॥

स्रंसमानं तथापि स्वेदसङ्गि स्वेदेन सात्त्विकेन सक्तम्बध्वा वसनं कतिना कुशलेन स्वस्वेदं लाघवमिति जानतेवेत्यर्थः। जघनेन कर्त्रा आत्मनैव स्वयमेव रुरुधे रुद्धम्। सा तु न वेत्तीति भावः स्वेद हेतुकस्य वसनरोधस्य स्वलाघवज्ञानहेतुकत्वमुत्प्रेक्ष्यते ॥ ४५ ॥

पीडितइति। युवत्याः युवतेः स्तनयुगेन भर्त्तरि प्रतिनार्याः पुरोऽग्रे समक्षमेव उरः प्रतिपिष्य । उरःप्रतिपेषं । परि क्लिश्यमाने चेति णमुल् कृन्मेजन्तइत्यव्ययसंज्ञा। वक्षः प्रतिपीड्ये त्यर्थः पीडिते सति दलतईर्ष्यया दीर्य्यमाणस्य प्रतिनार्य्याः सपत्न्याः हृदयस्य तन्मयत्वं भर्त्तृतादात्म्यं स्पष्टमभवदेव। अन्यथा कथ मन्यपीडनादन्यदलनमिति भावः। अतएवेयमसङ्गत्यलङ्कारोपजी विनी तन्मयत्वोत्प्रेक्षेति सङ्करः।] कार्य्यकारणयोर्भिन्नदेशत्वे स्याद सङ्गतिः ॥ ४६ ॥

दीपितेति। वल्लभे दीपितस्मरं उद्दीपितकामं यथा तथा उरस्युपपीडं। उरस्युपपीड्य सप्तम्यां चोपपीडरुधकर्षइति णमुल्।

दीपितस्मरमुरस्युपपीडं
वल्लभे घनमभिष्वजमाने।
वक्रतान्न ययतुः कुचकुम्भौ
सुभ्रुवः कठिनतातिशयेन ॥ ४७ ॥

सम्प्रवेष्टुमिव योषित ईषुः
श्लिष्यतां हृदयमिष्टतमानाम्।
आत्मनः सततमेव तदन्त-
र्वर्त्तिनो न खलु नूनमजानन् ॥ ४८ ॥

तत्पुरुषे कृति बहुलमित्यलुक्। घनङ्गाढमभिष्वजमाने परिरभमाणे सति। परिरम्भः परिष्वङ्गः संश्लेष उपगूहनमित्यमरः। सुभ्रुवः कुचकुम्भौ कठिनतातिशयेन वक्रताम्परिमण्डलतां न ययतुर्न प्राप्तौ। अत्र गाढालिङ्गनात्कुचकुम्भयोर्वक्रत्वसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥ ४७ ॥

सम्प्रवेष्टुमिति। योषितः श्लिष्यतामालिङ्गतामिष्टतमानां हृदयं संप्रवेष्टुमीषुरिच्छन्ति स्मेव इति गाढालिङ्गननिमित्ता क्रियास्वरूपोत्प्रेक्षा गुणस्वरूपोत्प्रेक्षा वा विवक्षाभेदात्। अत एवात्मनः स्वान्सततमेव तदन्तर्वर्त्तिनस्तेषामिष्टतमानां अन्तर्हृदयेष्वेव स्थितान्नाजानन्नूनं अन्यथा कथं पुनः प्रवेशेच्छेति भावः इयमज्ञानोत्प्रेक्षा पूर्वोत्प्रेक्षासापेक्षेति सजातीयसङ्करः ॥ ४८ ॥

स्नेहेति। स्नेहनिर्भरम्प्रेमरसपूर्णन्तैलादिकद्रवद्रव्यपूर्णञ्च। स्नेहोऽस्त्री द्रवहार्दयोरिति वैजयन्ती। अत एव वधूनां वपुरन्तरार्द्रतान्द्रवत्वमधत्त स्नेहद्रव्यसम्पूर्णमन्तरार्द्रम्भवतीति भावः। असंशयं

स्वेदनिर्भरमधत्त वधूना-
मार्द्रतां वपुरसंशयमन्तः ।
यूनि गाढपरिरम्भिणि वस्त्र-
क्नोपमम्बु ववृषे यदनेन ॥ ४९ ॥
न स्म माति वपुषः प्रमदाना-
मन्तरिष्टतमसङ्गमजन्मा ।
यद्बहुर्बहिरवाप्य विकाशं
व्यानशे तनुरुहाण्यपि हर्षः ॥ ५० ॥

संशयस्याभावः । अर्थाभावेऽव्ययीभावः । कुतो यद्यस्माद्यूनि पुंसि गाढम्परिरम्भत इति परिरम्भिणि गाढाश्लेषिणि सति अनेन वपुषा कर्त्रा वस्त्रं क्नोपयित्वा परिषिच्य वस्त्रक्नोपम् । क्नुधातोर्ण्यन्ता दर्त्तिह्नीत्यादिना पुगागमे चेले क्नोपेरिति णमुल् । अम्बु ववृषे । वृषेः कर्म्मणि लिट् । अन्तरार्द्रस्य निष्पीडनाद्बहिरम्बुस्रावसम्भवात् तन्निमित्तेयमन्तरार्द्रतोत्प्रेक्षा प्रियाङ्गसङ्गात्ताः खिन्ना इति सात्त्विकोदयोक्तिः ॥ ४९ ॥

न स्मेति । प्रमदानामिष्टतमसङ्गमेन जन्म यस्य सः । जन्माद्युत्तरपदत्वाद्व्यधिकरणबहुव्रीहिरिति वामनः । बहुर्विपुलः । विपुलानेकयोर्बहुरिति वैजयन्ती । हर्षो वपुषोऽन्तर्न माति स्म अत्युद्रेकात्स्वान्तःस्थित इत्युत्प्रेक्षा । कुतः यद्यस्माद्बहिर्वपुषो बहिर्विकाशं वृद्धिमवाप्य तनुरुहाणि रोमाण्यपि व्यानशे व्याप । कर्त्तरि लिट् । अश्नोतेश्चेति नुडागमः । अत्र बहिर्विकाशन

यत् प्रियव्यतिकराद्वनिताना
मङ्गजेन पुलकेन बभूवे ।
प्रापि तेन भृशमुच्छ्वसिताभि
र्नीविभिः सपदि बन्धनमोक्षः ॥ ५१ ॥

ह्रीभरादवनतम्परिरम्भे
रागवानवटुजेष्ववकृष्य ।
अर्पितोष्ठदलमाननपद्मं
योषितोमुकुलिताक्षमधासीत् ॥ ५२ ॥

निमित्तकान्तरऽस्म.नोत्प्रेक्षा अ.नन्दरोमाञ्चयोः श्लेषमूलाभेदाध्यवसायातिशयोक्त्यनुप्राणितेति सङ्करः ॥ ५० ॥

यदिति । वनितानां स्त्रीणां प्रियस्य भर्त्तुर्व्यतिकरात्सम्पर्कात्सङ्गमाच्चाङ्गजेनाङ्गव्यापिना पुत्रेण च पुलकेन बभूवे भूतमिति यत् । भावे लिट् । तेन पुलकोदयेन पुत्रोदयेन च भृशमुच्छ्वसिताभिरुच्छिन्नाभिर्मोचाशया आश्वसिताभिश्च नीविभिः लक्षणया कटिवस्त्रैः अन्यथा बन्धनशब्देन पौनरुक्त्यात् । सपदि बन्धनमोचो ग्रन्थिभेदो निगडमोचनं च प्रापि प्राप्तः । कर्मणि लुङ् । अभ्युदयेषु राजानो बद्धान् मोचयन्तीति भावः । अत्र प्रकृतपुलकनीविगताङ्गजत्वोच्छ्वसितत्वादिविशेषणसाम्याद्बन्धनमोक्षणसम्बन्धाच्च अप्रकृतपुत्रकारागतिप्रतीतेः समासोक्तिरलङ्कारः ॥ ५१ ॥

अथ चुम्बनक्रीडां वर्णयति । ह्रीति । परिरम्भे आलिङ्गने ह्रीरेव भरस्तस्मादवनतं भाराक्रान्तं नमतीति भावः । अर्पितं स्वमुखे निहितमोष्ठ एव दलं पत्रं यस्य तद्योषितआननमेव पद्मं

  

पल्लवोपमितिसाम्यसपक्षं
दष्टवत्यधरबिम्बमभीष्टे।
पर्य्यकूजि सरुजेव तरुण्या
स्तारलोलवलयेन करेण ॥ ५३ ॥

रागवान् रागी अवटुजेषु चरमशिरोरुहेषु। अवटुर्घाटा कृकाटिकेत्यमरः। अवकृष्य अवटुजाकर्षणेनोन्नमय्येत्यर्थः। मुकुलिताक्षं निमीलितनेत्रं यथा तथा। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षजिति षच् प्रत्ययः। अधासीत् पपौ। धेटो लुङ् आदेच इत्यात्वं अस्तिसिचोऽपृक्त इतीडागमः। अत्राननोष्ठस्य पद्मदलरूपणात्तत्रानुरागिणो मधुपत्वं च गम्यते इत्येकदेशविवर्त्ति रूपकम् ॥ ५२ ॥

पल्लवेति। पल्लवेन उपमित्या सादृश्येन यत्साम्यन्तेन सपक्षं उभयोरपि पल्लवैकोपमानत्वसाधर्म्यात्सुहृद्भूतं अधरो बिम्बमिव तदधरबिम्बं अभीष्टे प्रियतमे दष्टवति सति। सह रुजा सरुक्। तेन सहेति बहुव्रीहिः सहस्य सः। तेन सरुजेव सव्यथेनेव। स्त्री रुग्रुजा चोपतापइत्यमरः। ताराण्युच्चैः क्रोशन्ति कुतः लोलानि चलानि वलयानि कङ्कणानि यस्य तेन तरुण्याः करेण पर्य्यकूजि परिकूजितम्। भावे लुङ्। सुहृद्दुःखाद्दुःखायन्ते सुहृद इति भावः। अत्र कङ्कणद्वारकस्य करकूजनस्य विधूननहेतुकस्य सरुजेवेति रुग्हेतुकत्वमुत्प्रेक्ष्यते ॥ ५३ ॥

केनचिदिति। केनचिद्रागिणा मधुरं रसवन्तमुल्वणरागमतिरक्तं तथापि विरहेष्वधिकं वाष्पेण विरहोष्मणा तप्तं सुभ्रुव

केनचिन्मधुरमुल्बणरागं
बाष्पतप्तमधिकं विरहेषु ।
ओष्ठपल्लवमपास्य मुहूर्त्तं
सुभ्रुवः सरसमक्षि चुचुम्बे ॥ ५४ ॥

रेचितम्परिजनेन महीयः
केवलाभिरतदम्पति धाम ।
साम्यमाप कमलासखविष्वक्-
सेनसेवितयुगान्तपयोधेः ॥ ५५ ॥

ओष्ठपल्लवमपास्य सरसं सान्द्रशीतं अक्षि चुचुम्बे चुम्बितं । अत्र तप्तत्वरम्यत्वयोर्विशेषणगत्याधरत्यागाक्षिचुम्बनहेतुकङ्काव्यलिङ्गद्वयं सापेक्षत्वात्सङ्कीर्य्यते ॥ ५४ ॥

एवं वाह्यसुरतमुक्त्वाभ्यन्तरसुरतवर्णनमप्रस्तौति । रेचितमित्यादि । परिजनेन रेचितं रिक्तीकृतम् । अतएव केवलावेकाकिनावभिरतौ दम्पती जायापती यस्मिन् तत् । दम्पती जम्पती जायापती भार्य्यापती समावित्यमरः । राजदन्तादिषु जायाशब्दस्य जम्भावो दम्भावस्य विकल्पान्निपातितः । महीयो महत्तरं धाम केलिगृहं कमलासखेन लक्ष्मीभर्त्रा विष्वक्सेनेन जनार्द्दनेन विष्णुना सेवितस्याधिष्ठितस्य युगान्तपयोधेः साम्यमापेत्युपमालङ्कारः । युगान्तविशेषणं विविक्ततात्द्योतनार्थं एतेनेच्छाविहारतोक्ता ॥ ५५ ॥

अथ विस्रम्भविहाराण्येवाह । आवृतानीति । उच्चैरुन्नतेनोरसिजद्वितयेन निरन्तरं नीरन्ध्रमावृतानि संवृतान्यपि योषितां

आवृतान्यपि निरन्तरमुच्चै
र्योषितामुरसिजद्वितयेन।
रागिणामितरेतरविमर्दिभिः
पाणिभिर्जगृहिरे हृदयानि ॥ ५६ ॥
कामिनामसकलानि विभुग्नैः
स्वेदवारिमृदुभिः करजाग्रैः।
अक्रियन्त कठिनेषु कथञ्चि
त्कामिनीकुचतटेषु पदानि॥ ५७॥

हृदयानि वक्षांसि चेतांसि च इतरेतरविमर्दिभिरितरेतरः परा
मर्दिभिः रागिणां पाणिभिर्जगृहिरे गृहीतानि। निगूढं वस्तु हस्त
परामर्शाल्लभ्यत इति एकत्र भावः अन्यत्र लब्धलक्ष्यः प्रियकर
स्पर्शस्तासां हृदयग्राह्योऽभूदिति भावः। नैरन्तर्येण प्रतिबन्धो
ऽपि कुचयोः कथञ्चिदन्तरं सम्पाद्य हृदयानि स्पृष्टान्येवेति
वाक्यार्थः। अत्र द्वितयानामपि हृदयानां प्रकृतत्वात्केवलप्रकृतश्लेषः
॥ ५६ ॥

कामिनामिति। स्वेदवारिणा सात्त्विकेनाङ्गुलीस्वेदेन मृदुभिः
कोमलताङ्गतैरतएव विभुग्नैर्विनम्रैः कामिनां करजाग्रैः नखाग्रैः
कठिनेषु कामिनीकुचतटेषु असकलान्यसमग्राणि पदानि क्षतानि
कथञ्चिदक्रियन्त कृतानि। कठिनेषु मृदूनां पदलाभो दुःसम्पाद्य
इति भावः। नखक्रिया प्रवृत्तेत्यर्थः। अत्र कुचानामीदृ
क्काठिन्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः॥ ५७॥

सोष्मणस्तनशिलाशिखराग्रा
दात्तघर्म्मसलिलैस्तरुणानाम्।
उच्छलत्कमलचारुषु हस्तै
र्निम्ननाभिसरसीषु निपेते ॥ ५८ ॥
आम्रशङ्किरभितोवलिवीची
र्लोलमानविततांगुलिहस्तैः।
सुभ्रुवामनुभवात् प्रतिपेदे
मुष्टिमेयमिति मध्यमभीष्टैः ॥ ५९ ॥

सोष्मणइति। सोष्मणोऽथौवनोष्मयुक्तात् स्तनावेव शिला शिखरे तयोरग्रादुपरिभागादात्तघर्म्मसलिलैरुष्णादेशविहारात् प्राप्तस्वेदै स्तरुणानां हस्तैरुच्छलत्कमलवद्विकचकमलैश्च चारुषु निम्ननाभिष्वेव सरसीषु निपेते निपतितम्। ऊष्मखिन्नानां कुतश्चित् उन्नता त्ययसि पातोयुक्तइति भावः। प्रथमं कुचौ स्पृष्ट्वा ततोनाभिदेश मस्पृशन्नित्यर्थः। अत्र कुचयोः शिलाशिखरत्वेन नाभीनां सरसी त्वेन च रूपणाद्धस्तानां आपातिपुरुषत्वरूपणङ्गम्यतइति एकदेश विवर्त्ति रूपकम् ॥ ५८ ॥

आम्रशङ्किरिति। वलयोवीचयइव वलिवीचीरभितआम्रशङ्किः लोलमानास्तलनशीलाः। ताच्छील्यवयोवचनशक्तिषु चानशिति चानश् प्रत्ययः न तु शानच् लोलतेः परस्मैपदित्वात्। अतएव लोलमाना दयश्चानशइति वामनः। लोलमानाविततः प्रसारितास्चाङ्गुलयो येषान्ते तथाविधाहस्तायेषान्तैरभीष्टैः प्रियतमैः सुभ्रुवां मध्यं मुष्टिमेयमिति मुष्ट्या मातुं शक्यमिति अनुभवात्प्रत्यक्षेण

प्राप्य नाभिनदमज्जनमाशु
प्रस्थितं निवसनग्रहणाय ।
औपनीविकमरुन्ध किल स्त्री
वल्लभस्य करमात्मकराभ्याम् ॥ ६० ॥
कामिनः कृतरतोत्सवकाल
क्षेपमाकुलवधूकरसङ्गि ।
मेखलागुणविलग्नमलक्ष्या
न्दीर्घसूत्रमकरोत्परिधानम् ॥ ६१ ॥

सुप्त्या मानं कृत्वैव प्रतिपदे प्रतिबुद्धं न तु प्रसिद्धिमात्रादिति भावः ।
असुप्तिसेयस्य सुप्तिसेयत्वोक्तेरतिशयोक्तिभेदोऽलङ्कारः ॥ ५९ ॥

प्राप्येति । नाभिरेव नदो ह्रद इति रूपकं तत्र मज्जनं प्राप्याशु निवसनग्रहणाय वस्त्राकर्षणायेत्यर्थः । स्नातस्य वस्त्रग्रहणं युक्तमिति भावः । प्रस्थितमप्रवृत्तम् । उपनीवि नीविसमीपे प्रायेण तत्र भवमौपनीविकं तत्र व्याप्तमित्यर्थः । उपजानूपकर्णोपनीवेष्ठक् । वल्लभस्य करं स्त्री आत्मकराभ्यां अरुन्ध किल रोधं नाटितवतीत्यर्थः ॥ ६० ॥

कामिन इति । आकुले प्रियकरनिवारणव्यग्रे वधूकरे सङ्गि सक्तं मेखलैव गुणस्तत्र विलग्नं दीर्घसूत्रं आततन्तुकं अत्यायतत्वात् बहुधा वेष्टितमित्यर्थः । चिरक्रियश्च । दीर्घसूत्रश्चिरक्रियइत्यमरः । एवं कृतोरतस्यैवोत्सवस्य कालक्षेपः कालविलम्बो येन तत्परिधानमधोंऽशुकं कामिनोऽलक्ष्यामकरोत् । इच्छाविघातादीर्ष्याञ्जनया

अम्बरं विनयतः प्रियपाणे-
र्योषितश्च करयोः कलहस्य ।
वारणामिव विधातुमभीक्ष्णं
कक्ष्यया च वलयैश्च शिशिञ्जे ॥ ६२ ॥

ग्रन्थिमुद्ग्रथयितुं हृदयेशे
वाससः स्पृशति मानधनायाः ।
भ्रूयुगेण सपदि प्रतिपेदे
रोमभिश्च सममेव विभेदः ॥ ६३ ॥

मासेत्यर्थः । अत्र करसङ्गादिपदार्थानां विशेषणगत्या असूया हेतुत्वादनेकपदार्थहेतुकक्काव्यलिङ्गमलङ्कारः ॥ ६१ ॥

अम्बरमिति । अम्बरं विनयतोऽपसारयतः प्रियपाणेर्योषितः करयोश्च तस्मिन् रोधकयोरिति भावः । कलहस्य वारणां विधातुं निरावरणं कर्तुमिवेति फलोत्प्रेक्षा । कक्ष्यया काञ्च्या । कक्ष्या कक्षे वरत्रायां काञ्च्यां गेहप्रकोष्ठयोरिति विश्वः । कक्ष्येति दान्त पाठे तु कक्षोग्रहणिकाकाञ्चीप्रकोष्ठगजरज्जुष्विति दान्तेषु विश्वः । वलयैः कङ्कणैश्च अभीक्ष्णं शिशिञ्जे चुक्रुशे । भावे लिट् । भूषणानां तु शिञ्जितमित्यमरः । द्वयोः कलहायमानयोः पार्श्वस्थाः साक्रोशं निवारयन्तीति भावः । शिञ्जतिरयंम्तालव्यादिर्न दन्त्यादिः योषेव शिञ्जे इति श्रुतेः ॥ ६२ ॥

ग्रन्थिमिति । हृदयेशे प्रिये वाससोग्रन्थिमुद्ग्रथयितुं विस्रंसयितुं । ग्रथयतेश्चौरादिकात्तुमुन् । स्पृशति सति मानधनाया मानवत्याः कामिन्या इति शेषः । भ्रूयुगेण रोमभिश्च ।

आश्रु लङ्घितवतीष्टकराग्रे
नीविमर्द्धमुकुलीकृतदृष्ट्या ।
रक्तवैणिकहताधरतन्त्री
मण्डलक्वणितचारु चुकूजे ॥ ६४ ॥

कर्त्तरि तृतीयेति तृतीया । सपदि समं युगपदेव विभेदोभङ्गोहर्षस्य प्रतिपेदे प्राप्तः अत्र मानवत्त्वात्कामिनीविस्पर्शेषु युगपदमर्षहर्षयोरुदयात्तदनुभावयोरपि युगपदाविर्भावइति भावः । अत्र भूभङ्गरोमाञ्चक्रियययोः समुच्चयात् समुच्चयभेदः स च विभेद इति स्लेषप्रतिभोत्थापिताभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितइति सङ्करः ॥ ६३ ॥

आश्विति । इष्टस्य प्रियस्य कराग्रे नीविं वस्त्रग्रन्थिं आशु हठात् लङ्घितवति अतिक्रान्तवति ऊरुमूलङ्गते सतीत्यर्थः । अर्द्धमुकुलीकृतदृष्ट्या सुखपारव[illegible]र्द्धनिमीलिताक्ष्या स्त्रिया रक्तोरक्तकण्ठः स्वयङ्गानकुशलः वीणाशिल्पमस्य वैणिकोवीणावाद्यनिपुणः । शिल्पमिति ठक् । रक्तेन वैणिकेन यन्त्रगानकुशलेन हतं वादितं यदधरतन्त्रीणां मण्डलं समूहः बहुतन्त्रीकस्वरमण्डलादिभेदः तस्य क्वणितमिव चारु यथा तथा चुकूजे कूजितम् । भावे लिट् । अधरग्रहणन्तन्त्रमाधुर्य्यातिशयात् । स्पर्शसुखातिरेकार्थन्तन्त्रीकण्ठस्वरव्यतिकरमनोहरः कोऽपि रससर्वस्वभूतः कण्ठकूजितविशेषः कृतइत्यर्थः । अतएव रक्तवैणिकहतेति विशेषणं क्वणितचार्विति उपमालङ्कारः ॥ ६४ ॥

ऊरुमू[illegible]पलेक्षणमघ्न
न्यैर्वतंसकुसुमैः प्रियमेताः ।
चक्रिरे सपदि तानि यथार्थं
मन्मथस्य कुसुमायुधनाम ॥ ६७ ॥

धैर्य्यमुल्वणमनोभवभावा
वामताञ्च वपुरर्प्पितवत्यः ।
व्रीडितं ललितसौरतधार्ष्ट्या
स्तेनिरेऽभिरुचितेषु तरुण्यः ॥ ६८ ॥

ऊर्विति । एताः स्त्रियः ऊरुमूले चपलेक्षणं लोलचक्षुषं प्रियं यैर्वतंसकुसुमैः कर्णावतंसपुष्पैः । वष्टि भागुरिरल्लोपमवाप्यो रुपसर्गयोरित्यकारलोपः । अघ्नन् अताडयन् । हन्तेर्लङ् । गमहनेत्यादिना उपधालोपः होहन्तेरिति कुत्वम् । तानि वतंस कुसुमानि । मनोमथ्नातीति मन्मथः । पृषोदरादित्वात्साधुः । तस्य मन्मथस्य कुसुममायुधं यस्येति कुसुमायुधइति यन्नाम तद्यथार्थञ्चक्रिरे चक्रुः तदा तेषान्तत्कार्य्यकारित्वादिति भावः । अत्र वतंसेष्वारोप्यमाणस्य मन्मथायुधत्वस्य प्रकृतोपयोगात्परि णामालङ्कारः ॥ ६७ ॥

धैर्य्यमिति । तरुण्यः रमण्यः उल्वण उद्रिक्तोमनोभवभावा रतिरागोयासान्ताअपि अभिरुचितेषु प्रियेषु धैर्य्यमौदासीन्य न्तेनिरे । वपुः स्वाङ्गमर्प्पितवत्योयथेष्टकरणाय दत्तवत्योऽपि वामतां वक्रताञ्च तेनिरे । ललितं मनोहरं सुरतं सुरतसम्बन्धि धार्ष्ट्यम्प्रागल्भ्यं यासान्तास्तथापि व्रीडितं व्रीडान्तेनिरे इह

आयताङ्गुलिरभूदतिरिक्तः
सुभ्रुवां कृशिमशालिनि मध्ये।
श्रोणिषु प्रियकरः पृथुलासु
स्पर्शमाप सकलेन तलेन ॥ ६५ ॥

चक्रुरेव ललनोरुषु राजीः
स्पर्शलोभवशलोलकराणाम्।
कामिनामनिभृतान्यपि रम्भा
स्तम्भकोमलतलेषु नखानि ॥ ६६ ॥

आयतेति। आयताः अङ्गुलयो यस्य स प्रियकरः कृशस्य भावः कृशिमा कार्श्यम्। पृथ्वादिभ्य इमनिच् रऋतो हलादेर्लघोरिति रेफादेशः। तेन शालते शोभते तस्मिन् सुभ्रुवां मध्येऽतिरिक्तोऽधिकोऽभूत्। मध्यस्यातिकार्श्यादस्यैकदेशोऽभूदित्यर्थः। पृथुलासु श्रोणिषु कटिषु। वह्विश्रिश्रुयुद्रुग्लेति सूत्रेण श्रुधातोः निप्रत्ययः। सकलेन कृत्स्नेन तलेन स्पर्शमाप अन्तर्भागेन क्रमेण श्रोणिमस्पृशदित्यर्थः अतएव मध्यातिरेकोक्तिरतिशयोक्तिः ॥ ६५ ॥

चक्रुरेवेति। स्पर्शलोभवशेनोरुस्पर्शतृष्णापारतन्त्र्येण लोलकराणां चपलपाणीनां कामिनामनिभृतान्यनर्पितान्यपि नखानि कररुहाः। पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियामित्यमरः। रम्भास्तम्भकोमलतलेषु कदलीप्रकाण्डपेलवस्वरूपेषु ललनानामूरुषु राजीः रेखाश्चक्रुरेव ऊरुपरामर्शानान्तरीयनखस्पर्शमात्रादेव रेखाजाता इत्यर्थः। अत्र कोमलताया विशेषणगत्या राजीकरणहेतुत्वात्काव्यलिङ्गभेदः ॥ ६६ ॥

ऊरुमूल चपलेक्षणमघ्न
न्यैर्वतंसकुसुमैः प्रियमेताः ।
चक्रिरे सपदि तानि यथार्थं
मन्मथस्य कुसुमायुधनाम ॥ ६७ ॥
धैर्य्यमुल्बणमनोभवभावा
वामताञ्च वपुरर्प्पितवत्यः ।
व्रीडितं ललितसौरतधार्ष्ट्या
स्तेनिरेऽभिरुचितेषु तरुण्यः ॥ ६८ ॥

ऊर्विति । एताः स्त्रियः ऊरुमूले चपलेक्षणं लोलचक्षुषं प्रियं यैर्वतंसकुसुमैः कर्णावतंसपुष्पैः । वष्टि भागुरिरल्लोपमवाप्यो रुपसर्गयोरित्यकारलोपः । अघ्नन् अताडयन् । हन्तेर्लङ् । गमहनेत्यादिना उपधालोपः होहन्तेरिति कुत्वम् । तानि वतंस कुसुमानि । मनोमथ्नातीति मन्मथः । पृषोदरादित्वात्साधुः । तस्य मन्मथस्य कुसुममायुधं यस्येति कुसुमायुधइति यन्नाम तद्यथार्थञ्चक्रिरे चक्रुः तदा तेषान्तत्कार्य्यकारित्वादिति भावः । अत्र वतंसेष्वारोप्यमाणस्य मन्ममथायुधत्वस्य प्रकृतोपयोगात्परि णामालङ्कारः ॥ ६७ ॥

धैर्य्यमिति । तरुण्यः रमण्यः उल्बण उद्रिक्तोमनोभवभावा रतिरागोयासान्ताअपि अभिरुचितेषु प्रियेषु धैर्य्यमौदासीन्य न्तेनिरे । वपुः स्वाङ्गमर्प्पितवत्योयथेष्टकरणाय दत्तवत्योऽपि वामतां वक्रताञ्च तेनिरे । ललितं मनोहरं सुरतं सुरतसम्बन्धि धार्ष्ट्यम्प्रागल्भ्यं यासान्तास्तथापि व्रीडितं व्रीडान्तेनिरे इह

पाणिरोधमविरोधितवाञ्छ
म्भर्त्सनाश्च मधुरस्मितगर्भाः ।
कामिनः स्म कुरुते करभोरू
र्हारि शुष्करुदितञ्च सुखेऽपि ॥ ६९ ॥

स्त्रीणां रहसि रागाङ्गार्पणधार्ष्ट्यादिगुणाश्चाप्यागन्तुकतया सहज धैर्य्यवक्रताव्रीडितैः पुनः पुनः प्रतिबध्यन्तएवेति भावः । अत्र रागादीनां धैर्य्यादिभिः सह समावेशविरोधस्य सहजागन्तुकाभ्यामाभासीकरणाद्विरोधाभासोऽलङ्कारः धैर्य्यादिगुणसमुच्चयात्समुच्चयालङ्कारस्येति सङ्करः ॥ ६८ ॥

पाणीति । मणिबन्धादाकनिष्ठं करस्य करभोवहिरित्यमरः । करभइव ऊरूर्यस्याः सा करभोरूः स्त्री । ऊरूत्तरपदादौपम्ये इत्यूङ्प्रत्ययः । अविरोधितवाञ्छमनिवारितप्रियमनोरथं यथा तथा कामिनः पाणिरोधं नीविमोचणे व्याप्टतस्य प्रियपाणे र्निवारणं कुरुते स्म । तथा मधुरं मनोहरं स्मितङ्गर्भे अन्तर्वर्त्ति यासु तामन्दहासमिश्राः भर्त्सनास्तर्जनाश्च कुरुते स्म । तथा सुखेऽपि अधरपीडनादौ सुखातिरेके सत्यपि हारि मनोहारि शुष्करुदितमनश्रुलादनार्द्रं कृत्रिमरोदनञ्च कुरुते स्म । स्त्रीणामेष स्वभावोयदिष्टमप्यनिष्टतया निवारयन्त्यएव सुरतसुखमुपभुञ्जतइत्यर्थः । अत्र सुखेऽपि दुःखवदुपचारात्कुट्टमिताख्योऽनुभावोद्रष्टव्यः । केशाधरादिग्रहणे मोदमानेऽपि मानसे । दुःखितेव बहिः कुप्येद्यत्र कुट्टमितं हि तदिति लक्षणात् ॥ ६९ ॥

वारणार्थपदगद्गदवाचा
मीर्ष्यया मुहुरपत्रपया च ।
कुर्वते स्म सुदृशामनुकूल
म्प्रातिकूलिकतयैव युवानः ॥ ७० ॥

अन्यकालपरिहार्य्यमजस्र
न्तद्द्वयेन विदधे द्वयमेव ।
धृष्टता रहसि भर्तृषु ताभि
र्निर्दयत्वमितरैरबलासु ॥ ७१ ॥

वारणार्थेति । ईर्ष्यया अतिपीडनासहिष्णुतया अपत्रपया च रहस्यप्रकाशनवैलक्ष्येण च मुहुर्वारणार्थपदेषु मामित्यादिनिषेधवाचकशब्दप्रयोगेषु गद्गदवाचां स्खलद्गिरां सुदृशाम्प्रतिकूलं वर्त्तन्त इति प्रातिकूलिकाः प्रातिकूलचारिणः । तत्प्रत्यनुपूर्व्वमीपलोमकूपमिति ठक् । तत्तया प्रातिकूलिकतयैव प्रतिकूलाचरणेनैव युवानोऽनुकूलमिष्टं कुर्वते स्म कचिन्मनिवारणाद्यत्प्रतिकूलमिवाचरितमधरपीडनादिकन्तत्तासामिष्टत्वादनुकूलमेवेति प्रतिकूलाचरणमेवानुकूलम्भवतीत्यर्थः । अतएव प्रतिकूलमप्यनुकूलमिति विरोधाभासोऽलङ्कारः ॥ ७० ॥

अन्येति । अजस्रन्नित्यं अन्यकालपरिहार्य्यं सुरतेतरकाले त्याज्यन्तद्द्वयं कर्म्म द्वयेन कर्त्रा विदधे विहितमेव । धाञः कर्म्मणि लिट् । एतदेव व्यनक्ति रहसि ताभिरबलाभिर्भर्तृषु विषये धृष्टता विदधे इतरैर्भर्तृभिरबलासु स्त्रीषु निर्दयत्वञ्च विदधे । अन्यदा यथा पुंसां स्त्रीषु दया तासान्तेष्वप्रागल्भ्यमलङ्कारस्तद्वत्सुरतेषु

बाहुपीडनकचग्रहणाभ्या
माहतेन नखदन्तनिपातैः ।
बोधितस्तनुशयस्तरुणीना
मुन्मिमील विशदं विषमेषुः ॥ ७२ ॥

कान्तया सपदि कोप्युपगूढः
प्रौढपाणिरपनेतुमियेष ।
संहतस्तनतिरस्कृतदृष्टि
र्भ्रष्टमेव न दुकूलमपश्यत् ॥ ७३ ॥

तदिदमुद्धमेवालङ्कारइति भावः । अत्र स्त्रीपुंसधार्ष्ट्यनिर्दयत्वयोः प्रकृतयोर्विधानक्रियायौगपद्यं गम्यतइति तुल्ययोगिताभेदः ॥७१॥

बाह्विति । तरुणीनान्तनौ शेते इति तनुशयः तनुषु सुप्तः । अधिकरणे शेतेरित्यच् प्रत्ययः । विषमेषुः कामः बाहुपीडनं निर्दयाश्लेषः । कचग्रहणं केशाकर्षणन्ताभ्यामाहतेन मुष्टिघातेन । नपुंसके भावे क्तः । नखानान्दन्तानाञ्च निपातैः क्षतैश्च बोधितः सन् विशदं निर्जाड्यं यथा तथा उन्मिमील उद्बुद्धः सर्व्वमेतत्काम स्योद्दीपकमासीदित्यर्थः । अत्र प्रकृतविषमेषुविशेषणसामर्थ्याद प्रस्तुतसुप्तप्रबुद्धपुरुषप्रतीतेः समासोक्तिरलङ्कारः । एवमेव प्रबोध्यते खलु निद्रालुरित्यलौकिके वस्तुनि लौकिकवस्तुव्यवहारसमारोपः ॥ ७२ ॥

कान्तयेति । कान्तया सपदि वस्त्राकर्षणक्षणएवोपगूढआश्लिष्टः कोऽपि युवा कामी प्रौढपाणिर्व्यग्रहस्तः सन् अपनेतुन्दुकूलमाक्रष्टु मियेष संहताभ्यां निरन्तरश्लिष्टाभ्यां स्तनाभ्यां तिरस्कृतदृष्टि

आहतङ्कुचतटेन तरुण्याः
साधु सोढममुनेति पपात ।
त्रुय्यतः प्रियतमोरसि हारा-
त्पुष्पवृष्टिरिव मौक्तिकवृष्टिः ॥ ७४ ॥

सीत्कृतानि मणितं करुणोक्तिः
स्निग्धमुक्तमलमर्थवचांसि ।
हासभूषणरवाश्च रमण्याः
कामसूत्रपदतामुपजग्मुः ॥ ७५ ॥

स्तिरोहितात्मः सन् भ्रष्टमेव प्रागेव स्तनदुकूलं नापश्यत् अत्र दृष्टितिरस्कारस्य विशेषणगत्या अदर्शनहेतुत्वात्पदार्थहेतुक काव्यलिङ्गम् । तच्च दृष्टेस्तनतिरस्कारासम्बन्धेऽपि सम्बन्धरूपातिशयोक्त्युत्थापितमिति सङ्करः । तेन च कुचयोर्लोकोत्तरसौन्दर्यं व्यज्यतइति अलङ्कारेण वस्तुध्वनिः ॥ ७३ ॥

आहतमिति । तरुण्याः सम्बन्धिना कुचतटेनाहतमाहतिरमुना उरसा साधु सोढमिति हेतोस्त्रुय्यतः शीर्य्यमाणाद्धारान्मौक्तिकवृष्टिः पुष्पवृष्टिरिव प्रियतमोरसि पपात इत्युत्प्रेक्षा । विक्रान्तः पूज्यते पुष्पवृष्ट्येति प्रसिद्धिः ॥ ७४ ॥

सीत्कृतानीति । तरुण्याः सीत्कृतानि सीत्काराः । दन्तनिष्पीडनायां सीरिति शब्दप्रयोगः । मणितं रतिकाले स्त्रीणां कण्ठकूजितविशेषः । मणितं रतिकूजितमित्यभिधानात् । करुणोक्तिः त्रायस्वेत्यादिदीनोक्तिः । स्निग्धं स्नेहार्द्रमुक्तमुक्तिः त्वं मे प्राणाइति प्रियवादइत्यर्थः अलमर्थानि निषेधार्थानि वचांसि मा मेत्यादि

उद्धतैर्निभृतमेकमनेकै-
श्छेदवन्मृगदृशामविरामैः ।
श्रूयते स्म भणितं कलकाञ्ची-
नूपुरध्वनिभिरक्षतमेव ॥ ७६ ॥

ईदृशस्य भवतः कथमेत-
ल्लाघवं मुहुरतीव रतेषु ।
क्षिप्तमायतमदर्शयदुर्व्यां
काञ्चिदाम जघनस्य महत्त्वम् ॥ ७७ ॥

निवारणवचनानि । हासानां भूषणानां च रवाः स्वनाश्च कामसूत्रस्य वात्स्यायनादिकामतन्त्रप्रतिपादकशास्त्रस्य पदताम्पदत्वमिति पदमर्थः प्रमेयलक्षणमिति यावत्तत्तामुपजग्मुः इति गम्योत्प्रेक्षा। यद्वा कामेनैव कृतं सूत्रं तस्य पदानि सुप्तिङन्तशब्दरूपाणि तस्य शास्त्रस्यैतान्येव पदानि तत्तामुपजग्मुरित्युत्प्रेक्षैव ॥ ७५ ॥

उद्धतैरिति । निभृतमनुद्धतं सूक्ष्ममित्यर्थः । एकमेकाकि छेदवत् विच्छेदयुक्तम् । मृगदृशां भणितं रतिकूजितं उद्धतैः स्थूलैरनेकैर्बहुभिरविरामैरविच्छेदैः कलैरव्यक्तमधुरैः काञ्चीनां नूपुराणाञ्च ध्वनिभिरक्षतमतिरस्कृतमेव श्रूयते स्म श्रुतं भणितस्य तिरोधायकशब्दान्तरसद्भावेऽपि ताद्रूप्यानापत्तेरतद्गुणालङ्कारः । सहिते चेदतद्रूपस्वीकारः स्यादतद्गुणइति लक्षणात् ॥ ७६ ॥

ईदृशस्येति । रतेषु उर्व्या क्षिप्तं रतिसम्भ्रमात्पतितं आयतन्दीर्घभूतङ्काञ्चिदाम रसनागुणः कर्तृ ईदृशस्येति काञ्चिदाम्नः लाघामदृष्टान्तेन जघनपरिमाणप्रदेशेन इत्थं महत्तरस्याति

प्राप्यते स्म गतचित्रकचित्रै
श्चित्रमार्द्रनखलक्ष्म कपोलैः ।
दध्रिरेऽथ रभसच्युतपुष्पाः
स्वेदबिन्दुकुसुमान्यलकान्ताः ॥ ७८ ॥

यद्यदेव रुरुचे रुचिरेभ्यः
सुभ्रुवो रहसि तत्तदकुर्व्वन् ।
आनुकूलिकतया हि नराणा
माक्षिपन्ति हृदयानि तरुण्यः ॥ ७९ ॥

महतस्तव जघनस्य रतेषूपरि सुरतेषु मुहुः कथमेतल्लाघवं मुहु रुत्पतनपाटवं यस्येत्यमायतमहमप्येकवेष्टनपर्य्याप्तमिति भावः । इति जघनस्य महत्त्वदर्शनादिव इत्यं विस्मितस्येति शेषः । गम्यमानार्थत्वादप्रयोगः । अत्रोर्व्वीमायतत्वनिर्मित्तकाञ्चीदाम कर्टकं विस्मयपूर्व्वकजघनमहत्त्वदर्शनमुत्प्रेच्यते ॥ ७७ ॥

प्राप्यतइति । गतानि विमर्दात्प्रभ्रष्टानि चित्रकचित्राणि तमालपत्ररचनानि येषान्तैः कपोलैः आर्द्रं यन्नखलक्ष्म तदेव चित्रमिति रूपकम्प्राप्यते स्म प्राप्तम् । किञ्च रभसेन रति सम्भ्रमेण च्युतपुष्पा अलकान्ताश्चूर्णकुन्तलाग्राणि स्वेदबिन्दुनेव कुसुमानीति रूपकं दध्रिरे दधुः । धरतेर्भ्वादिकाल्लिटि त्रित्त्वा दात्मनेपदम् । स्वेदोऽत्र श्रमानुभवः । श्रमः खेदोऽध्वरत्यादेः श्वासस्वेदातिभूमिकृत् ॥ ७८ ॥

यद्यदेवेति । रुचिरेभ्योरमणेभ्योयद्यदेव चेष्टितं रुरुचे रोचते स्म प्रियमभूदित्यर्थः । रुचदीप्तावभिप्रीतौ चेति धातोर्लिट् ।

प्राप्य मन्मथरसादतिभूमि
न्दुर्वहस्तनभराः सुरतस्य ।
शश्रमुः श्रमजलार्द्रललाट
श्लिष्टकेशमसितायतकेश्यः ॥ ८० ॥

रुच्यर्थानां प्रीयमाणइति सम्प्रदानत्वम् । सुभ्रुवोरहसि तत्तद्
कुर्व्वन् । तथा हि तरुण्यः अनुकूलं वर्त्तन्तइत्यानुकूलिकाः ।
तत्प्रत्यनुपूर्व्वमीपलोमकूलमिति ठक् । तासाम्भावस्तत्ता तया आनु
कूलिकतया अनुकूलवर्त्तितयैव नराणां पुंसां हृदयान्याक्षिपन्त्या
वर्जयन्तीत्यर्थान्तरन्यासः ॥ ७९ ॥

प्राप्येति । दुर्व्वहः स्तनभरोयासान्ता एतेनोपरिसुरतं व्यज्यते ।
अन्यथा विशेषणवैयर्थ्यात् । असिताआयताश्च केशायासान्ताअसिता
यतकेश्यः स्त्रियः । स्वाङ्गाच्चेत्यादिना ङीप् । मन्मथरसात् स्मर
रागात् सुरतस्यातिभूमिम्पराङ्काष्ठाम्प्राप्य महान्तं सुरतम्प्राप्ये
त्यर्थः । श्रमजलेन स्वेदाम्बुना आर्द्रे ललाटे श्लिष्टाः केशायस्मिन्
कर्म्मणि तद्यथा तथा शश्रमुः इति सानुभावस्य श्रमभावोक्तिः
भावनिबन्धनात्प्रेयोऽलङ्कारः ॥ ८० ॥

अथ सुरतावसानं वर्णयति । सङ्गताभिरिति । उचितैः परि
चितैः प्रियतमैः सह सङ्गताभिर्वधूभिः प्राक् सुरतादौ चलिता
गन्तुं प्रचलितापि ह्रीः सखीव चिरेणामुच्यत मुक्ता । न सहतइत्य
सहा । पचाद्यजन्तेन नञ्समासः । विरहस्यासहा विरहमसह
माना सतीत्यर्थः । कर्तृकर्म्मणोः कृतीति कर्म्मणि षष्ठी । रतान्ते
भूयएव वधूभिः समगंस्त सङ्गता सखीवेत्येव । सम्पूर्व्वात्

सङ्गताभिरुचितैश्चलितापि
प्रागमुच्यत चिरेण सखीव।
भूयएव समगंस्त रतान्ते
ह्रीर्वधूभिरसहा विरहस्य ॥ ८१ ॥
प्रेक्षणीयकमिव क्षणमासन्
ह्रीविभङ्गुरविलोचनपाताः।
सम्भ्रमद्रुतगृहीतदुकूल
च्छाद्यमानवपुषः सुरतान्ताः ॥ ८२ ॥

इमेर्लुङ् समोगम्मृच्छिभ्यामित्यात्मनेपदं वागमइति सिचः पक्षे किल्वाभावादनुदात्तोपदेशेत्यादिनानुनासिकलोपेन। सुरतेतर काले स्त्रीणां लज्जैव भूषणमिति भावः। उपमालङ्कारः ॥ ८१ ॥

प्रेक्षणीयकमिति। ह्रिया विभङ्गुराः स्खलिताविलोचनपाता दृष्टिपातायेषु ते सम्भ्रमेण द्रुतं गृहीतेन दुकूलेन छाद्यमानानि वपूंषि अन्तरङ्गाणि येषु ते सुरतान्ताः सुरतावसानानि क्षणं प्रेक्षणीयकं दृश्यमिवासन् इत्युपमा। नाटकादिरूपकेष्वाहार्य्यकं वस्तु तद्दृश्यं प्रेक्षणीयकमिति चोच्यते इहाविर्भावतिरोधानादिना तत्तुल्यत्वम् ॥ ८२ ॥

अप्रभूतमिति। तन्वी कृशाङ्गी अभीष्टतमेन प्रेयसा क्रान्तपल्लवं गृहीताञ्चलं अतएवातनीयसि महीयसि काञ्चिधाम्नि जघने अप्रभूतञ्छादयितुं अपर्य्याप्तं अतएव पिहितञ्छादितरकतर एवोरुर्येन तत् क्षौमन्दुकूलं आकुलकरा व्यग्रपाणिः सती विचकर्ष

अप्रभूतमतनीयसि तन्वी
काञ्चिधाम्नि पिहितैकतरोरु ।
क्षौममाकुलकरा विचकर्ष
क्रान्तपल्लवमभीष्टतमेन ॥ ८३ ॥

मृष्टचन्दनविशेषकभक्ति
र्भ्रष्टभूषणकदर्थितमाल्यः ।
सापराध इव मण्डनमासी
दात्मनैव सुदृशामुपभोगः ॥ ८४ ॥

कृतस्तत्पिधानार्थमाचकर्ष लज्जानुभावोऽयम् । अत्र क्षौमविशेष
णानामाकर्षणहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ८३ ॥

मृष्टेति । मृष्टा प्रमृष्टा चन्दनानां विशेषकाणान्तमालपत्राणाञ्च
भक्तीरचना येन सः । तमालपत्रतिलकचित्रकाणि विशेषक
इत्यमरः । भ्रष्टानि भूषणानि यस्मिन् स भ्रष्टभूषणः कुत्सि
तोऽर्थः कदर्थः । लोकतो विशेष्यलिङ्गत्वम् । कोः कत्तत्पुरुषेऽचीति
कुशब्दस्य कदादेशः । कदर्थानि कृतानि कदर्थितानि दूषितानि
माल्यानि येन सः । ततस्तयोर्वैवचिकविशेष्यविशेषणभावाद्विशेषण
समासः । एवम्भूत उपभोगः सापराध इव पूर्वमण्डनापहारात्कृता
पराध इव सुदृशामात्मनैव स्वयमेव । प्रकृत्यादित्वात् तृतीया ।
मण्डनमासीत् । प्रतिविधिकरणेन स्वापराधनिरासार्थमिवेत्युत्प्रेक्षा ।
स्त्रीणां सम्भोग एव मण्डनन्तदभावे मण्डनान्तरस्याप्यमण्डनत्वा
दिति भावः । ८४ ॥

योषितदृति । मोहनातिरभसेन सुरतसम्भ्रमेण पतिता
काञ्चनी काञ्चनस्य विकारा काञ्चिर्यस्मात्तस्मिन्निर्मेखले योषितो

योषितः पतितकाञ्चनकाञ्चौ
मोहनातिरभसेन नितम्बे ।
मेखलेव परितः स्म विचित्रा
राजते नवनखक्षतलक्ष्मीः ॥ ८५ ॥

भातु नाम सुदृशां दशनाङ्कः
पाटलोऽधवलगण्डतलेषु ।
दन्तवाससि समानगुणश्रीः
सम्मुखोऽपि परभागमवाप ॥ ८६ ॥

सुभ्रुवामधिपयोधरपीठं
पीडनैस्त्रुटितवत्यपि पत्युः ।
मुक्तमौक्तिकलघुर्गुणशेषा
हारयष्टिरभवद्गुरुरेव ॥ ८७ ॥

नितम्बे परितः सर्व्वतो विचित्रा विविधरचना नवनखक्षतलक्ष्मी मेखलेव राजते स्म । उत्प्रेक्षालङ्कारः ॥ ८५ ॥

भात्विति । सुदृशां सम्बन्धी पाटलोऽरुणो दशनाङ्को दन्तक्षतं धवलगण्डतलेषु कपोलेषु भातु नाम वैवर्ण्याद्भेदेन प्रकाशतां नामेत्यङ्गीकारे । दन्तवाससि अधरे तु समानगुणश्रीस्तुल्यवर्णोऽपि तथा सम्मुखोऽपि सन् परभागं गुणोत्कर्षत्वया पश्चाद्भागश्चाव दूति सावर्ण्यवैवर्ण्ययोः सम्मुखपराङ्मुखत्वयोश्च विरोधः उपरिभाग त्वावापेत्युभयत्र परिहाराद्विरोधाभासद्वयसंसृष्टिः तच्चाद्यः श्लेष भित्तिकाभेदाध्यवसायमूलस्तद्गुणोत्थापितदूति सङ्करः ॥ ८६ ॥

सुभ्रुवामिति । सुभ्रुवाम्पयोधरपीठके कुचतटे अधिपयोधर पीठं । विभक्त्यर्थेऽव्ययीभावः । पत्युः पीडनैः परिरम्भादिविमर्दै

विश्रमार्थमुपगूढमजस्रं
यत्प्रियैः प्रथमरत्यवसाने ।
योषितामुदितमन्मथमादौ
तद्द्वितीयसुरतस्य बभूव ॥ ८८ ॥

त्रुटितवती छेदङ्गतापि । अतएव मुक्तमौक्तिका सा च सा लघुश्च अतएव गुणशेषा सूत्रमात्रशेषापि हारयष्टिर्गुरुः स्लाघ्यैवाभवत् । लघुरपि गुरुरिति विरोधाभासोऽलङ्कारः ॥ ८७ ॥

विश्रमेति । योषितां प्रथमरत्यवसाने विश्रमार्थं श्रमापनोदार्थं । श्राम्यतेर्घञ्प्रत्ययः नोदात्तोपदेशस्य मान्तस्यानाचमेरिति वृद्ध्यभावः । अजस्रम्प्रियैरुपगूढं उपगूहनम् । नपुंसके भावे क्तः न लोकेत्यादिना षष्ठीप्रतिषेधः । उदितमन्मथमुत्पादितकामं अतएव तदुपगूहनं द्वितीयसुरतस्यादौ बभूव । श्रमापनोदमन्मथोद्बोधाभ्यां उभयोपयोगादुभयार्थमभूत् संयोगपृथक्त्वन्यायादित्यर्थः अत्र मध्यवर्त्तिन उपगूढस्यैकस्य पूर्वोत्तरसुरतशेषत्वेन विशेषणगत्या विश्रमार्थोदितमन्मथपदार्थयोर्हेतुत्वात्काव्यलिङ्गद्वयन्तदङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ ८८ ॥

आस्तृतेति । अनारतमश्रान्तं रते सुरते अभिरताभ्य आसक्ताभ्यो वधूभ्यः क्षणमुत्सवसुखन्ददातीति क्षणदा रात्रिस्तयपि अभिनवैः पल्लवैः पुष्पैश्चास्तृते आच्छादितेऽपि सुखशयनार्हेऽपीत्यर्थः । शेतेऽस्मिन्निति शयनीये तल्पे । कृत्यल्युटो बहुलमित्यधिकरणेऽनीयर् । शयितुं शयनं कर्त्तुं क्षणोऽल्पकालोऽपि न दीयते स्म न दत्तः किन्त्वाप्रभातमरमयत् क्षण

आस्तृतेऽभिनवपल्लवपुष्पै
रप्यनारतरताभिरताभ्यः ।
दीयते स्म शयितुं शयनीये
न क्षणः क्षणदयापि वधूभ्यः ॥ ८९ ॥

योषितामतितरान्नखलून
ङ्गात्रमुज्ज्वलतया न खलूनम् ।
क्षोभमाशु हृदयन्नयदूनां
रागवृद्धिमकरोन्न यदूनाम् ॥ ९० ॥

दात्वादेवेति भावः क्षणदयापि क्षणोन्न दत्त इति विरोधस्यो त्सवार्थत्वेन परिहाराद्विरोधाभासोऽलङ्कारः । निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण इत्यमरः ॥ ८९ ॥

योषितामिति । नखलूनं न खलु ऊनं नयत् ऊनां न यदूनां इति पदच्छेदः । अतितरामतिमात्रं । अव्ययादामुप्रत्ययः । नखै र्लूनं क्षतं नखलूनं । ल्वादिभ्यश्चेति निष्ठानत्वम् । तथाप्युज्ज्वल तया औज्ज्वल्येन न ऊनं न न्यूनं किन्तु समग्रमेवेत्यर्थः । नख क्षतानां कामिनीगात्रमण्डनत्वादिति भावः । अतएवाशु हृदयम्प्रियचित्तं क्षोभं विकारं नयत् प्रापयत् । नयतेर्लटः शत्रादेशः । योषिताङ्गात्रं यदूनां यादवानां रागवृद्धिं ऊन न्यूनां नाकरोत् खलु किन्तु भूयोऽपि समग्रमेवाकरोदित्यर्थः । अत्र यमकशब्दालङ्कारः औज्ज्वल्यस्य विशेषणगत्या रागवृद्धि हेतुत्वात्काव्यलिङ्गमर्थालङ्कारः ॥ ९० ॥

इति मदमदनाभ्यां रागिणः स्पष्टरागा
ननवरतरतश्रीसङ्गिनस्तानवेक्ष्य ।
अभजत परिवृत्तिं साथ पर्य्यस्तहस्ता
रजनिरवनतेन्दुर्लज्जयाधोमुखीव ॥ ९१ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये सुरतवर्णनोनाम दशमः सर्गः समाप्तः ॥ १० ॥

इतीति । इतीत्थं मदमदनाभ्यां स्पष्टरागान् सर्व्वदा रागिणोऽपि तदा ताभ्यामपि व्यञ्जितरागानित्यर्थः अनवरतरतश्रीसङ्गिनः अविच्छिन्नसुरतसम्पत्सम्पृक्तान् तान् रागिणोरागिण्यश्च रागिणश्च तान् रागिणः । पुमान् स्त्रियेत्येकशेषः । अवेक्ष्य अथावेक्षणानन्तरं पर्य्यस्तः परिवृत्तोहस्तोनक्षत्रविशेषः करश्च यस्याः सा । हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपीत्युभयत्रापि विश्वः । अवनतेन्दुः ग्रस्तचन्द्रा अतएव सा रजनिर्लज्जया ग्राम्यचेष्टादर्शनजनितयेति भावः अधोमुखी नम्रमुखीवेत्युत्प्रेक्षा । परिवृत्तिं निवृत्त्युन्मुखताम भजत प्रभातप्रायाऽभूदित्यर्थः । स्त्रियोहि परकीयग्राम्यचेष्टा दर्शने त्रपावनतमुख्योहस्तेन दृष्टिमन्तर्धाय द्रागपसरन्तीति भावः अतएवानन्तरसर्गे प्रभातवर्णनाय प्रस्ताव । मालिनीवृत्तमेतत् लक्षणं तूक्तं वक्ष्यते चोत्तरचर्म्मादौ ॥ ९१ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघव्याख्याने सर्व्वङ्कषाख्ये दशमः सर्गः समाप्तः ॥ १० ॥

॥ समाप्तमिदम्पूर्व्वार्द्धम् ॥

